KÂVYAMÂLA. 61.



# THE HARACHARITACHINTÂMANI

OF

RÂJÂNAKA JAYARATHA.

---

EDITED BY

MAHÂMAHOPÂDHYÂYA PANDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

---

1897.

---

*Price 1½ Rupees*

काव्यमाला ६१.

राजानकश्रीजयरथविरचितो

# हरचरितचिन्तामणिः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबो-
पाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा
च संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८९७



मूल्यं सपादत्रयो रूप्यकः ।

# हरचरितचिन्तामणयन्तर्गततीर्थादिनामधेयानामनुक्रमणिका व्याख्यायुता श्रीडॉक्टरस्टैन्साहिबाज्ञानुसारिणा कश्मीरदेशनिवासिना पण्डितगोविन्दकौलेन विरचितेयम् ।

**अचलाख्यगणेश्वरः**-। १४।७८ अचलनामा गणेश्वरोऽयं कपटेश्वरस्थाने नित्यमेव वसति ।

**अचला** नदी । १०।२५६ अचला नद्येषा विजयेश्वरनिकटस्थैवावबुध्यते । अस्या नाम वितस्तामाहात्म्यविजयेश्वरमाहात्म्ययोरपि लभ्यते ।

**अनन्तभवनम्** । १०।२५३ अनन्तभवनमिदमधुना 'अनथ्नाग्'नाम्ना ख्यातं 'अनथ्नाग्'नाम्नि पुरगण एव लभ्यते । नामास्यापि विजयेश्वरमाहात्म्यनीलमतपुराणयोर्लभ्यते ।

**अनन्तह्रदः** । १०।२५६ अयमनन्तह्रदः 'अनथ्नाग्'पुरगणीयस्य 'अनथ्नाग्'नामकनागस्य द्वितीयपर्यायः ।

**उत्तरगङ्गा** । ४।५४ उत्तरगङ्गैषा हरमुकुटगङ्गा मानसोत्तरगङ्गानामिका चास्ति । कश्मीरैकभाग'लार्'पुरगणे ख्यातैषा।अस्याश्च 'गङ्गबल्' इति काश्मीरिकं नाम । विशिष्टव्याख्यास्याः श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १ तरङ्गे ५७ श्लोके द्रष्टव्या ।

**उत्तरजाह्नवी** । १२।४९ उत्तरां दिशमाश्रिता सती वितस्ता नदी उत्तरजाह्नवीत्याख्यां लभते ।

**उत्तरमानसम्** । ४।८७ उत्तरमानसमिदं गङ्गासरसो 'गङ्गबल्' इति प्रसिद्धस्य नाम, यस्मात् हरमुकुटगङ्गा निर्गच्छति । विशिष्टव्याख्यास्य हरमुकुटगङ्गामाहात्म्ये, तथा श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे ३।४४८ द्रष्टव्या ।

**उपमन्युमुनेस्तपोधाम** । १०।२५७ इदं तपःस्थानमचलानदीतीरगमेवावगम्यते विजयेश्वरक्षेत्रनिकटे ।

**कपटवामनः** विष्णुः । १४।६८ कपटवामननामा विष्णुरयं कश्मीरैकदेश'मटन्'-पुरगणीय'कूठ्हेर्'ग्रामे स्थितस्य कपटेश्वरस्य सहचरः ।

**कपटेश्वरः कपटेशः** । १४।३४ कपटेश्वरोऽयं कपटेश्वरनाम्नैव कश्मीरैकदेश'मटन्'-पुरगणे 'कूठ्हेर्'ग्रामे कुण्डाकृति महादेवस्थानम् । विशिष्टव्याख्यास्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।३२,७।१९० द्रष्टव्या ।

**कपालमोचन**तीर्थम् । १४।१११ कपालमोचनतीर्थमिदमपि कपटेश्वरस्थाने सदा संनिहितम्, कपालमोचनतीर्थं विजयेश्वरक्षेत्रतीर्थगणमध्येऽपि, तथा 'शुपयन्'पुरगणीय'दिगौम्'ग्रामेऽपि ।

**कपालमोचनं** तीर्थम् । १०।२४९ तीर्थमिदं 'कपालमोचन्'नाम्ना ख्यातं विजयेश्वरक्षेत्रमध्य एव। अस्यान्यत्स्थानं च 'शुपियन्'पुरगणे 'दिगोम्'ग्रामे भवति ।

**कपिलातीर्थम्** । १४।११३ कपिलातीर्थमिदं कपटेश्वरीयतीर्थगणमध्य एव व्यवस्थितम् ।

**कश्मीरमण्डलम्, कश्मीरा** । १४।४५ कश्मीरदेशोऽयम्, यस्य तत्रत्यभाषायां 'कशीर्' इति नामास्ति । विशिष्टव्याख्यास्य नाम्नः श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादभूमिकायां द्रष्टव्या ।

**कार्कोटह्रदः** । १०।२५६ कार्कोटह्रदोऽयं 'कार्कूद्रनाग्'नाम्ना प्रसिद्धः 'खावुर्पोर्'पुरगणे लभ्यते ।

**कार्तिकेयः** । १४।९९ अयं कुमारः कपटेश्वरस्थाने शिवोद्यानकदलीद्वाररक्षकः । अस्यैव प्रसादात्कपटेश्वरद्वारप्राप्तिः ।

**कालविमल**प्रभृतिस्तीर्थपञ्चकः । ४।८३ अत्र कालसरः कालोदकं सर इति नामनी कालतीर्थस्यान्ये । अस्य च कश्मीरभाषायां 'कोल्' इति नाम । लभ्यते चैतन्नन्दिक्षेत्रेण सह, यतः समस्तं 'नुन्द्कोल्' इति नाम कथयन्ति । अन्ये तावदज्ञाताः ।

**कालिञ्जर**महीधरः । २५।४२ कालिञ्जरपर्वतोऽयं मध्यदेशे वाण्डलखण्ड्विषये प्रसिद्धः । किं तु कालिञ्जरदेशः कश्मीरदेशप्रान्तभूमिस्थितोऽस्ति । कल्हणराजतरङ्गिण्यामपि-७।१२५६ नामास्य लभ्यते ।

**काश्मीरिकाङ्गरागः** । २५।७९ काश्मीरिकाङ्गरागः कुङ्कुमाङ्गरागः, यदस्य कुङ्कुमस्य कश्मीरजन्मेत्यपि नाम, वर्तते च कश्मीरायां बहुषु स्थलेषु 'कुङ्ग्' इति नाम्ना ।

**काष्ठमयो** देवः । १४।१३५ काष्ठमयदेव इत्यपि कपटेश्वरस्यैवान्यन्नाम ।

**काष्ठरूपः** । १।२९ काष्ठरूप इत्यपि कश्मीरैकदेश'मटन्'पुरगणीय'कूठेर्'ग्रामे स्थितस्य कपटेश्वराख्यशिवस्यान्यन्नाम । विशिष्टव्याख्यास्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।३२ द्रष्टव्या ।

**कुमारः, कुमार**तीर्थम् । १४।११२ कुमारतीर्थमिदं कपटेश्वरीयतीर्थगणमध्ये व्यवस्थितम् ।

**कुलोद्धरणिका** । १०।२४७ एषा नदी विजयेश्वरनिकट एव वितस्तया सह संगमं याति । अस्या नीलमतपुराणेऽपि नाम लभ्यते ।

**कृष्णा** । १२।४४ कृष्णा नद्येषा कृष्णगङ्गानाम्ना प्रख्यातास्ति । एषा च 'दुमेल्' वा 'मुज़फराबाद्' इत्याख्ये स्थाने दृश्यते । अनया सहापि वितस्ता नदी संगमं याति । अयं च

देशः कश्मीरायाः सीमेव । व्याख्यानं विशिष्टमस्याः श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे ७।५८६ द्रष्टव्यम् ।

**केदारारम्भः, केदारः** । ८।६९ केदारतीर्थमिदं 'कित्रिटेङ्'नाम्ना प्रसिद्धं कश्मीरैकदेश'दच्छयुन्पोर्'पुरगणे विजयेश्वरस्याधस्तादेकक्रोशदूरतायां लभ्यते । विजयेश्वरमाहात्म्येऽस्य वर्णनं बहुशोऽस्ति ।

**क्रोधेश्वरः** । २।१२८ अयं शिवोऽज्ञातस्तावत् ।

**खण्डपुच्छनागस्य भवनम्** । १०।२५१ खण्डपुच्छनागोऽयमधुना 'खनबल्'नाम्ना ख्यातोऽस्ति । लभ्यते चायं ग्रामो विजयेश्वरक्षेत्रादूर्ध्वं सार्धक्रोशद्वयदूरतायां 'अनथ्नाग्'पुरगणे । नीलमतपुराणेऽप्यस्याम्नानम् ।

**खार्खोटः** । २।१२५ खार्खोटोऽयं वेतालस्य विशेषः । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे ४।९४ द्रष्टव्या ।

**गणनाथः जम्बुकरूपः** । १४।१२६ गणेशोऽयं जम्बुकरूपः कपटेश्वरस्थदेवतागणमध्यस्थः ।

**गम्भीरा** । १०।१९२ एषा नदी 'गम्भीरसंगम्' 'संगम्'नाम्ना च ख्याता, विजयेश्वरस्याधस्तात् 'दच्छयुन्पोर्'पुरगणे 'महोम्'ग्रामनिकटे भवति । विशोकानद्या अन्तिमभागेन सह वितस्तानद्याः संगमोऽयम् । विशिष्टव्याख्यास्याः श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे ८।१०६३ द्रष्टव्या ।

**गौरीश्वरः** । ६।३८ अयं तावदज्ञातः, परंतु राजतरङ्गिण्यां ७।१८१ सूर्यमत्या अनन्तदेवराज्ञ्या कृत एको गौरीश्वरो लभ्यते ।

**चक्रतीर्थम्** । ७।६१ तीर्थमिदं च 'दच्छयुन्पोरु'पुरगणे 'विज्यब्रोरू'निकटे 'च़कदर्'स्थलेऽस्ति । अतश्चक्रधरस्यैव नामान्तरमिदम् ।

**चक्रतीर्थम्** । १४।११३ चक्रतीर्थमिदं कपटेश्वरीयतीर्थगणमध्य एव व्यवस्थितमस्ति ।

**चक्रधरः** । ७।६४ चक्रधरोऽयं 'च़कदर्'नाम्ना कश्मीरैकदेश'दच्छयुन्पोर्'पुरगणे विजयेश्वरस्य 'विज्यब्रोरू' इति ख्यातस्य निकटेऽस्ति । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे १।३८ द्रष्टव्या ।

**चण्डरुद्रगणः** । १५।३४ अस्य चण्डरुद्रगणस्य स्थानं तावन्न ज्ञायते ।

**चतुर्वेदी** । १२।३६ नदी चतुर्वेद्येषा वितस्ताप्रादुर्भूत्या सहैव प्रादुर्भवन्ती ज्ञाता । परंतु स्थितिरस्या अपि न ज्ञायते तावत् ।

**चन्द्रतीर्थम्** । १०।२४१ चन्द्रतीर्थमिदं विजयेश्वरपादमूले प्रवहन्त्या नद्या जलेऽस्ति । अत एवास्य विजयेश्वरस्थानस्य 'चन्द्रन्यार्' इत्यपि काश्मीरिकं नाम ख्यातं भवति ।

**चन्द्रभागा** । १२।४४ मध्यदेशे प्रवहन्त्यानया सह वितस्तासंगमायाम्नानमस्त्यत्रास्याः। 'चीनाव्'नद्या सह वितस्ता यत्र संगच्छति तत्रानेन नाम्ना व्यपदेशः ।

**जम्बुकाख्यः** । १४।६८ जम्बुकनामा शिवोऽयं जम्बुकेश्वरनाम्ना च प्रथितः, कश्मीरैकदेश'मटन्'पुरगणे 'कूठेर्'ग्रामे स्थितस्य कपटेश्वरस्यैव मूर्तिभेदः ।

**जम्बुकेश्वरः** । १४।१२५ जम्बुकेश्वरनामा शिवोऽयं कपटेश्वरस्थदेवतागणमध्यस्थः । जम्बुकाख्यशिवस्य तत्रत्यस्यायं जम्बुकेश्वर इति द्वितीयपर्यायः ।

**त्रिकोटिः** । १२।३६ नदी त्रिकोटिरेषा वितस्तानदीप्रादुर्भावकाले प्रादुर्भूतास्ति । 'त्रिकट्' इति नाम काश्मीरिकमस्त्यस्याः ।अस्या नीलमतपुराणेऽप्याम्नानम् । किं तु स्थितिरस्या न ज्ञाता ।

**त्रिपुरेश्वरः** । १३।२०० त्रिपुरेश्वरोऽयं त्रिपुरेश्वरनाम्नैव कश्मीरैकदेश'फाक्'पुरगणे 'त्रिफर्'ग्रामे भवति । केऽपि ज्येष्ठेश्वरं त्रिपुरेश्वरं चैकमेव कथयन्ति । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे ५।४६ द्रष्टुमर्हा ।

**दिण्डिशूलकदम्बकः** । ४।६३ स्पष्टं न ज्ञातोऽयम्, किंतु इदं तीर्थं नीलमतपुराणनन्दिक्षेत्रमाहात्म्ययोरप्याम्नातमस्ति ।

**दितिः** । १२।३६ दितिनामिकाप्येषा नदी वितस्तानदीप्रादुर्भूतिकाल एव प्रकटीभूतास्ति । नीलमतपुराणेऽप्याम्नातैषा । स्थितिरस्याः काश्मीरिकं नाम च न ज्ञातम् ।

**दृषद्वती** । १४।३९ दृषद्वती नद्येषा नीलमतपुराणेऽपि लभ्यते, परंतु न ज्ञायते कुत्रैषा नदीति ।

**देवदारुवनाभिधमाश्रमम्, देवदारुतपोवनम्** । १०।३ देवदारुवनमिदं विजयेश्वरमाहात्म्येऽपि बहुशो ह्याम्नातमस्ति । परंतु विजयेश्वरनैकट्य एवानेन भाव्यम् । काश्मीरिकं स्पष्टं नामास्य तावदज्ञातम् ।

**धनाध्यक्षः** । १४।१२४ अयं कुबेरो धनाध्यक्षनाम्ना कपटेश्वरस्थदेवतागणमध्य एव । अतस्तत्रत्या वैश्रवणधनेश्वरधनाध्यक्षनामानस्त्रयः कुबेरमूर्तिभेदाः ।

**धनेश्वरः** । १४।१०३ धनेश्वरनामा कुबेरोऽयं कपटेश्वरस्थो मूर्तिमत्तया वर्तमानो भक्तानुग्राहकः । अतोऽत्रत्यस्य वैश्रवणस्यान्यो मूर्तिविशेषः ।

**नन्दिपर्वतः** । ४।३० नन्दिगिरिः, नन्द्युदकम्, इत्यपि नामनी ह्यस्य । नन्दिपर्वतोऽयं कश्मीरदेशस्थहरमुकुटगङ्गानिकटे पर्वतः, यस्य चाधस्तान्नन्दिसरः, कालसरश्चेत्याख्यं सरोवरद्वयमस्ति, तयोश्च 'नुन्द् कोल्' इति काश्मीरिकं नामद्वयम् । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे १।३६ द्रष्टव्या ।

**नन्दी** गणः मषकः । १४।७४ नन्दिरुद्रनामा महादेवानुचरो गणोऽयं मषकरूपः कपटेश्वरस्थानस्थः स्पर्शमात्रेणैव लोकानुग्राहकः ।

**नरसिंहाश्रमः** । १२।२८ स्पष्टं तावन्न ज्ञातोऽयम् । अस्मिन्देशेऽपि निर्गच्छन्ती वितस्ता पुनरन्तर्धानं गता ।

**नलिनी** । १४।१०१ नलिनी नद्येषा कपटेश्वरस्थलस्था शतह्रदाख्यान्यनद्या सह संगमं याति, अतोऽत्र कपटेश्वरे नलिनीशतह्रदासंगमतीर्थमपि ।

**नारी**माता । १४।६८ एषा देवीमूर्तिरपि नारीमातेति नामिका कपटेश्वरस्थानस्थैव ज्ञेया ।

**नीलकुण्डम्** । १२।१७ नीलकुण्डमिदं 'नीलनाग्' वा 'वेर्नाग्' इति ख्यातस्यैव नागस्य नामान्तरम् । 'शाह्बाद्'पुरगणस्थस्य नीलस्य नागाधिपतेरिदं कुण्डम् । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे १।२८ द्रष्टव्या ।

**नीलाख्यः** भुजगेश्वरः । १२।१६ नीलनामकभुजगेश्वरोऽयं 'नीलनाग्' 'वेर्नाग्' इति नामद्वयेन कश्मीरैकदेश'शाह्बाद्'पुरगणीय'वेर्नाग्'ग्रामेऽस्ति। नीलोऽयं कश्मीरास्थसकलनागानामधिपतिर्नीलमतपुराणकर्ता च ज्ञेयः । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे १।२८,१८२ द्रष्टव्या ।

**नौबन्धनं सरः** । ४।२७ सरोवरोऽयं कश्मीरपञ्चापदेशावधिभूते पर्वतशिखरेऽस्ति, यस्य विष्णुपादाकृतिसरसः विष्णुपादः क्रमसरश्चेत्यप्यन्ये नामनी। सरश्चायं कश्मीरदेशैकदेशे 'दिवसर्' पुरगणेऽस्ति । अस्मात्सरसः पञ्च नद्यः प्रवहन्ति, यद्व्यपदेशेन पञ्चापदेशस्याप्यन्वर्थता ।

**पञ्चतपः** नाम तीर्थम् । १०।२४५ इदं तीर्थमपि विजयेश्वरक्षेत्रमध्यगमेवावधार्यम्, विजयेश्वरमाहात्म्येऽपीत्थमेवास्य नाम लभ्यते ।

**पञ्चहस्तस्य** भवनम् । १२।२२ नागस्य पञ्चहस्तस्य भवनमिदं 'पांजथ्नाग्' नाम्ना प्रसिद्धं 'दिवसर्'पुरगणस्थित'पांज़थ्'ग्रामेऽस्ति । कह्लणराजतरङ्गिण्यामस्य पञ्चहस्ता इत्यपि नामोक्तम् । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे ५।१२४ द्रष्टव्या ।

**पादप्लवाभिधं** तीर्थम् । १२।३७ इदं पादप्लवतीर्थं विजयेश्वरक्षेत्रस्थितवितस्तानद्यामेव ज्ञेयम् । यद्ग्रन्थेऽस्मिन्नपि तथैवानुमीयते ।

**पादोदकप्लवं** तीर्थम् । १०।२४६ इदं तीर्थमपि विजयेश्वरक्षेत्रतीर्थमध्यस्थमेव । विजयेश्वरमाहात्म्येऽप्यस्य नाम लभ्यते ।

**पापसूदनतीर्थम्** । १०।२५५ इदं तीर्थमपि विजयेश्वरक्षेत्रस्थतीर्थमध्यगमेवास्ति । विजयेश्वरमाहात्म्येऽप्यस्य नाम लभ्यते ।

**पापसूदनः** । १४।३६ पापनिसूदन-पापसूदनतीर्थे चेत्यस्यान्ये नामनी, तथा 'संकर्षण् नाग्' इति प्रथितद्वितीयनाम्नास्येदं 'पापसूदन् नाग्' इत्यपि काश्मीरिकं नामान्तरं ज्ञेयम्। अतः 'कपटेश्वर्''संकर्षण् नाग्' 'पापसूदन्'नामानि त्रीणीमान्येकस्यैव कपटेश्वरस्य कश्मीरभाषायां सन्ति । व्याख्यानमस्य विशिष्टं श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे १।३२ तथा ७।१९१ द्रष्टव्यम् ।

**पावकतीर्थम्** । ११।२६ इदं पावकतीर्थं कश्मीरैकदेश'नागाम्'पुरगणीय'पिङ्गिल्युन्'-ग्रामे स्थितस्य पिङ्गलेश्वरस्याश्रिततमं ज्ञेयम् ।

**पिङ्गलेश्वरः** । १।२६ पिङ्गलेश्वरनामा शिवोऽयं कश्मीरैकदेशस्य 'नागाम्'पुरगणे 'पिङ्गिल्युन्'ग्रामे ख्यातो वर्तते ।

**पुण्डरीकः** । ४।६३ स्पष्टं न ज्ञातोऽयम्, किंतु तीर्थमिदं नीलमतपुराणनन्दिक्षेत्रमाहात्म्ययोरप्याम्नातमस्ति ।

**पुष्करतीर्थम्** । १४।१११ पुष्करतीर्थमिदं कपटेश्वरस्थतीर्थगणमध्यगं सत्तत्र सदा संनिहितम् । अन्यत्पुष्करतीर्थं कश्मीरैकदेशस्य 'बीरू'पुरगणे 'पुष्कर्'नाम्नि ग्रामेऽपि वर्तते ।

**प्रभासतीर्थम्** । १४।१११ प्रभासतीर्थमिदं कपटेश्वरस्थाने सदा संनिहितमस्ति ।

**प्रमथकः गणः** । १०।१९९ अयं प्रमथकनामा गणविशेषो विजयेश्वरक्षेत्रस्थानं सर्वदा रक्षति । विजयेश्वरमाहात्म्येऽप्ययं बहुश आम्नातोऽस्ति ।

**बिन्दुनादेशः** । १३।२०० अयं बिन्दुनादेशोऽपि त्रिपुरेश्वरस्यैव पर्याय इवास्माद्ग्रन्थाल्लभ्यते, किंतु स्पष्टा न ज्ञातास्य स्थितिः ।

**बिलपथः** । १२।१५ अयं बिलपथस्तस्य देशस्य नामास्ति, यस्मिन्देशे श्रीमहादेवत्रिशूलभिन्नरन्ध्रादादौ वितस्ता नदी निश्चक्राम । नीलमतपुराणेऽप्येतदाख्यातमस्ति ।

**बिलमुत्तमम्** । १२।१७ बिलमुत्तममित्यपि श्रीमहादेवत्रिशूलभिन्नरन्ध्राद्यस्माद्वितस्ता नद्यादौ निर्गता तस्यैव नाम भवति, अत इदं बिलपथशूलघातयोरन्यन्नामान्तरमवबुध्यते ।

**बृहत्सिन्धुः** । १२।४५ अस्याश्च बृहत्सिन्धोः 'वड्सिन्द्' इति ख्यातं काश्मीरिकं नाम भवति । वितस्तानद्या अन्यान्यनदीसंगताया इदं नाम ज्ञायते । वितस्तामाहात्म्येऽप्याम्नातैषास्ति ।

**ब्रह्मा ब्रह्मतीर्थम्** । १४।११२ ब्रह्मतीर्थमिदं कपटेश्वरीयतीर्थगणमध्ये व्यवस्थितमस्ति ।

**भरद्वाजमुनेर्लिङ्गम्** । १०।२६४ भरद्वाजर्षिप्रतिष्ठितं लिङ्गमिदमपि विजयेश्वरक्षेत्रस्थतीर्थगणमध्यगतमेवास्ति ।

**भीमादेवी** । ४।४७ एषा भीमादेवी कश्मीरैकदेश'फाक्'पुरगणीय'ब्रैण्'ग्रामेऽस्ति । भीमा देव्येषा कह्लणराजतरङ्गिण्या द्वितीये तरङ्गे उक्तास्ति । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे २।१३५ द्रष्टव्या ।

**भूतेश्वरः** । ४।८५ भूतेश्वरनामा शिवोऽयमधुना 'वुथ्य्शेर'नामा पर्वतः षट्क्रोशमितो हरमुकुटगङ्गायात्रायाः प्रत्यावर्तनकाले 'लार्'पुरगणे यात्रिकैर्दृश्यते । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे २।१४८ द्रष्टव्या ।

**भोगप्रस्थ** । १२।४५ भोगप्रस्थाख्यं देशमतिक्रम्यैनं वितस्ता नदी जाह्नव्या सह संगमं कृत्वा तयैव सह याति । नीलमतपुराणेऽपीत्थमेवाम्नातमस्ति ।

**मडवावर्तनागः** । १०।२५२ मडवावर्तनागोऽयं विजयेश्वरक्षेत्रस्थवितस्तानदीमध्यग एवोपलक्ष्यते । विजयेश्वरमाहात्म्येऽप्ययं सुतरामाम्नातोऽस्ति ।

**मयलिङ्गम्** । १३।१६५ मयलिङ्गमिदं विजयेश्वरमाहात्म्येऽपि लभ्यते, परंतु स्थितिरस्य स्पष्टं न ज्ञाता ।

**महादेवः** उपमन्युप्रतिष्ठितः । १०।२५८ शिवोऽयमुपमन्युप्रतिष्ठितोऽचलानदीविजये-श्वरक्षेत्रमध्यग एवानुमीयते ।

**महादेवः** ज्योतीरूपः । १४।८० ज्योतीरूपमहादेव इति कपटेश्वरस्यैवायं नामभेदः । अतः कपटेश्वरेण साम्यमस्य ।

**मुकुटपर्वतः** । ४।८८ हरमुकुटगङ्गायात्रालभ्यहरमुकुटाख्यपर्वतस्य कश्मीरभाषया 'हर्मुख्' इति ख्यातस्यैवायं नामभेदः । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे १।३६ द्रष्टव्या ।

**मुण्डितशैलः** । ४।६१ अस्य मुण्डितशैलस्य मुण्डपृष्ठम् इत्यपि नामान्यन्नीलमतपुराणे लभ्यते । पर्वतोऽयं हरमुकुटगङ्गानिकटेऽनुमीयते, परंतु स्पष्टतया तावन्न ज्ञातः ।

**रविः, रवितीर्थम्** । १४।११२ सूर्यतीर्थमिदं कपटेश्वरीयतीर्थगणमध्ये व्यवस्थितमस्ति ।

**राजानक आहलः** । १।४ राजानकआहलोऽयमपि विजयेश्वरक्षेत्रनिवासी ग्रन्थ-कर्तुरस्य ग्रन्थसंपादने प्रेरकः ।

**राजानकहिग्गकः** । १।४ राजानकहिग्गकोऽयं ग्रन्थकर्तुरस्य ग्रन्थसंपादने प्रेरकः मूलतो विजयेश्वरक्षेत्रवास्तव्योऽस्ति। अयं स्वयंभूनाथक्षेत्रे शिवध्यानतत्परताकश्च ज्ञेयः।

**रामह्रदः** । ४।६३ तीर्थमिदं नीलमतपुराणनन्दिक्षेत्रमाहात्म्ययोरप्याम्नातमस्ति, किंतु स्पष्टं न ज्ञातम् ।

**रुद्रपादाख्यः** शिलोच्चयः । १४।८१ रुद्रपादनामा पर्वतोऽयं कपटेश्वरस्थानाधारभूत-स्थलसमीपवर्ती ज्ञायते ।

**वराहक्षेत्रम्** । १२।४३ वराहक्षेत्रमिदमधुना 'वरमुल्' इति नाम्ना प्रसिद्धमस्ति । क्रम-राज्य 'कमूराज' इति ख्यातमण्डलस्यैकदेशे 'कुहिन्'पुरगणे वर्तते । कश्मीरप्रान्तभूमि-र्नगरभागस्येदं स्थानम् । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनु-वादे ६।२०४ द्रष्टव्या ।

**वर्षः** । १०।२३८ अयं श्रीवर्षोऽस्य हरचरितचिन्तामणिकर्तृ राजानकजयद्रथस्य गुरुर्दी-क्षाकर्ता च तथा विजयेश्वरक्षेत्रनिवासी ज्ञातव्यः ।

**वह्नितीर्थम्** । १०।२६० वह्नितीर्थमिदं विजयेश्वरक्षेत्रस्थतीर्थमध्यगमेव ज्ञायते ।

**वायुः वायुतीर्थम्** । १४।११२ वायुतीर्थमिदं कपटेश्वरीयतीर्थगणमध्ये व्यवस्थितमस्ति।

**विजयेश्वरः** । १।५ विजयेशः विजयेशानः विजयः विजयक्षेत्रम् अस्य विजयेश्वर-स्यैवैतान्यन्यान्यपि नामानि सन्ति । विजयेश्वरनामा शिवोऽयं कश्मीरदेशस्थ'दच्छयुन्-पोर्'पुरगणे 'विज्यब्रोर्'ग्रामे भवति । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजत-रङ्गिण्यनुवादे १।३८ द्रष्टव्या ।

**वितस्ता** । १।२७ वितस्तैषा कश्मीरायां नगरमध्ये च प्रवहन्ती नदी 'व्यथ्' इति का-श्मीरिकनाम्ना ख्याततमा भवति । विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतर-ङ्गिण्यनुवादे १।२९ द्रष्टव्या ।

**वितस्ताख्यम्।** १२।१७ वितस्ताख्यमिदं तस्य स्थानस्य नाम, यद्वितस्तानदीप्रवाहनिर्गमनाधारभूतमस्ति। वितस्तार्क्षमित्यपि वितस्तामाहात्म्येऽस्य नाम। इदं स्थानं कश्मीरैकदेश'शाह्बाद्'पुरगणे 'विथवुतुर्'ग्रामेऽस्ति। कल्हणराजतरङ्गिण्यां तु वितस्तात्र इति नाम्नेदं लभ्यते। अतो विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे १।१०२,१०३ द्रष्टव्या।

**विशोका** नदी। ४।५५ एषा विशोका नदी 'विशव्' इति कश्मीरनाम्ना ख्याता कश्मीरैकदेश'दिवसर्'पुरगणे प्रवहति। विशिष्टव्याख्यास्य श्रीडॉक्टर्स्टैन्साहिबराजतरङ्गिण्यनुवादे ४।५ द्रष्टव्या।

**विश्ववती।** १०।१९२ एषा विश्ववत्यपि नदी कश्मीरैकदेश'दिवसर्'पुरगणे प्रवहन्त्या विशोकानद्या 'विशव्' इति ख्यातताया एव नामान्तरम्। हरचरितचिन्तामणौ १०।१९२ अनुमितं भवतीदम्।

**विष्णुः, विष्णु**तीर्थम्। १४।११२ विष्णुतीर्थमिदं कपटेश्वरीयतीर्थगणमध्ये व्यवस्थितमस्ति।

**विस्रवः** देशः। १२।२६ विस्रवाख्यं स्थानमिदं कश्मीरैकदेश'दिवसर्'पुरगणीय'पांज़थ्'ग्रामस्थ'पांज़थ्'नागस्यैकक्रोशदूरतायां लिखितमस्ति। अस्मिन्नेव स्थानेऽन्तर्धिं प्राप्तापि वितस्ता नदी पुनरुन्ममज्ज।

**वैश्रवणः** यक्षः। १४।६८ वैश्रवणयक्षनाम्नी कुबेरमूर्तिरेषा कपटेश्वरशिवस्य स्थाने स्थितैवावबोद्धव्या।

**शंकरभूतिः।** १३।२११ शंकरभूतिरयं महाशिवभक्तः स्वयंभूनाथक्षेत्रवास्तव्यो धर्मतपस्वी ज्ञेयः।

**शतह्रदतीर्थम्।** १४।१११ शतह्रदतीर्थमिदं कपटेश्वरीयतीर्थगणमध्ये स्थितमस्ति। तत्र सदा सन्निहितं च।

**शतह्रदा।** १४।१०१ शतह्रदा नद्येषा कपटेश्वरस्थलस्था नलिन्याख्यायान्यया नद्या सह संगमं याति। अतोऽत्र कपटेश्वरे शतह्रदानलिनीसंगमतीर्थमप्यस्ति।

**शिवरात्रिः।** १।४६ शिवरात्र्युत्सवोऽयं 'शिवराथ् हेरथ्' नाम्नापि काश्मीरिकेण ख्यातः फाल्गुणकृष्णत्रयोदश्यां कश्मीराख्याापि सम्यग्भवति।

**शिवा** भगवती दूती। १४।८१ शिवा भगवती दूती यद्यपि कपटेश्वरस्थैवोपलक्ष्यते तथापि शिवा भगवती कश्मीरैकदेश'भृङ्ग्'पुरगणीय'अकिन् गोम्'ग्रामे स्थितैवानुमीयते। पुराणेषु देव्याः शिवदूतीत्यपि यन्नामास्त्यतो दूतीपदसहस्थितिरत्रापि।

**शिवारुतम्।** १४।१२६ शिवारुतं स्थानमिदं कपटेश्वरस्थलेऽस्ति। अत्रैव जम्बुकरूपेण गणेशेन शब्दः कृतः। अतोऽस्य स्थानस्य शिवारुतमित्यन्वर्थं नाम भवति।

**शूलघातम्** । १२।१७ शूलघातमिदमपि यस्मिन्स्थाने महादेवत्रिशूलभिन्नरन्ध्राद्वितस्ता नदी पूर्वं निष्क्रान्ता, तस्यैव स्थानस्य नामास्ति । अतो बिलपथस्य द्वितीयपर्याय इवेदम् ।

**संकर्षणनागः** । १४।३६ संकर्षणनागोऽयमपि कश्मीरैकदेश'मटन्'पुरगणीय'कूठेर्'ग्रामे स्थितस्य कपटेश्वरस्यैव मूर्तिभेदः, यत्काश्मीरिकाः कपटेश्वरं 'संकर्षण् नाग्' इत्यपि नाम्नाकारयन्ति ।

**सतीदेशः** । १२।३ सतीदेशस्यास्य सतीसर इत्यपि नामान्तरमस्ति । 'सतीसर्' इत्यस्य काश्मीरिकं नाम ज्ञेयम् । अयं तु कश्मीराया एवान्यन्नाम भवतीत्यवबोद्धव्यम् । विशिष्टव्याख्यास्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।२५ द्रष्टव्या ।

**संध्या** । ४।४९ संध्या देव्येषा त्रिसंध्यानाम्ना कश्मीरैकदेश'भृङ्ग्'पुरगणे 'दिवलगोम्'-ग्रामनिकटे ख्यातास्ति । अस्याश्च कश्मीरभाषायां 'सुन्दब्रार्' इति नाम । अस्मिन्कुण्डे च जलप्रादुर्भूतितिरोभावे वारत्रयेणाहर्निशमथापि संभवतः । विशिष्टव्याख्यास्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।३३ द्रष्टव्या ।

**सप्तार्चास्थानम्** । ४।५१ इदं सप्तार्चास्थानं संध्यातीर्थ एव वर्तते । अस्य च स्थानस्य 'सतरिग्' इति काश्मीरिकं नामास्ति ।

**सिन्धुदेशः** । १२।४६ अस्मादेव सिन्धुदेशाद्विनिर्गता वितस्ता नदी बृहत्सिन्धुः इत्याख्यां लभते । अस्मिन्नेव देशे वितस्ता नद्येषा बृहत्सिन्धुना सह संगमं च याति ।

**सिन्धुसंबन्धिनी वितस्ता** । १२।४० एषा सिन्धुनदी कश्मीरभाषायां 'सिन्द्'नाम्ना कश्मीरेषु प्रसिद्धतमा भवति । अस्याश्च सिन्धुनद्या वितस्तानद्या सह संगमोऽपि 'परस्पोर्'पुरगणीय'शद्पोर्'ग्रामे ख्यातो वर्तते । विशिष्टव्याख्यास्य संगमस्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे ५।९७ द्रष्टव्या ।

**सुश्रवनागः** । १०।२४८ एष नागः 'सुशिरंनाग्' इति कश्मीरभाषयाधुना ख्यातोऽस्ति । अस्य शुष्कसरोवराकृतिर्विजयेश्वरक्षेत्रनिकटस्थापि लभ्यते । परं त्वयं सांप्रतं ख्याततरनाम्नामरनाथयात्रायां दृश्यते । विशिष्टव्याख्यास्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।२०३ द्रष्टव्या ।

**सोदराख्यं तीर्थम्** । १४।११० सोदरतीर्थं चेदं कपटेश्वरस्थानस्थमेव सर्वदा भवति । सोदरतीर्थं च 'सुद्रबल्'नाम्ना ख्यातं कश्मीरपुरप्रान्ते 'डल्'आख्ये सरोवरजलेऽप्यस्ति । सोदरतीर्थविशिष्टव्याख्या श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।१२३ द्रष्टव्या ।

**सोमतीर्थम्** । १०।२५७ सोमतीर्थमिदं विजयेश्वरक्षेत्रस्थतीर्थमध्यगमेवास्ति । अनुमीयते चेदं विजयेश्वरपादस्थतीर्थस्य नाम स्यादिति । यतः 'सोमयार्' इत्यपि नाम तस्य स्थानस्य तत्रत्याः कथयन्ति । सोमतीर्थं चैकं राजतरङ्गिण्यामपि ८।३३६० लभ्यते।

**सौरं स्थानम्** । १४।१२७ सूर्यस्य स्थानमिदं कपटेश्वरस्थले महादेवेन बालखिल्यर्षिभ्यो विसर्जितमस्ति ।

**सौमाख्यं** तीर्थम् । १४।१११ सौमाख्यं तीर्थमिदं कपटेश्वरस्थाने सदा सन्निहितमस्ति।

**स्तनकुण्डतीर्थम्** । ४।४५ अस्य स्तनकुण्डतीर्थस्य सप्तपुष्करिणीतीर्थमित्यपि नामान्यदस्ति तीर्थमिदं कश्मीरैकदेश'फाक्'पुरगणे भवति ।

**स्थलेश्वरः** । १३।१६५ स्थलेश्वरस्थानमिदं मयलिङ्गस्याधारभूतं ज्ञायते, परं तु स्पष्टं स्थितिरस्य नाधिगता ।

**स्वयंभूनाथः** । १।२८ अस्य स्वयंभूनाथस्य स्वयंभूस्थानम् इत्यपि नामान्तरम्। स्वयंभूनाथनामा शिवोऽयं कालाग्निरुद्रमूर्त्या कश्मीरैकदेशक्रमराज्यमण्डलस्य 'मच्छिपूर्'-पुरगणे 'स्वयं'नाम्ना प्रसिद्धः । क्रमराज्यं तमधुना 'कमूराज्' नाम्नाकारयन्ति । विशिष्टव्याख्यांस्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।३४ द्रष्टव्या ।

**हयतीर्थम्** । १०।२४४ इदं तीर्थमपि विजयेश्वरक्षेत्रमध्यगमेव ज्ञेयम् । विजयेश्वरमाहात्म्येऽप्याम्नातमस्तीदम् ।

**हयशीर्ष**महातीर्थम् । १४।४३ हयशीर्षतीर्थमिदं कश्मीरैकदेश'मटन्'पुरगणीय कूठेर्'ग्रामे स्थितस्य कपटेश्वरस्याधारभूतमिवानुमीयते ।

**हरमुकुटम्** । ४।६९ हरमुकुटपर्वतोऽयं 'हर्मुख्' नाम्ना कश्मीरासु प्रसिद्धोऽस्ति। अस्यैवाधस्ताद्धरमुकुटगङ्गातीर्थं भवति । विशिष्टव्याख्यास्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे १।३६ द्रष्टव्या ।

**हर्षपथः** । ६।४४ अयमपि तावदज्ञातोऽस्ति, किंतु हर्षपथेति नदी 'आरपथ्'काश्मीरनामिका 'अनथ्'पुरगणीया किमु । (?)

**हस्तिकर्णः** । १४।४३ हस्तिकर्णतीर्थमिदं 'हस्तिखन्' इति कश्मीरभाषया श्रूयमाणं कश्मीरैकदेश'मटन्'पुरगणीय'कूठेर्'ग्रामे स्थितस्य कपटेश्वरस्याधारभूतमस्ति । विशिष्टव्याख्यास्य श्रीडॉक्टरस्टैन्साहिबराजतरङ्गिण्यनुवादे ७।१६५० द्रष्टव्या ।

**हाटकेशभवनम्** । १५।५८ अयं हाटकेशः कश्मीरपुरख्यात'रानिवोर्'निकटे 'मलखाह्'-स्थानमध्ये 'हारमशीद्'नाम्नाधुना ख्यातोऽस्ति ।

**हारीतस्वामी** रविः । १०।२४८ हारीतस्वामिनामा सूर्योऽयं विजयेश्वरक्षेत्रस्थतीर्थगणमध्य एवास्ति । अस्य च नाम नीलमतपुराणेऽपि स्वाम्नातमस्ति ।

# काव्यमाला ।

काश्मीरिकमहामाहेश्वराचार्यराजानकश्रीजयद्रथविरचितो

## हरचरितचिन्तामणिः ।

प्रथमः प्रकाशः ।

श्रीमृत्युजिते नमः ।

नानाप्रकारसंसारप्रकाशनविशारदः ।
क्रीडन्विचित्रैराकारैर्जयत्येको महेश्वरः ॥ १ ॥
एकाप्यनेकरूपैव वाच्यवाचकभङ्गिभिः ।
सर्वज्ञस्य[1] परा शक्तिर्भासतां प्रतिभासताम् ॥ २ ॥
श्रीमत्कल्याणवपुषः शंभोर्भक्तिमुपास्महे ।
यदेकभाजनं कायो मोक्षादप्यतिरिच्यते ॥ ३ ॥
सद्गुरुप्राप्त्यभिज्ञानो यो राजानकहिग्गकः ।
शास्त्रविच्छिन्नमोहश्च यो राजानक आह्लः ॥ ४ ॥
देशे श्रीविजयेशस्य निवसन्प्रेरणात्तयोः ।
चरित्राणि त्रिनेत्रस्य शास्त्रदृष्टानि गुम्फये ॥ ५ ॥
चरितं क्व महेशस्य क्व चोद्योगो मितात्मनः ।
इति भक्त्यासवास्वादक्षीवे का स्याद्विचारणा ॥ ६ ॥
व्युत्पत्तिमात्रनिःशङ्कविवर्धितविवेकिनाम् ।
इतरेषु मदीयेषु प्रबन्धेष्वधिकारिता ॥ ७ ॥
इयं साधारणा वाणी शंभुशक्तिमतः प्रति ।
समस्तलोकसुभगा शैथिल्येनैव शोभते ॥ ८ ॥

---

१. 'सर्वज्ञा' ख.

अव्युत्पत्तिमिहालोक्य मन्तव्यं मयि नान्यथा ।
दारिद्र्यं न हि संभाव्यं शंभोर्दासे विवासति ॥ ९ ॥
इह श्रद्धां विधास्यन्ति शिवशासनभाविताः ।
दर्शनान्तरमग्नानामसतामस्त्वनादरः ॥ १० ॥
तत्रोत्तमानां भगवच्चरिताकर्णनाद्भवेत् ।
स्वल्पलाभो निःशेषसंसारोन्मूलनक्षमः ॥ ११ ॥
मध्यमानां शिवे भक्तिर्दृढत्वमवलम्बते ।
उत्पद्यते [1]क्रमात्सैव कथ्यमाना शुभावहा ॥ १२ ॥
अधमानामधर्मेभ्यो निवृत्तौ धर्मसेवनम् ।
उपादेया त्रयाणामप्येषा तस्माद्विभोः कथा ॥ १३ ॥
चिद्रूप एव भगवान्स्वेच्छया पञ्चकृत्यकृत् ।
देशकालाकृतीः पुष्णन्नैयत्यमवलम्बते ॥ १४ ॥
स एव चरते देवो रूपैः स्थावरजङ्गमैः ।
तदन्यो न च कोऽप्यस्ति शास्त्रेणानुभवेन वा ॥ १५ ॥
[2]ज्वाललिङ्गस्वरूपेण येन विश्वात्मना कृतः ।
अनुग्रहः पुरा ब्रह्मविष्णोर्विवदमानयोः ॥ १६ ॥
[3]जाग्रतं पाशहस्तं च निगिरन्तमिवान्तकम् ।
श्वेतानुकम्पी नेत्राग्निज्वालया संजहार यः ॥ १७ ॥
[4]यद्गन्धमात्रान्निःशेषा व्यघटन्त सुरासुराः ।
यस्यैव शोभते कण्ठे निगीर्णः स हलाहलः ॥ १८ ॥
[5]यस्य माहात्म्यमाख्यातुं ब्रह्मणापि न शक्यते ।
स द्वारदासो यस्यैव नन्दिरुद्रो दिवानिशम् ॥ १९ ॥
[6]बाधमानः समस्तानि भुवनान्यन्धकासुरः ।
येनैवालम्बितः शान्तिं सर्वेषु करुणावता ॥ २० ॥

---

१. 'क्रमात्सैव' ख. २. प्रथमप्रकाशकथोपोद्घातः. ३. द्वितीयप्रकाशोपोद्घातः. ४. तृतीयप्रकाशोपोद्घातः. ५. चतुर्थप्रकाशोपोद्घातः. ६. पञ्चमप्रकाशोपोद्घातः.

देहार्धे[1] गृह्णता देवीं भिन्नत्वेन स्थितामपि ।
शक्तिशक्तिमतोरैक्यं येनैकेनोपदिश्यते ॥ २१ ॥
यद्बलेनासुरान्[2]विष्णुर्जघान बलवत्तरान् ।
तच्चक्रं ददता येन पूर्णा शक्तिः प्रकाशिता ॥ २२ ॥
प्रमथ्य[3] यज्ञं निःशेषं सह सर्वैः सुरासुरैः ।
फलेन योजितो दक्षो येनैवाद्भुतशक्तिना ॥ २३ ॥
अबाधत[4] जगत्सर्वं सगर्वस्तारकासुरः ।
षड्वासरेणापि[5] जितः स बलाद्यस्य सूनुना ॥ २४ ॥
येन[6] श्रीविजयेशानमूर्तिमादाय भूरयः ।
मुनयोऽनुगृहीतास्ते क्रीडयैव तपोवने ॥ २५ ॥
श्रीपिङ्गलेश्वरवपुर्य[7] एव परमेश्वरः ।
अनुजग्राह दहनं विच्छायत्वमुपागतम् ॥ २६ ॥
शक्तिर्भगवतो[8] यस्य वितस्तारूपमाश्रिता ।
चराचरस्य जगतो मार्ष्टि[9] कल्मषकर्दमम् ॥ २७ ॥
प्रज्वाल्य[10] त्रिपुरं देवः सुराणां कल्पिताभयः ।
श्रीमत्स्वयंभूनाथात्मा य उद्धरति भावितान् ॥ २८ ॥
काष्ठरूपत्वमादाय[11] येन विश्वानुकम्पिना ।
महर्षयो वसिष्ठाद्याः क्रीडयैव विमोहिताः ॥ २९ ॥
येनेश्वरेण[12] भक्तानां दधता चण्डरुद्रताम्[13] ।
स्वीयं पवित्रं निर्माल्यं भुक्तये परिकल्पितम् ॥ ३० ॥
तिर्थ्यादिसंघट्टनया[14] समस्ता अपि देहिनः ।
प्रभोर्यस्यैव माहात्म्यात्प्राप्नुवन्त्युत्तमां गतिम् ॥ ३१ ॥

---

१. षष्ठप्रकाशोपोद्धातः. २. सप्तमप्रकाशोपोद्धातः. ३. अष्टमप्रकाशोपोद्धातः. ४. नवमप्रकाशोपोद्धातः. ५. 'षत्वासरेण' ख. ६. दशमप्रकाशोपोद्धातः. ७. एकादशप्रकाशोपोद्धातः. ८. द्वादशप्रकाशोपोद्धातः. ९. 'मार्क्षि' ख. १०. त्रयोदशप्रकाशोपोद्धातः. ११. चतुर्दशप्रकाशोपोद्धातः. १२. पञ्चदशप्रकाशोपोद्धातः. १३. 'रुद्धताम्' ख. १४. षोडशप्रकाशोपोद्धातः.

निशाचरान्पातयितुं[1] गरुडोऽपि यदाज्ञया ।
असाधारं बलं लेभे गतिं चान्यातिशायिनीम् ॥ ३२ ॥
स्वभावादेव[2] बाधन्ते विघ्नाः सत्कर्मतत्परम् ।
तद्वारणाय[3] यश्चेशो गणेशत्वमुपागतः ॥ ३३ ॥
उपमन्युर्मुनिर्येन[4] तपस्यन्भक्तिनिर्भरम् ।
पयोराशिं वितरता ज्ञानं च सहसाधृत[5] ॥ ३४ ॥
वासुदेवो[6] महादेवाद्यस्माद्बदरिकाश्रमे ।
तपस्यन्नुत्तमान्प्राप[7] वरान्स्वहृदयेप्सितान् ॥ ३५ ॥
आश्चर्यमाश्चर्यमिदं[8] यत्स बाणो महासुरः ।
गलन्मोहो[9] महाकाल इति येन गणीकृतः ॥ ३६ ॥
एकैव[10] परमा शक्तिर्यस्य कापि जयत्यसौ ।
सिंहावपि यदालोकाद्गणौ दिण्डिमहोदरौ ॥ ३७ ॥
दुर्गेति[11] शक्तिः सा यस्य बलिनोऽपि निशाचरान् ।
पराजित्याभयमदादादित्येभ्यो मुहुर्मुहुः ॥ ३८ ॥
दुर्वारवेदनः[12] पूर्वं व्यामोहविवशीकृतः ।
असुराणां गुरुर्येन प्रभुणा हेलया धृतः ॥ ३९ ॥
यच्छक्त्यानुगृहीतेयं[13] भक्त्या मलयवत्यपि ।
मृतमप्याप भर्तारं जीवन्तं क्षणमात्रतः ॥ ४० ॥
शक्तिरेकस्य[14] यस्यास्ति विचित्रा पारमेश्वरी[15] ।
यया विक्रमतुङ्गस्य हन्त किं किं न साधितम् ॥ ४१ ॥
संसारे[16] मूर्ख एवायं येन सर्वज्ञतावशात् ।
पाणिनिं[17] समधिष्ठाय व्युत्पत्तिं लम्बितः[18] पराम् ॥ ४२ ॥

१. सप्तदशप्रकाशोपोद्धातः. २. अष्टादशप्रकाशोपोद्धातः. ३. 'उद्धारणाय' ख. ४. एकोनविंशप्रकाशोपोद्धातः. ५. 'दृतः' ख; 'दृत' ग. ६. विंशप्रकाशोपोद्धातः. ७. 'उपस्यन्' ख. ८. एकविंशप्रकाशोपोद्धातः. ९. 'गलोन्मोहो' ख. १०. द्वाविंशप्रकाशोपोद्धातः. ११. त्रयोविंशप्रकाशोपोद्धातः. १२. चतुर्विंशप्रकाशोपोद्धातः. १३. पञ्चविंशप्रकाशोपोद्धातः. १४. षड्विंशप्रकाशोपोद्धातः. १५. 'परमेश्वरी' ख. १६. सप्तविंशप्रकाशोपोद्धातः. १७. 'पाणिणिं' ख. 'पाणिनिः' इति प्रथमान्त एव स्यात्. १८. 'लम्भितः' इति भवेत्.

सर्वोर्ध्ववर्तिनी[1] यस्य शक्तिश्चन्द्रशिखामणेः।
गङ्गास्वरूपमास्थाय पुनाति भुवनत्रयम् ॥ ४३ ॥
यस्य[2] भक्तिप्रसादेन बहवस्तदनश्वरम्।
श्रुतकीर्त्यादयः प्रापुः सहसैव समीहितम् ॥ ४४ ॥
नानाविधानि शास्त्राणि धर्माधर्मात्मकानि च।
भावितानां प्रवृत्त्यर्थं स्वेच्छयोपदिदेश यः ॥ ४५ ॥
अखण्डशक्तिना येन विश्वानुग्रहणेच्छया।
शिवरात्रिमयः कालः स्वरसेनावतारितः ॥ ४६ ॥
अन्यान्यपि विचित्राणि यस्य विश्वातिशायिनः।
भोगापवर्गहेतुत्वे संभवन्ति सुमेधसाम् ॥ ४७ ॥
उच्चित्य तस्य चरितान्यधुना तानि[3] शास्त्रतः।
मयैकत्र निवेश्यन्ते भक्तिदार्ढ्याय धीमताम् ॥ ४८ ॥
शरीरिणां स्वकर्मैव शुभाशुभफलप्रदम्।
इति प्रतिज्ञातवतां व्यर्थोऽनुग्राहकः परः ॥ ४९ ॥
तदत्र देवता काचिदुपास्येत्येषणा नृणाम्।
अकिंचित्करभावेन दुःसहायासकारिणी ॥ ५० ॥
यस्त्वन्यनैरपेक्षेण कृत्यानि कुरुते सदा।
सिद्धीः स स्वेच्छया यच्छन्स्तुत्यो धीमद्भिरीश्वरः ॥ ५१ ॥
अन्ये दयालवो यत्नादेकं संरक्षितुं क्षमाः।
हेलयैवेश्वरस्त्वेष बहूंस्त्रातुं व्यवस्यति ॥ ५२ ॥

इत्युपोद्घातः।

यस्मिन्विष्णुरधोगतिं वितनुते त्यक्त्वा निजामौचितीं
ब्रह्माप्यूर्ध्वपदाभिलाषुकतया यत्र भ्रमन्मुह्यति।
तन्निर्दग्धमनोभवाभिभवभूनिष्पेषभेदेन्धनं
संविल्लिङ्गमभङ्गुरं मम निजैस्तेजोभिराजायताम् ॥ १ ॥

---

१. अष्टाविंशप्रकाशोपोद्घातः. २. एकोनत्रिंशप्रकाशोपोद्घातः. ३. 'तस्य' ख.

ब्रह्मादयोऽमी जायन्ते म्रियन्ते च पुनः पुनः ।
अनादिनिधनं देवं शंकरं शरणं गताः ॥ २ ॥
कल्पावसानसमये पूर्वमासीत्कदाचन ।
नष्टचन्द्रार्कपवनं जगत्सर्वं तमोमयम् ॥ ३ ॥
स्वयंभूरेव भगवानासीज्जगति संचरन् ।
स शून्यं सर्वमालोक्य चिन्तयामास जातुचित् ॥ ४ ॥
कथमुत्पद्यते सृष्टिरिति चिन्तयतोऽस्य च ।
आकुलस्यापतद्बाष्पकणो वामविलोचनात् ॥ ५ ॥
हारवो दानवस्तस्मादस्रुलेशादजायत ।
क्रूरदंष्ट्रो महाकायो भीषणश्मश्रुलोचनः ॥ ६ ॥
अथान्यो दक्षिणादक्ष्णो बाष्पबिन्दुरजायत ।
उदभूत्कालकेलाख्यो दैत्यः पाशकरस्ततः ॥ ७ ॥
निशाचरौ तौ संभूय व्यात्तास्यावुत्कटाकृती ।
स्वयंभुवं भोक्तुमेव प्रवृत्तावतिभीषणौ ॥ ८ ॥
ब्रह्मा पलाय्य यातोऽथ सोऽपश्यज्जलशायिनम् ।
पुरुषं पीतवसनं शङ्खचक्रगदाधरम् ॥ ९ ॥
तमालोक्याब्रवीद्ब्रह्मा कस्त्वं शेषे जलेष्विति ।
सोऽप्यब्रवीदहं सृष्टिस्थितिसंहारकृद्धरिः ॥ १० ॥
आद्यः प्रभुरहं कर्ता वराकस्त्वं कियानिति ।
ब्रह्मा विष्णुश्च रोषान्धौ तौ परस्परमूचतुः ॥ ११ ॥
अथ रोषारुणैर्नेत्रैः पिबन्निव हुताशनम् ।
श्वासानिलावलीलोलः सव्रीडो विधिरब्रवीत् ॥ १२ ॥
दिशां चतसृणामीशः चतुर्भिर्वदनैरहम् ।
अष्टभिर्नयनैः कोऽन्यो निखिलं विश्वमीक्षते ॥ १३ ॥
सुखदं स्वर्णखचितमिन्दिरानन्दमन्दिरम् ।
विलासावासतामेति कस्यान्यस्य सरोरुहम् ॥ १४ ॥

१. 'याम' ख. २. 'ध्यात्ता' ख. ३. 'सरोत्रहम्' ख.

ममैव गतिरूर्ध्वेऽस्ति हंसैराकाशचारिभिः ।
मनसापि न सादृश्यं ममाभ्येति भवादृशः ॥ १५ ॥
श्रुत्वेति ब्रह्मणो वाणीं भ्रुकुटीभङ्गभीषणः ।
उवाच विष्णुरुद्धूष्णुः कोपकम्पितलोचनः ॥ १६ ॥
सत्यं सत्यं भवानेव समग्राणां दिशां पतिः ।
तत्किंचिदुच्यते भद्र त्वद्वाक्योचितमुत्तरम् ॥ १७ ॥
पुनरुक्तैर्मुखैर्युक्तो विषादो न पुनर्दमः[1] ।
ज्ञत्वं[2] हि शंस्यते देहस्याधिक्यमसमञ्जसम् ॥ १८ ॥
दृष्ट्वा तवाष्टौ नेत्राणि को न चित्रीयते जनः ।
चक्षुष्मत्ता पुनर्दीर्घदर्शिता प्रतिभावतः ॥ १९ ॥
जलजासनमात्रेण परितोषमुपैषि चेत् ।
विश्वाधिपत्यैरात्मानं तन्मा व्यर्थैः कदर्थय ॥ २० ॥
हंसाधिरोहादूर्ध्वत्वमिति केन विचार्यते ।
सद्वृत्तिगतिरुत्कृष्टा न व्योमगमनं पुनः ॥ २१ ॥
तन्मूढ मुद्रय गिरं चिरं संचिन्तय स्वयम् ।
अहमेष गतिं प्राप्य तत्किं स्वगुणवर्णनैः ॥ २२ ॥
तयोर्विवादिनोरेवं तौ प्राप्तौ तत्र दानवौ ।
पितामहस्तदा विष्णुमुवाच भयकातरः ॥ २३ ॥
कारणत्वं[3] तवास्ते चेदेतौ दारुणविग्रहौ ।
व्यापादय महादैत्यौ यथेष्टं स्थीयतां तदा ॥ २४ ॥
इत्युक्ते ब्रह्मणा विष्णुः प्रमथ्य कर्णयोर्युगम् ।
मधुकैटभनामानावसुरावुदपादयत् ॥ २५ ॥
दैत्यौ तावपि तत्काले ब्रह्मविष्णुजिघत्सया ।
विकृतं रूपमाश्रित्य भयहेतू बभूवतुः ॥ २६ ॥

---

१. 'मदो रेतस्यहंकारे मद्ये हर्षेभदानयोः' इति हैमानुसारेण 'मदः' इत्येव पाठो भवेत्. २. 'ज्ञात्वं' ख. ३. 'करणत्वं' ख.

ब्रह्मविष्णू तयोर्भीत्या कम्पमानौ समन्ततः ।
किं कर्तव्यमिति ज्ञात्वा व्यामोहमुपजग्मतुः ॥ २७ ॥
ततो विष्णुर्महामायो बभाषे दानवावुभौ ।
क्षणमात्रं निजात्मानं रक्षितुं ब्रह्मणा सह ॥ २८ ॥
उचितो बहुराहारो भवतोर्दीर्घकाययोः ।
आवामल्पाकृती तस्मान्नेयता तृप्तिरस्ति वाम् ॥ २९ ॥
तदेतयोर्वपुर्दीर्घं भवतोस्तृप्तिहेतवे ।
इत्युक्त्वा प्राच्यदैत्यार्थं तौ [1]न्ययुङ्क्त जनार्दनः ॥ ३० ॥
हारवं कालकेलं च क्रमादेतावभिद्रुतौ ।
एतेषां चाभवद्युद्धं परस्परवधैषिणाम् ॥ ३१ ॥
युद्धं विधाय संधाय समन्तादथ दानवाः ।
जग्मुः सर्वेऽपि संभूय भोक्तुं ब्रह्मजनार्दनौ ॥ ३२ ॥
ततस्तौ दानवान्दृष्ट्वा बुभुक्षूनतिविह्वलौ ।
किं कार्यं कारणत्वेनेत्युभावपि भयं श्रितौ ॥ ३३ ॥
तयोः संभ्रान्तयोरित्थमकस्माद्भैरवाकृति ।
अथ प्रादुरभूद्रौद्रं ज्वालालिङ्गमनर्गलम् ॥ ३४ ॥
तदा मनोरथेनापि परिच्छेत्तुमशक्ययोः ।
ऊर्ध्वाधो[2]मार्गयोर्मानसूत्रतामिव तद्गतम् ॥ ३५ ॥
तस्य किं वर्ण्यते तेजः सर्ववीर्यातिशायिनः ।
यत्स्फुलिङ्गस्य कल्पान्तकालाग्नेरपि नोपमा ॥ ३६ ॥
अथ तत्प्रसृतज्वालाजालमोहितलोचनाः ।
अगमन्नसुराः क्वापि दूरदूरं भयार्दिताः ॥ ३७ ॥
ततो ब्रह्मा च विष्णुश्च तद्वीक्ष्य महदद्भुतम् ।
संत्यज्यासुरसंत्रासं ज्वालालिङ्गान्तिकं गतौ ॥ ३८ ॥
वर्धमानं तदालोक्य ज्वालालिङ्गं समन्ततः ।
विशृङ्खलत्वमापन्नौ ब्रह्मविष्णू स्वचेतसि ॥ ३९ ॥

---

१. 'न्ययुक्त' ख. २. 'मानयो' ख.

एकतस्तस्य दृष्टाश्च कोटिशो रविकोटयः ।
अन्यतो भासमानश्च चन्द्रराशिरदृश्यत ॥ ४० ॥
अन्यतश्चोदभूद्वह्निर्भुवनग्रासतत्परः ।
अन्यतश्च सहस्राणि दृष्टानि ब्रह्मचारिणाम् ॥ ४१ ॥
नागायुतयुतं वारि क्वचिद्वातावलिः क्वचित् ।
विकटाद्रिः क्वचिद्भूमिः क्वचिद्व्योमावभासकम् ॥ ४२ ॥
स्फुरन्मूर्त्यष्टकाटोपमेवमादि विलोकितम् ।
नानावर्णोज्झितं पश्चात्तदेव समलक्ष्यत ॥ ४३ ॥
कुतस्त्यमेव किं वा स्यादिति चिन्तामुपेयुषोः ।
विस्मयश्च विषादश्च बभूव युगपत्तयोः ॥ ४४ ॥
तस्य तेजोलवैर्दृष्टिप्रतिबिम्बविधायिभिः ।
विधाय बहुनेत्रत्वमायाम (?) इति चिन्तितम् ॥ ४५ ॥
वनमालां गले विष्णोर्जलजं चासनं विधेः ।
तदूष्मणा म्लापयित्वा विरुद्धमुभयोरपि ॥ ४६ ॥
ततश्च संमन्त्र्य चिरं तदन्तालोकनेच्छया ।
ऊर्ध्वमध्वानमगमद्ब्रह्मा विष्णुरधस्तनम् ॥ ४७ ॥
उभौ परिभ्रम्य चिरं तस्यान्तमसमीक्ष्य च ।
अयमेव प्रभुर्नूनमित्यचिन्तयतां मिथः ॥ ४८ ॥
बद्धाञ्जलिपुटौ मूर्ध्ना स्पृशन्तौ वसुधातलम् ।
ततस्तौ भगवल्लिङ्गस्तुतिं झगिति चक्रतुः ॥ ४९ ॥
प्रसीद भगवन्कोऽसि कुतस्त्योऽसि कथं स्थितः ।
दुर्विज्ञेयं निजं रूपं प्रकाशय नमोऽस्तु ते ॥ ५० ॥
आवामन्धावकिंचित्कौ भवदालोकनाध्वनि ।
दयस्व तत्स्वयं ज्योतिरेतावन्न सहामहे ॥ ५१ ॥
का स्तुतिर्वा कियद्रूपमित्यपि ज्ञायते न ते ।
स्वेन प्रथस्व रूपेण तदावां मा विमोहय ॥ ५२ ॥

इति स्तुतवतोरेव तयोरथ पुनः पुनः।
तस्मादाविरभूल्लिङ्गात्कपाली भैरवः शिवः॥ ९३॥
भयानकं तं दृष्ट्वा तौ ग्रसमानमिवाग्रतः।
किं मूर्धनि कटौ चेदमित्याकुलमपृच्छताम्॥ ९४॥
अथोवाच स विश्वात्मा मा भयं श्रयतां मुहुः।
इयं बहुतरा प्राच्यब्रह्ममुण्डावलिर्मम॥ ९५॥
तत्तत्पुराणगोविन्दकन्धरापङ्क्तिशृङ्खला।
इयं मे मेखलात्वेन भूषणाय प्रवर्तते॥ ९६॥
ये ब्रह्माणो मरिष्यन्ति तन्मुण्डान्यवतंसये।
मरिष्यत्केशवग्रीवापङ्क्तिभिश्चास्मि मेखली॥ ९७॥
इति श्रुत्वा महाधीरं वचनं तस्य तत्क्षणे।
ब्रह्मविष्णू गलद्बाष्पप्लुतनेत्रावमूर्च्छताम्॥ ९८॥
ततश्चोदचरद्वाणी करुणारसकोमला।
पीयूषमिव वर्षन्ती तयोः श्रवणवर्त्मनि॥ ९९॥
प्रसन्नो युवयोरस्मि स्वं रूपं दर्शितं मया।
तद्विमोहं परित्यज्य मत्तः प्रार्थयतां वरम्॥ ६०॥
अथ भक्त्या नमन्विष्णुरुवाच रचिताञ्जलिः।
सर्वोत्कृष्टा भवद्भक्तिर्ममास्तु भगवन्निति॥ ६१॥
अथाब्रवीन्महादेवस्त्वयाहं तोषितो हरे।
तदस्तु तव मद्भक्तिरनन्यसदृशक्रमा॥ ६२॥
मद्भक्तिप्रार्थिनो विष्णो भवतो[1]स्त्वन्यदुर्लभः।
योगः प्रभावः सौभाग्यं बलं सिद्धिश्च वाञ्छिता॥ ६३॥
मल्लिङ्गपूजनेन त्वं मम स्थास्यसि विग्रहे।
यो यः पूजयते लिङ्गं स स वाञ्छितमश्नुते॥ ६४॥
अतुलं धर्ममैश्वर्यमायुर्दीर्घम[2]रोगिताम्।
लभते स शिशुः क्रीडन्पांसुलिङ्गं करोति यः॥ ६५॥

---

१. 'भवतस्त्वन्य' ख. २. 'मरोचिताम्' ख.

महापातकिनो येऽपि कदाचिल्लिङ्गमाश्रिताः ।
तेषां साम्राज्यसंपत्तिरेकच्छत्रा तनुक्षये ॥ ६६ ॥
नभोमयं भवेल्लिङ्गं पीठिका पृथिवीमयी ।
तदत्र पूजा कर्तव्या तदेवाहं परं पदम् ॥ ६७ ॥
ब्रह्महत्यादिपापेन ये क्रूराः पुण्यवर्जिताः ।
ते पश्चात्तापतो लिङ्गं प्राप्य मुच्यन्त एव हि ॥ ६८ ॥
नमन्ति भगवल्लिङ्गं ये भक्त्यापि विना क्वचित् ।
तेषां जन्मान्तरे पादौ सुरासुरशिरःस्पृशौ ॥ ६९ ॥
भक्त्या पूजयते लिङ्गं यः पुनर्गाढगाढया ।
मत्समः स भवेज्जन्तुः किमन्यत्फ[1]लमश्नुते ॥ ७० ॥
अष्टाङ्गप्रणिपातेन लिङ्गं यः कश्चिदर्[2]चयेत् ।
स प्राप्नोति शरीरान्ते परं पदमनामयम् ॥ ७१ ॥
यद्गोसहस्रदानस्य फलं भवति देहिनाम् ।
अशेषं शिवलिङ्गस्य तदर्धप्रतिपादनात् ॥ ७२ ॥
सकर्पूरेण लिम्पन्ति लिङ्गं ये कुङ्कुमेन ते ।
लभन्ते ब्रह्मणः साम्यं शरीरान्ते न संशयः ॥ ७३ ॥
कन्यादानसहस्रस्य यत्फलं लभते नरः ।
व्यजनं शिवलिङ्गाय प्रतिपाद्य तदाप्नुयात् ॥ ७४ ॥
[3]दत्तूरकादिभिः पुष्पैर्यश्च मल्लिङ्गमर्चयेत् ।
सोऽपि रुद्रेण तुल्योऽसौ प्रियत्वं लभते मम ॥ ७५ ॥
सुगन्धिभिर्धूपरसैर्यः पूजयति भक्तिमान् ।
शरीरान्ते स लभते गतिमप्रतिघातिनीम् ॥ ७६ ॥
ददाति दीपं यो भक्त्या शिवलिङ्गाय गाढया ।
देहान्ते लभते दीप्तिं स सूर्यशतशोभिनीम् ॥ ७७ ॥
[4]यावत्यो धेनवो लोके तद्दानाद्यत्फलं भवेत् ।
तत्सहस्रगुणं लिङ्गे क्षीरस्नानसमर्पणात् ॥ ७८ ॥

---

१. 'त्कल' ख. २. 'दर्श' ख. ३. 'धत्तूर' इति भवेत्. ४. 'यावद्यो' ख.

स्नानेन सर्वतीर्थानां यत्पुण्यं परिवर्धते ।
शिवलिङ्गाभिषेकेण तत्सहस्रगुणं पुनः ॥ ७९ ॥
यो नैवेद्यं यथाशक्त्या लिङ्गाय विनिवेदयेत् ।
स नित्यतृप्तो देहान्ते प्राप्नोति पदमैश्वरम् ॥ ८० ॥
नृत्तेन यस्तोषयति शिवलिङ्गमकैतवः ।
लभते स शरीरान्ते सुरविद्याधराङ्गनाः ॥ ८१ ॥
संगीतकं ये कुर्वन्ति भक्त्या लिङ्गस्य संनिधौ ।
ते गन्धर्वपुरे राज्यं प्राप्नुवन्ति परं पदम् ॥ ८२ ॥
लभन्ते वाक्पतित्वं ते परस्तोत्रं पठन्ति ये ।
स्वकृतस्तोत्रपाठेन भुक्तिमुक्ती करस्थिते ॥ ८३ ॥
तस्मात्तवास्तु गोविन्द लिङ्गे भक्तिरभङ्गुरा ।
तेन सर्वातिशायित्वं त्वं प्रयासि मदाज्ञया ॥ ८४ ॥
इत्थं वृते भगवति विष्णौ ब्रह्मा जगाद ह ।
भगवन्सृष्टिकामोहं बलिनो दानवा इति ॥ ८५ ॥
इत्युक्ते ब्रह्मणा देवो जगाद परमेश्वरः ।
स्रष्टुं शक्यसि मच्छक्त्या जगदेतच्चराचरम् ॥ ८६ ॥
भवन्तौ न विजेष्यन्ते दानवा बलिनोऽप्यमी ।
कालान्तरेण यास्यन्ति क्षयं किं च मदिच्छया ॥ ८७ ॥
उक्त्वेति नाभिरन्ध्रं स चकार द्वारसन्निभम् ।
अभाषत च विश्वात्मा जठरे विशतां मम ॥ ८८ ॥
ममोदरे सर्वमास्ते जगत्स्थावरजङ्गमम् ।
सृष्टिस्थितिप्रलयकृल्लोकानामहमेव तत् ॥ ८९ ॥
कल्पे कल्पे प्रलीयन्ते सर्वे लोका ममोदरे ।
कल्पारम्भे पुनः सृष्टिर्मत्त एव प्रवर्तते ॥ ९० ॥
न विना मत्प्रसादेन मां जानन्ति सुराः पुनः ।
इत्युक्त्वा नाभिरन्ध्रेण स देवस्तौ न्यवेशयत् ॥ ९१ ॥

१. 'परमेश्वरम्' क.

उदरं संप्रविष्टाभ्यां ताभ्यां तस्य महेशितुः ।
दृष्टं चराचरं सर्वं सूर्यचन्द्रान्वितं जगत् ॥ ९२ ॥
चतुर्दशविधस्तत्र भूतसर्गो व्यलोक्यत ।
ताभ्यां विस्मयसंत्रासवासितेन स्वचेतसा ॥ ९३ ॥
देवः शिवः क यास्यावः क्रीडनत्वमुपागतौ ।
इत्थं विकल्पा बहुशश्चक्रतुस्तौ भयार्दितौ ॥ ९४ ॥
तौ यावद्भीतिमापन्नौ तावदेव महेश्वरः ।
आविवेश तयोरेव चित्तं संकल्पविग्रहः ॥ ९५ ॥
शिवाधिष्ठितचित्तौ तौ ततस्तेनैव वर्त्मना ।
निर्गत्य सर्गावस्थानं चक्रतुर्भुवनाध्वनि ॥ ९६ ॥
ततः प्रभृति गोविन्दो ब्रह्मा च शिवभावितौ ।
सदैव भगवल्लिङ्गपूजां चक्रतुरञ्जसा ॥ ९७ ॥
स्वप्नेनाप्यन्यकार्याणि कुरुते तदनन्तरम् ।
ब्रह्माक्षरैरर्चयते दिव्यैर्लिङ्गं पितामहः ॥ ९८ ॥
सुगन्धिभिश्च कुसुमैरच्युतो भक्तिपावनः ।
अथ क्रमेण तल्लिङ्गानुकारं लिङ्गमर्चितम् ॥ ९९ ॥
विरञ्चिना प्रतिष्ठाप्य विष्णुना च दिने दिने ।
तयोरालोक्य शक्राद्यैर्निर्जरैरसुरैरपि ।
किं वातिबहुना सर्वैर्भगवल्लिङ्गमिज्यते ॥ १०० ॥

य इह जगति भुक्तिमुक्तिलोभा-
त्परिचरति क्षणमेकमेव लिङ्गम् ।
फणिपतिरसनासहस्रयुग्मं
क्वचिदपि तत्फलवर्णनं क्षमेत ॥ १०१ ॥

इति श्रीमहामाहेश्वराचार्यजयद्रथ[1]राजानकविरचिते हरचरितचिन्तामणौ ज्वालालिङ्गावतारो नाम प्रथमः प्रकाशः ।

---

१. 'जयरथ' ख.

द्वितीयः प्रकाशः ।

श्रीपरामृतभैरवो जयति ।

दृप्यद्भेदभुजङ्गबाधितहरिब्रह्मादिरुल्लासित-
त्रैलोक्यप्रलयो निजाङ्गजनितप्रोद्यन्निशोपप्लवः ।
यः श्वेतं मलिनीचिकीर्षति हठात्कालस्तमेकाहुती-
कृत्य स्वात्मनि पावके मम परा दृष्टिः स्फुरत्वैश्वरी ॥ १ ॥

ब्रह्मादयः सुराः सर्वे कालेन कवलीकृताः ।
ग्रसते तमपि त्र्यक्षो वेति भक्तानुकम्पया ॥ २ ॥

विदधन्विविधान्यज्ञान्धर्मराज्यव्यवस्थया ।
पालयन्पृथिवीमासीच्छ्वेतो नाम गुणोदधिः ॥ ३ ॥

विभूतिर्वर्ण्यते तस्य कया रसनया जनैः ।
तत्साम्यमाशिषं मेने देवः सोऽ[1]धिधनाधिपः ॥ ४ ॥

कदाचिदथ निःसारसंसारभयविह्वलः ।
भोगवैरस्यमभ्येत्य केवलः पर्यचिन्तयत् ॥ ५ ॥

अजस्रमर्थिलोकस्य धनानि ददता मया ।
कुलदासीव कमला निश्चला परिकल्पिता ॥ ६ ॥

अशेषपृथिवीनाथकिरीटमणिचुम्बिनौ ।
मदीयचरणौ चारुसिंहासनसुखासिनौ ॥ ७ ॥

तत्किमस्ति न यद्दत्तं तत्किमस्ति जितं न यत् ।
लोकोत्तरं वा चरितं तत्किमस्ति न यत्कृतम् ॥ ८ ॥

किं तु पर्यन्तविरसा संसृतिः प्रतिभासते ।
इमामजित्वा जानामि निजं कायमकिंचनम् ॥ ९ ॥

इयं हि प्रकटीकृत्य भोगपूगमयीं श्रियम् ।
विस्मारयति दुर्वारं मरणं समुपस्थितम् ॥ १० ॥

ब्रह्मादयोऽपि मुषिताः सर्वे येन बलीयसा ।
रिपुः समग्रसंसारः शङ्कनीयत्वमागतः ॥ ११ ॥

---

१. 'सोऽपि' ख.

संसारस्य बलः कालो न स कैश्चन जीयते ।
यः कारणान्विनिगिरन्नापि तृप्यति न क्वचित् ॥ १२ ॥
तदेको जन्ममरणक्षोभमुक्तो महेश्वरः ।
तमेवाश्रित्य संसारवासनामपसारये ॥ १३ ॥
इति संचिन्त्य संत्यज्य राज्यं भोग्यं जितेन्द्रियः ।
स्वदेशान्निर्ययौ श्वेतः सेवितुं परमेश्वरम् ॥ १४ ॥
प्राप्य गन्धर्वशिखरं तुषारगिरिभूषणम् ।
सेवितं विविधैः सिद्धैर्गन्धर्वप्रमुखैः सुरैः ॥ १५ ॥
सुगन्धिकुसुमाक्रान्तं स्वादु[1]झांकारनिर्झरं[2]म् ।
अरज्यत मनस्तस्य त्रिलोचनसमाधये ॥ १६ ॥ (युग्मम्)
नियम्येन्द्रियचापल्यं स चकार दृढं तपः ।
किमसाध्यं सतामस्ति शुभकर्माढ्यचेतसाम् ॥ १७ ॥
जराधवलरोमा स भस्मधूलिविलेपनः ।
क्षीरसागरकल्लोलचारी चन्द्र इवाबभौ ॥ १८ ॥
चकार स पवित्रेण चेतसा शुद्धिभाजनम् ।
आचार इति जानानो [3]क्षीरस्नानं पुनः पुनः ॥ १९ ॥
स्वयं शीर्णैश्च यः पर्णैः प्राणयात्रां प्रकल्पयन् ।
पूर्वानपि पराजिग्ये महर्षीन्निजकर्मभिः ॥ २० ॥
संकल्पकल्पितप्रीतिचन्द्रचूडसमागमः ।
श्वेतस्तदानीमात्मानमकृतार्थममन्यत ॥ २१ ॥
भगवल्लिङ्गपूजायां स तरङ्गितमानसः ।
आनन्दबाष्पनिःष्पन्दैर्मेदिनीं पर्यपूरयत् ॥ २२ ॥
वाचकान्तरसंस्कारतिरस्कारेण भारती ।
शिवोच्चारेण तस्याभूदेकशब्दावशेषिणी ॥ २३ ॥
क्वचित्स भगवत्पादपरिचर्यापरायणः ।
बभूव विकसद्भक्तिगृहीतकुसुमोत्करः ॥ २४ ॥

---

१. 'सादु' क-ख. २. 'निर्जरं' क. ३. 'जल' ख.

क्वचिन्मधुरताराभिर्गीतध्वनितवीचिभिः ।
सर्वं शिवमयं पश्यन्नासीदानन्दनिर्भरः ॥ २५ ॥
शिवलिङ्गं क्वचित्सिञ्चन्सितैर्निर्झरवारिभिः ।
अक्षालयदशेषं स तदानीमान्तरं रजः ॥ २६ ॥
चिकीर्षुरेकदा श्वेतो दिवसान्तोचितां क्रियाम् ।
कृतस्नानः समारेभे लिङ्गं स्प्रष्टुं सुभावितः ॥ २७ ॥
अथ भीषणहुंकारं ज्वलत्पिङ्गललोचनम् ।
कालाञ्जनसमाकारं मुण्डमालाविमण्डितम् ॥ २८ ॥
क्रूरं दण्डधरं क्रुद्धं भुजङ्गकृतमेखलम् ।
पाशहस्तं महाघोरं त्रैलोक्यत्रासकारणम् ॥ २९ ॥
असावपश्यत्पुरुषं तत्र हृद्धटनोद्यतम् ।
तत्संनिधानतस्तत्र चकम्पे भुवनत्रयम् ॥ ३० ॥
अशुष्यन्सरितः सर्वा जीर्णतामगमन्द्रुमाः ।
अथ संक्षोभयन्विश्वं विकृतैश्चरणक्रमैः ॥ ३१ ॥
प्राप श्वेतमुनेरेव निकटं विकटेक्षणः ।
ततश्च भगवल्लिङ्गपूषापरिकरं मुनिम् ॥ ३२ ॥
उवाच स मदोदग्रपरूषाक्षरया गिरा ।
अरे मूर्ख परित्यज्य राज्यं बन्धुजनं तथा ॥ ३३ ॥
एकान्तमात्राश्रयणाद्भवता किं विधीयते ।
स्वधर्मोपार्जिताः सन्ति लोकास्तव सुखावहाः ॥ ३४ ॥
क्लेशदायी त्वयं कायो मुच्यतां तद्भयप्रदः ।
तानेहि लोकान्मुञ्च त्वं जराशुष्कं कलेवरम् ॥ ३५ ॥
मम तत्प्रापणे शक्तिरिति मा संशयं कृथाः ।
इति तस्य वचः श्रुत्वा प्रत्युवाच महामुनिः ॥ ३६ ॥
भस्मोद्धूलितसर्वाङ्गं दर्शयन्दशनश्रिया ।
गुरुवद्भाषसे कस्त्वं प्रज्ञयैव[1] नियच्छसि ॥ ३७ ॥

---

१. 'प्रज्ञायैव' ख.

रात्रिंचर इव क्रूरो गच्छ त्वं गगनेचर ।
तत्रापि यदि जागर्षि भव कौतूहलाङ्कुरः ॥ ३८ ॥
अवधानमना भूत्वा मद्वाणीं शृणु सांप्रतम् ।
त्वं नयस्येव सल्लोकान्स्वधर्मोपार्जिताश्च ते ॥ ३९ ॥
सल्लोकेषु च भोगानामवकाशोऽस्त्यसंशयः ।
तदेकं वचनं तावदिदानीमवधारय ॥ ४० ॥
तत्त्वतः कथयाम्येव यथाभिलषितं मम ।
लोकाल्लोकान्तरप्राप्तिरिह कस्य न विद्यते ॥ ४१ ॥
गतानुगतिकत्वेन देवा अपि विमोहिताः ।
अमी सांसारिका भोगाः सुखदुःखफलोम्भिताः ॥ ४२ ॥
तेषु रज्यति को धीमान्पर्यन्तविशरारुषु ।
लोकान्तरेषु पशुवद्भोगा एव पुरार्जिताः ॥ ४३ ॥
अयं तु कायः संसारं लुनीते कर्मभिश्च तैः ।
तत्कायं भगवद्भक्तिपवित्रीकृतमुज्झतः ॥ ४४ ॥
मम लोकान्तरप्राप्तिभोगो मा जातु जायताम् ।
इति श्रुत्वा वचस्तस्य क्रोधक्रूरविलोचनः ॥ ४५ ॥
जगाद स करभ्राम्यत्फूत्कुर्वाणभुजङ्गमः ।
अहं स कालः सकलं संहरामि निरङ्कुशः ॥ ४६ ॥
लोकान्तरं हठेनैव नयामि पशुवज्जनान् ।
स्वेच्छया न हि केनापि सुखदुःखादि लभ्यते ॥ ४७ ॥
ब्रह्मेन्द्रप्रमुखा देवा मदिच्छानुविधायिनः ।
धिङ्मूर्ख भवतो बुद्धिर्विपर्येति जरावशात् ॥ ४८ ॥
यन्मामपि न जानासि समग्रभुवनप्रभुम् ।
कृत्वा चतुर्मुखी कण्ठेष्वेकपाशनिबन्धनम् ॥ ४९ ॥
आकृष्यते मया ब्रह्मा कृतासनसरोरुहः ।
निगृह्णन्नवदंशाय वाहहंसान्स्वयंभुवः ॥ ५० ॥

हरिमत्स्यं कवलयन्नहं केन निवारि ः ।
लीलावतंसं निर्माय ब्रह्मासनसरोरुहम् ॥ ९१ ॥
अङ्गदाय गदापाणेश्चकृषे कौस्तुभो मया ।
किं किं न चक्रे यत्प्रेम्णा चक्रपाणिर्दिवानिशम् ॥ ९२ ॥
मम सा कमला जाता जाल्म विभ्रमचर्वणम् ।
युगपत्करसंपर्कपिण्डितौ शशिभास्करौ ॥ ९३ ॥
अभूतामधिकाराय शीतांशुर्भोजनं मम ।
पावकं कवलीकृत्य ज्वालामालाभिरुत्कटम् ॥ ९४ ॥
प्रसङ्गाद्दारुणं[1](?) पीत्वा कण्ठशोषो मयोज्झितः ।
शरीरनिर्विशेषोऽयं मम पाशभुजङ्गमः ॥ ९५ ॥
अमुष्य प्राणयात्रार्थं पवनः परिकल्पितः ।
एवमन्योऽपि को नाम यो मया नेह संहृतः ॥ ९६ ॥
अशुभाय भवानेव न जाने केन मोहितः ।
इत्युक्ते तेन तत्कालमहंकारज्वरस्पृशा ॥ ९७ ॥
स मुनिः प्रणयादेवं व्याजहार विशारदः ।
भवन्तं ननु जानामि लोकाः सर्वे त्वदाश्रयाः ॥ ९८ ॥
सहस्व तु क्षणं यावच्छिवपूजा समाप्यते ।
निष्पाद्य भगवत्पूजां त्वदाज्ञा क्रियते मया ॥ ९९ ॥
यथेष्टं परतः कर्तुं भवतो वर्ततामिह ।
इति तस्य मुनेर्वाक्यं निशम्य जगदन्तकः ॥ ६० ॥
उवाच विहसन्भीमभ्रुकुटीभङ्गभीषणः ।
किं किं कथयसे मूढ कृत्वा पूजां क्षणादिति ॥ ६१ ॥
अद्यापि वाचाटतया विचारस्ते न जायते ।
पश्य सर्वस्य लोकस्य प्रवृत्तिः कीदृशी स्थिता ॥ ६२ ॥
यो यदारभते तस्य तन्निष्पत्तिः कुतो भवेत् ।
सर्वश्चराचरग्रामः स्वेच्छया कुरुते यदि ॥ ६३ ॥

१. 'द्वारणं' क; 'त्वरुणं' ख.

मत्पाशफणभृद्बन्धस्तत्कस्मै नाम रोचते ।
अनयैव दिशा सर्वः करिष्यामीति भाषते ॥ ६४ ॥
न विचारयते मूढो मदधीनं हि जीवितम् ।
स्वर्गाधिपत्यभोगेषु रसिकोऽपि शचीपतिः ॥ ६५ ॥
अकस्मादेव दंष्ट्राग्रे मया निक्षिप्यते हठात् ।
मुहूर्तमात्रमपि न स्थातुं शक्यं शरीरिणाम् ॥ ६६ ॥
व्यापारान्कुर्वतो जन्तोः प्रतीक्षे चेदहं क्षणम् ।
आधिपत्यसुखं त्यक्त्वा तर्हि को मृत्युमिच्छति ॥ ६७ ॥
क्रीडापरा अपि नराः सर्वे तत्कालमेव मे ।
विशन्ति वक्त्रं दयितापुत्रमित्रधनैः सह ॥ ६८ ॥
शिशुर्वृद्धो गुणी मूर्खो धनवान्दुर्गतोऽपि वा ।
सुखी दुःखी च मां कश्चिन्न प्रतीक्षयितुं क्षमः ॥ ६९ ॥
प्रीतिर्न मे नापि भयं जुगुप्सा न न वा घृणा ।
शुभेन पक्षपातो मे वात्सल्यं न गुणाश्रये ॥ ७० ॥
तत्कालजातांस्तरुणान्गर्भस्थान्बलिनो बलात् ।
सूक्ष्माकृतीन्वृद्धदेहान्साक्षरान्वा निरक्षरान् ॥ ७१ ॥
स्वरूपान्वा विरूपान्वा यद्वा विश्वेश्वरानपि ।
सर्वान्कवलयाम्येव हठेनाहमहर्निशम् ॥ ७२ ॥ (युगलकम्)
मम नैवास्ति संतोषो भुञ्जानस्य जगन्त्यपि ।
न च जानामि कस्यापि क्षणमात्रप्रतीक्षणम् ॥ ७३ ॥
अभिधायेति बहुधा स हुंकारातिभीषणम् ।
न्यवेशयन्मुनेः कण्ठे पाशं पावकवर्षिणम् ॥ ७४ ॥
मुनिस्तेन स पाशेन दह्यमानो गलस्पृशा ।
अदृष्टपूर्वमालम्ब्य भयं विस्मयवासनाम् ॥ ७५ ॥
आदाय दक्षिणे पाणौ प्रसवस्तबकं जवात् ।
वामेन बाहुना लिङ्गमालिलिङ्ग सवेपथुः ॥ ७६ ॥

उवाच च विनिक्षिप्य प्रसवं तस्य मूर्धनि ।
समकालोल्लसद्भक्तिभयनिर्भरमानसः ॥ ७७ ॥
अनन्ताकारनिर्माणविचित्रनिजकर्मणे ।
अपरिच्छेद्यसामर्थ्यधारिणे भवते नमः ॥ ७८ ॥
स्वरूपं वास्तवं वक्तुं क्षमः कस्ते महेश्वर ।
मनोरथानामपथे चाटुकारित्वचातुरी ॥ ७९ ॥
पिता न यत्र नो माता न भ्राता भगिनी न च ।
महाभये तत्र विभो त्वमेव शरणं मम ॥ ८० ॥
मरणादितरत्किं मे कृतान्तो यद्युपस्थितः ।
अन्येषां शिवभक्तानां प्रवृत्तिस्त्वधुना कथम् ॥ ८१ ॥
अत एव भवद्भक्तिमभ्यर्थयति भावितः ।
अभयं तद्वितनुषे समुत्पन्ने महाभये ॥ ८२ ॥
अहं यदि कृतान्तेन तव नीतः पुरः प्रभो ।
न केऽपि तत्करिष्यन्ति जाने भक्तिमनोरथम् ॥ ८३ ॥
असाध्यमपि यत्नेन सेव्यः साधयते नृणाम् ।
दृक्पातेनैव साध्येऽपि तदवज्ञोचिता न ते ॥ ८४ ॥
कृतकृत्योऽसि येन त्वं शंभुः शरणमाश्रितः ।
शरणागतमुत्सृज्य प्रभुः प्रभविता कथम् ॥ ८५ ॥
मरणं मे न दुःखाय वाणी श्रवणचारिणी ।
शिवभक्तोऽयमानीतः कालेनेति तु दुःसहा[1] ॥ ८६ ॥
स्वामिन्मम स्पृहा नास्ति भाविताये(?)ति निश्चयः ।
कालेन नीतस्त्वद्भक्तोऽपीत्यपूर्वैव[2] वञ्चना ॥ ८७ ॥
भोः काल सौहृदं कुर्याः शरीरं संहरन्नपि ।
शिवप्रणामश्रद्धालुं रक्ष मूर्धानमेव मे ॥ ८८ ॥
इति तस्मिन्वदत्येव तदानीमशरीरिणी ।
उच्चचार नभोगर्भान्मा भैषीरिति भारती ॥ ८९ ॥

---

१. 'दुःसहः' ख. २. 'पीत' क.

चकम्पे भगवल्लिङ्गं तद्दृढालिङ्गितं ततः ।
अरिष्टमिव कालस्य भावि प्रथयितुं बलात् ॥ ९० ॥
अथ लिङ्गं द्विधाकृत्य निर्ययौ परमेश्वरः ।
विश्वात्मनो भगवतः को वेत्ति चरिताद्भुतम् ॥ ९१ ॥
चन्द्रचूडांशुभिर्व्याप्तः[1] सितोद्धूलनभस्मना ।
उपवीतभुजंगेन प्रकाश इव मूर्तिमान् ॥ ९२ ॥
दन्तचन्द्रिकया कण्ठकालकूटार्चिषामिव ।
प्रसादकोपसंभेदं तत्कालोचितमाचरन् ॥ ९३ ॥
उत्क्षिप्ततर्जनीकेन कुर्वन्दाक्षिणपाणिना ।
स्थिरां संधामिवैकोऽहं त्राता भक्तिमतामिति ॥ ९४ ॥
अथोवाच प्रभुर्दन्तज्योत्स्नास्नपितदिङ्मुखः ।
शिरःसुरसरित्स्रोतोध्वनिगम्भीरया गिरा ॥ ९५ ॥
भोः काल कोऽयं संरम्भः किं न विज्ञायते त्वया ।
मद्भावितधियो जन्तोस्त्वदधीनं न वर्तनम् ॥ ९६ ॥
इत्युक्त्वा मौलिचन्द्रांशुः[2] पीयूषपृषतोत्करैः ।
मुनिं सिषेच भगवान्कालपाशकदर्थितम् ॥ ९७ ॥
अथ धैर्यमसौ प्राप्य मुक्तपाशकदर्थनः ।
मुनिरालोकयांचक्रे करुणाराशिमीश्वरम् ॥ ९८ ॥
आलोक्य च मुनिर्देवं ववन्दे तीव्रभावनः ।
कृतान्तं च समासन्नं पराजितममन्यत ॥ ९९ ॥
तादृशं समयं दृष्ट्वा व्याकुलो जगदन्तकः ।
पाशेन श्वेतमाकर्षन्नुवाच परमेश्वरम् ॥ १०० ॥
व्यामोहोऽयं तवाप्यस्ति जानीषे यन्न मद्बलम् ।
मया कवलिताः सर्वे जगत्स्थावरजंगमाः ॥ १०१ ॥
अहं स कालः संसारे कस्य नाम न देहिनः ।
मूर्धो निःसंशयं नाम मत्प्रसादात्प्ररोहति ॥ १०२ ॥

१. 'व्याप्तसितो' ख. २. 'न्द्रांशुः पीयूष' क.

अथवा स्वात्मनोऽप्येतामवस्थामवधारय ।
लिङ्गतो निःसरन्कोऽभून्निःसरन्सांप्रतं च कः ॥ १०३ ॥
मया सह कथाः कुर्वन्कस्त्वं संप्रति वर्तसे ।
कथाविरतिकाले च किमवस्थो भविष्यसि ॥ १०४ ॥
किंवा प्रत्यक्षलक्ष्येण वस्तुना कथितेन मे ।
मद्बलं निजवीर्यं च मुहूर्तादेव वेत्स्यसि ॥ १०५ ॥
इत्थं निगदतः क्रोधात्कृतान्तस्य निरङ्कुशम् ।
प्रेङ्खोलज्जूटसंरम्भो बभाषे भगवानपि ॥ १०६ ॥
भङ्गुरो गत्वरश्च त्वं जडश्चापि विभाव्यसे ।
यत्संपर्केण विविधा ज्ञाता देहेष्ववस्थितिः ॥ १०७ ॥
क्षयरूपोऽपि विश्वस्य विनाशमवबुध्यसे ।
अम्बरस्य किमाधत्से स्वयमेव विचारय ॥ १०८ ॥
भवान्स्वयं क्षयं प्राप्तो विश्वं वदति नश्वरम् ।
नावा गच्छंश्चलान्वेत्ति दृढानपि तटद्रुमान् ॥ १०९ ॥
निःसरन्नहमेवासं लिङ्गादस्म्येव निःसृतः ।
अहमेव समुज्जृम्भे सर्वकालेषु सर्वतः ॥ ११० ॥
न मां विना परः कश्चिद्विद्यते वोदपद्यते(त) ।
अविद्यामोहिताः सर्वे विवदन्ति नदन्ति च ॥ १११ ॥
एकरूपोऽप्यहं ज्ञातो विविधावस्थितिस्त्वया ।
तिमिराहतनेत्रस्य द्विचन्द्रालोकनं स्थितम् ॥ ११२ ॥
निजाश्रयानुसारेण सर्वस्तु प्रतिपद्यते ।
इत्युक्तवति विश्वेशे जगाद जगदन्तकः ॥ ११३ ॥
कोपारुणेक्षणरुचा वहन्वध्यपटीमिव[1] ।
उक्तं त्वया जगत्सर्वमुदरे मे प्रतिष्ठितम् ॥ ११४ ॥
अहं भवन्तं भुञ्जानो जगद्दग्ध्वा सुखं श्रये ।
एवं भवान्यदा विश्वप्रभुस्तन्निजविक्रमम् ॥ ११५ ॥

---

१. 'न्मध्य' क.

प्रकाशयस्व मे येन प्रथसे(ये) किं वचोबलैः ।
उक्त्वेति विरते काले भगवान्निजयेच्छया ॥ ११६ ॥
स्थूलत्वमभजद्देवो ज्वालादुष्प्रेक्ष्यविग्रहः ।
सहस्रवदनोद्दामसहस्रचरणोर्जितः ॥ ११७ ॥
रविकोटिस्फुरत्तेजो(जा) नानास्त्रभरभैरवः ।
अनन्तमूर्तिर्विश्वात्मा नानारत्नविभूषणः ॥ ११८ ॥
सेव्यमानो गणग्रामैर्बभासे जगदीश्वरः ।
तमत्युत्कटमालोक्य ततो विस्मितमानसः ॥ ११९ ॥
कालोऽप्यसंभ्रान्तमतिः स्वबलोद्योगमग्रहीत् ।
रात्रिंदिनस्फुरच्चक्रमृतुकल्पितवाजिनम् ॥ १२० ॥
सारथीकृतकर्माणं रथमप्रथयद्यमः ।
उल्लसन्मासमौर्वीकं संवत्सरशरासनम् ॥ १२१ ॥
बाणीभूतगणं तस्य कालस्यास्य विदिद्युते ।
तृष्ण्याप्रतोदसंरम्भप्रेरितं स्यन्दनं ततः ॥ १२२ ॥
आरुह्य व्यूहरचनां कालश्चक्रे सुदारुणम् ।
अग्रेसरं तमः कृत्वा भुवनत्रयदुःसहम् ॥ १२३ ॥
व्याधिपञ्चशतीयुक्तं ज्वरं सेनापतिं व्यधात् ।
ये च यक्ष्मादयो रोगा अपमृत्युशतं च यत् ॥ १२४ ॥
कृत्याखार्खोट(?)वेताला ये च तान्स व्यसर्जयत् ।
एतत्कालबलं दृष्ट्वा निर्भरीकृतदिङ्मुखम् ॥ १२५ ॥
भयेन व्योम्नि सर्वेऽपि सुपर्वाणश्चकम्पिरे ।
तद्बलक्षोभिता भूमिश्चचाल समहीधरा ॥ १२६ ॥
तदा न को भयं लेभे जङ्गमस्थावरेष्वपि ।
इति तद्बलमालोक्य सकोपः परमेश्वरः ॥ १२७ ॥
**क्रोधेश्वरा**भिधं रुद्रमसृजन्नयनानलात् ।
नियोज्य तं कालवधे वृषकेतुस्तिरोदधे ॥ १२८ ॥

१. 'प्रथमे' ख.

मितेषु संरभन्ते न कदाचित्प्रभवः स्वयम् ।
अथ क्रोधेश्वरः कोटिवदनः सिंहवाहनः ॥ १२९ ॥
कोटिपादः कोटिभुजो जज्वालात्यन्तदुःसहः ।
ततो देवासुराः सर्वे दिव्यैः प्रसवधामभिः ॥ १३० ॥
अपूजयन्त तं देवं नानामूर्त्यस्त्रभास्वरम् ।
दृष्ट्वा जगद्दुःखकरं कालं सेनासमन्वितम् ॥ १३१ ॥
सोमं सेनापतिं चक्रे सर्वेषामभयाय सः ।
शुभानि मङ्गलान्येव सिद्धीः सर्वौषधीरपि ॥ १३२ ॥
रसायनं महावीर्यं मन्त्रांश्च स्वबलं व्यधात् ।
एवंविधैस्ततो योधैः संनद्धे क्रोधभैरवे ॥ १३३ ॥
कालकृतान्यरिष्टानि प्रशाम्यन्ति स्म सर्वतः ।
शान्तेषु तेष्वरिष्टेषु क्रोधेश्वरविजृम्भितैः ॥ १३४ ॥
स्वपराभवमासन्नं कालः कलयति स्म सः ।
अथ देवासुरग्रामे पश्यति व्योममण्डलात् ॥ १३५ ॥
तत्र प्रववृते युद्धं विविधायुधभीषणम् ।
ततः कृतान्तः कुपितः पर्वतं तस्य मूर्धनि ॥ १३६ ॥
व्यधत्त घोरहुंकारबधिरीकृतदिङ्मुखः ।
पर्वताघातमात्रेण विलोक्य तमकम्पितम् ॥ १३७ ॥
आकृष्टुमैच्छत्पाशाहिवेष्टनेन बलीयसा ।
अथ क्रोधेश्वरः क्रुध्यत्क्रूरे कालस्य वक्षसि ॥ १३८ ॥
निदधे निशितं शूलं वह्निज्वालासमाकुलम् ।
त्रिशूलमपि कालस्य विभेद्य हृदयं हठात् ॥ १३९ ॥
क्रोधेशस्य करं प्राप तद्रक्तभरभास्वरम् ।
कालोऽथ व्यथितस्तेन विषह्य बहलां रुजम् ॥ १४० ॥
अमुञ्चत्पट्टिशं तस्य हृदये विश्वघट्टनम् ।
अथ रोषारुणो देवो भाललोचनवह्निना ॥ १४१ ॥

१. 'अपूजयच्च' क. २. 'वीर्यान्' ख.

तं ददाहाखिलप्राणीघातहेवाकिनं यमम् ।
हाहाकारे ततो जाते कालो भस्मत्वमागतः ।
अनर्थाय भवत्येव यत्प्रभुष्ववधीरणा ॥ १४२ ॥
कालाधीनेषु कार्येषु ततो नष्टेषु सर्वतः ।
देवा विज्ञापयामासुः स्तोत्रेण क्रोधभैरवम् ॥ १४३ ॥
भगवन्भवतैवायं पञ्चकृत्यविधायिना ।
असृज्यत स्वयं कालो नियतप्राणिवृत्तये ॥ १४४ ॥
संसारे यदि विश्वेश कालरूपः समाप्यते ।
तदद्यैव महादेव विछिद्यन्तां प्रवृत्तयः ॥ १४५ ॥
केवलं भवदिच्छायां त्वमेव हि महेश्वरः ।
उत्पाद्यस्तदयं कालो विरमन्त्यन्यथा क्रियाः ॥ १४६ ॥
इत्युक्त्वा विरतेष्वेषु भगवान्करुणापरः ।
पुनरप्यसृजत्कालं प्राग्वद्बलसमन्वितम् ॥ १४७ ॥
अहो प्रभोरपूर्वेयं कर्तृता भासते निजा ।
निग्रहेऽनुग्रहे वापि क्षणं यो न विलम्बते ॥ १४८ ॥
अथ कालः समालोक्य तं क्रोधेश्वरभैरवम् ।
उवाच विगलन्मोहतिमिरो रचिताञ्जलिः ॥ १४९ ॥
भगवन्सर्वशक्तिस्त्वसंजातः[1] कारणैरपि ।
मादृशस्य वराकस्य गोचरे वर्तसे कथम् ॥ १५० ॥
तत्प्रसीद महादेव क्षमस्व मम चापलम् ।
शक्तिभाजां प्रभूणां हि दासे क्षमणमौचिती ॥ १५१ ॥
अद्य प्रभृति देवेश भवद्भक्तिभरस्पृशे ।
स्वप्नेऽपि नैव द्रुह्यामि त्वत्कृताभङ्गकातरः ॥ १५२ ॥
भस्मोद्धूलनमात्रेण ललाटं यो विलिम्पति ।
स मे प्रभुर्महादेव भवतोऽप्यतिरिच्यते ॥ १५३ ॥

---

१. 'मज्ञातः' क.

भक्त्या वदत्यविच्छिन्नं सदा शिव शिवेति यः ।
स्वप्नेऽपि तस्य नेक्षिष्ये वदनं शुभकर्मणः ॥ १९४ ॥
अद्य प्रभृत्ययं श्वेतमुनिना प्रतिपादितः ।
जन्ममृत्युमयायासविच्छेदो भक्तिशालिनाम् ॥ १९५ ॥
अहो श्वेतमुनेः कीर्तिर्भवद्भक्त्या प्रवर्तते ।
यद्वृत्तमनुवर्त्स्यन्ति शुभकर्मवशाज्जनाः ॥ १९६ ॥
इत्युक्त्वा स महादेवं प्रणम्यागमदन्तकः ।
श्वेतेन साकं भगवानपि तत्र तिरोदधे ॥ १९७ ॥
इति भगवति भक्तिमाकलय्य स्पृशत जनाः परमेश्वरानुरागम् ।
विफलयत मनोरथप्रपञ्चं निखिलसुरासुरवैरिणो यमस्य ॥ १९८ ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणौ
कालदाहवर्णनं नाम द्वितीयः प्रकाशः ।

---

तृतीयः प्रकाशः ।

ॐश्रीपरामृतभैरवो जयतु ।

संक्षोभ्याद्वयमन्दरेण निखिलं चिन्तामयं सागरं
तन्मध्योत्थितकालकूटकवलीकारेऽपि निर्विक्रियः ।
शुद्धाम्भोधिसुधारसं निरवधि लब्ध्वा चिरं निर्वृतः
स्यां निःशेषजनाजरामरपदप्राप्तेः परं कारणम् ॥ १ ॥
विह्वलोऽभूत्कृतान्तोऽपि यदालोकनमात्रतः ।
तं कालकूटं गिरतः शक्तिरेकस्य शूलिनः ॥ २ ॥
महाबलानां मारीचात्कश्यपाल्लब्धजन्मनाम् ।
सुराणामसुराणां च वैरमासीत्परस्परम् ॥ ३ ॥
बृहस्पतिर्गुरुरभूत्सुराणां सर्ववस्तुषु ।
असुराणां बलवतां महाप्राज्ञश्च भार्गवः ॥ ४ ॥
असुराणां हितं वाञ्छन्विधाय विषमं तपः ।
मृतसंजीविनीविद्यां शुक्रः प्राप महेश्वरात् ॥ ५ ॥

ब्रह्मविष्णुप्रभृतयो देवा ये वाच[1] सर्वशः ।
तेऽपि संजीविनीं विद्यां न जानन्ति कदाचन ॥ ६ ॥
विद्यां तथाविधां ज्ञात्वा तपस्तुष्टं महेश्वरम्
अदानमन्यभक्तानां ययाचेऽस्याश्च भार्गवः ॥ ७ ॥
तस्यान्येषामदानं च प्रत्यपद्यत शंकरः ।
सेवकाभीष्टनिष्पत्तिः प्रभूणां परमौचिती ॥ ८ ॥
आसाद्य शुक्रस्तां विद्यां ततो दितिजपूजितः ।
आत्मानं सुरदैत्येभ्यः प्रत्युत्कृष्टममन्यत ॥ ९ ॥
अथ देवासुरगणो रूढवैरः कदाचन ।
प्रारेभे समरं घोरं प्रहारशतभीषणम् ॥ १० ॥
देवायुधबलक्षीणप्राणास्तत्र पुनः पुनः ।
स्मृत्वा संजीविनीं दैत्याः शुक्रेणोत्थापिताः क्षणात् ॥ ११ ॥
आलोक्य शुक्रचरितं स्वबलक्षयकातराः ।
धिषणेन समं देवाः पद्मयोनिमुपागमन् ॥ १२ ॥
अथाधिगम्य तद्वृत्तमुवाच जलजासनः ।
कण्ठोपवीतविशदां किरन्दशनचन्द्रिकाम् ॥ १३ ॥
दैत्याञ्जीवयते शुक्रः संजीविन्या मृतानपि ।
युष्मद्बलं हतं यत्तु कुतोऽस्य पुनरागमः ।
तद्ब्रवीमि शुचः पथ्यं मथ्यतां क्षीरसागरः ॥ १४ ॥
साहायकेऽभ्यर्थ्य हरिं तस्मादासाद्यते सुधा ।
अभिनन्द्येति तद्वाक्यं जग्मुर्देवाः सुधानिधिम् ॥ १५ ॥
तस्मिन्नालोक्य निद्राणमस्तुवन्गरुडध्वजम् ।
उवाच तत्स्तुतिप्रीतः प्रबुद्धो मधुसूदनः ।
स्वागतं विबुधाधीशाः किमर्थं मामुपागताः ॥ १६ ॥
तेषां मुखात्किवदन्तीमधिगम्य जनार्दनः ।

---

१. 'याच' ख.

अङ्गीचक्रे सहायत्वं सुधासागरमन्थने ॥ १७ ॥
कदाचित्कार्तिके मासि देवास्ते हरिणा सह ।
सुधारसप्राप्तिधियः प्रास्तुवन्नब्धिमन्थनम् ॥ १८ ॥
मन्थानं मन्दरं कृत्वा कच्छपं च तदासनम् ।
नेत्रं वासुकिमादाय गर्गरीं चक्रुरम्बुधिम् ॥ १९ ॥
तत्र ते कार्यनिष्पत्तिं परिकल्पितभक्तयः ।
देवानारण्यकैः पुष्पैर्मधुपर्कैरपूजयन् ॥ २० ॥
पुरःसरेण हरिणा चकृषे नेत्रमेकतः ।
अन्यतश्च सुरेन्द्रेण कौतुकोत्फुल्लचक्षुषा ॥ २१ ॥
अन्ये च देवगन्धर्वदेवताश्च सहस्रशः ।
पक्षद्वयं समाश्रित्य न्यधुर्वारिधिमन्थनम् ॥ २२ ॥
अथ क्रोधभ्रमल्लोललोचनत्रासिताखिलाः ।
निपत्य दैत्याः शक्राद्यान्निर्जरानुपदुद्रुवुः ॥ २३ ॥
विश्वक्षोभं ततो दृष्ट्वा बभाषे मधुसूदनः ।
स्मितेन द्विगुणं कुर्वन्वैशद्यं दुग्धवारिधेः ॥ २४ ॥
इदमन्यदुपाक्रान्तं तन्मा मुह्यथ दानवाः ।
इत्येवमुक्ताः कृष्णेन मायिना तत्र दानवाः ॥ २५ ॥
सुराश्च कार्यवशतो वैरं त्यक्त्वा परस्परम् ।
पयोराशिं प्रमथितुं मन्थनेत्रभुजंगमः ॥ २६ ॥
चकृषे दितिजैर्मूर्ध्ना पुच्छेन च सुपर्वभिः ।
अथ तन्मन्थने भूमिरवेपत सकानना ॥ २७ ॥
मन्दरेण समुद्रे च क्षोभिताः प्राणिनो मृताः ।
देवासुराश्च तत्रैतत्क्षोभस्फुटितकङ्कणाः ॥ २८ ॥
एवं संवत्सरशतं व्यमन्थन्नमृतार्णवम् ।
ततः समुद्रं मश्नन्तो ददृशुस्ते कदाचन ॥ २९ ॥
धूमं कल्पान्तसमयं प्रसरत्तिमिरोत्कटम् ।
तदालोकनतः सर्वे संत्यज्याम्बुधिमन्थनम् ॥ ३० ॥

भयेन सिन्धुतीरेषु निमग्ना मीलितेक्षणाः ।
अथ धूमानुवृत्त्यैव महाञ्जज्वाल पावकः ॥ ३१ ॥
ब्रह्माण्डभाण्डमपि यस्तप्पयामास सर्वतः ।
ज्वलन्तं पावकं दृष्ट्वा दूराद्दूरमुपागताः ॥ ३२ ॥
हाहाकारेण महता मुक्तं तीरं महोदधेः ।
तस्यानलस्य ज्वालाभिर्दग्धाः केचिच्च देहिनः ॥ ३३ ॥
अर्धदग्धाः परे चासन्नसाधारणतेजसः ।
अनन्तरं हुतवहात्प्रत्यादृश्यन्त सर्वतः ॥ ३४ ॥
विषमाः प्राणिनः केऽपि नाममात्रेण कम्पदाः ।
दुन्दुभाः कृष्णसर्पाश्च रक्ताश्च पवनाशनाः ॥ ३५ ॥
अन्येऽपि श्वेतपीताद्याः क्रूरा गोनासजातयः ।
मूषिका मशका दंशाः शलभाश्च निरन्तराः ॥ ३६ ॥
कृकिलासाः कर्णशल्याः प्रमत्ताश्चाश्वजातयः ।
दंष्ट्रिणः प्राणिनः केचिद्रौद्राः क्रूरभयंकराः ॥ ३७ ॥
नव भेदाश्च निर्जग्मुर्विषमा विषजातयः ।
ततः कज्जलसंकाशमूर्तिस्त्रैलोक्यमोहकः ॥ ३८ ॥
गन्धेन निगिरन्सर्वानुरगान्कोऽपि देहवान् ।
का वर्ण्यते भीषणता तस्य त्रैलोक्यदाहिनः ॥ ३९ ॥
यत्फूत्कारेण निर्दग्धो विष्णुः कृष्णत्वमाययौ ।
तस्य श्वासेन संस्पृष्टस्तदानीं जगदन्तकः ॥ ४० ॥
बिभर्ति कायमद्यापि गाढोरगविशृङ्खलम् ।
आरुह्य हंसान्संभ्रान्तः स्वयंभुर्दूरगस्ततः ॥ ४१ ॥
यथाकथंचिदात्मानं संरक्ष पलायितः ।
ये दिव्यवपुषो भूताः सार्द्रपुष्पाम्बरस्रजः ॥ ४२ ॥
तेऽपि तद्गन्धमात्रेण प्रापुरङ्गारतुल्यताम् ।
तद्दर्शनं तिरयितुं दूरादपि भयप्रदम् ॥ ४३ ॥

सहस्रं चक्षुषां शक्रः प्यधत्त निजवाससा ।
वह्निस्तद्दर्शनत्रासान्मूर्छितोऽभूत्सहस्रशः ॥ ४४ ॥
निसर्गसुहृदं वायुं न प्राप प्रतिबोधकम् ।
आदावत्युदितः पीतो भुजंगैरेव सर्वतः ॥ ४५ ॥
तद्दर्शनभयं लेभे प्रागभावान्न मारुतः ।
तद्गन्धवासितं वीक्ष्य परिवारं पयोमयम् ॥ ४६ ॥
अपेयं सर्वभूतानां प्रचेताः पर्यचिन्तयत् ।
अहो विमोहसंविग्नः स कुबेरस्तदाभवत् ॥ ४७ ॥
निधानकोशान्संचिन्त्य ते कस्येत्युदितव्यथः ।
किं वातिबहुना सर्वे दग्धास्तन्निकटस्पृशः ॥ ४८ ॥
दूराद्दूरतरैर्लेभे तद्गन्धेन महद्भयम् ।
अथ तं भीषणं दृष्ट्वा त्रैलोक्यग्रसनोद्यतम् ॥ ४९ ॥
कथंचिदप्यवष्टभ्य स्वात्मानं विष्णुरब्रवीत् ।
कोऽसि भोः कुत आयातः किं कर्तुमयमिच्छसि ॥ ५० ॥
इति तस्य वचः श्रुत्वा सोऽब्रवीद्भीषणध्वनिः ।
कालकूटाभिधमहं सागरादुदितं विषम् ॥ ५१ ॥
धूमप्रभृति[1] सर्वोऽयं परिवारो ममैव च ।
परस्परं त्यक्तरोषैर्देवासुरगणैरहम् ॥ ५२ ॥
उदधिर्मथितस्तेन ममामर्षः प्रवर्तते ।
तत्किं बहूक्तैर्निःशेषं कवलीक्रियते मया ॥ ५३ ॥
मयि संनिहिते शक्तिः कस्य संप्रति जीवितुम् ।
इति तस्मिन्वदत्येव भयजर्जरचेतसः ॥ ५४ ॥
विष्णुशक्रप्रभृतयः शंकरं शरणं श्रिताः ।
एकैकशस्तस्य सर्वे द्वारपालनिवेदिताः ॥ ५५ ॥
कैलासशिखरे शंभोः सभां विविशुरानताः ।
अथ ब्रह्मदायो देवा असुराश्च सहस्रशः ॥ ५६ ॥

---

१. 'धूमात्प्रभृ' ख.

देवस्य[1] चक्रिरे चाटुचर्चामन्तकवैरिणः ।
भगवानधिगम्याथ तेषामुत्कटविप्लवम् ॥ ९७ ॥
कालकूटविषग्रासमङ्गीचक्रे दयापरः ।
आनन्दबाष्पनिःष्यन्दैश्चिरं चुम्बितलोचनाः ॥ ९८ ॥
ततस्ते भयमुत्सृज्य कां कां न विदधुः स्तुतिम् ।
ककुद्मन्तमथारुह्य चचाल परमेश्वरः ॥ ९९ ॥
अनुजग्मुश्च तं सर्वे जयारवविधायिनः ।
जग्रास कालकूटं स भगवानवलेपतः ॥ ६० ॥
किं किं न वर्तते साध्यं सर्वकर्तृत्वशालिनः ।
निगिरन्कालकूटं स ययाचे पद्मजन्मना ॥ ६१ ॥
शोभते भगवन्कण्ठे विषमित्यानतिस्पृशा ।
भगवानथ तद्वाचा गलचन्द्रिकके[2] गले ॥ ६२ ॥
न्यबध्नान्मेचकच्छायं कालकूटभुजंगमम् ।
स्फुरता गन्धमात्रेण यस्य विश्वं विमोहितम् ॥ ६३ ॥
स एव[3] तस्य भूषार्थमहो भगवतः क्रमः ।
परित्यज्य विषत्रासं देवाः सर्वे तदाज्ञया ॥ ६४ ॥
पुनरप्यमृतं प्राप्तं(प्तुं) व्यधुर्वारिधिमन्थनम् ।
अथ प्रमथिते तस्मिन्नम्बुधावुदपद्यत ॥ ६५ ॥
लक्ष्मीरैश्वर्यदौर्गत्यकदर्थितजगत्रया ।
आध(द)त्त तां स भगवान्प्रणताय मुरारये ॥ ६६ ॥
विलोभयति लक्ष्मीर्हि तुच्छानविततात्मनः ।
उदभूत्पारिजाताख्यः पादपः सारसौरभः ॥ ६७ ॥
तं वायवे ददावीशो भक्त्या विनतमूर्तये ।
उच्चैःश्रवास्ततो जातो हय ऐरावणो गजः ॥ ६८ ॥
तावदत्त विनम्राय सुत्राम्णे त्रिपुरान्तकः ।
ततश्छत्रं समुत्पन्नं चन्द्रमण्डलसंनिभम् ॥ ६९ ॥

---

१. अयमर्धश्लोकः ख-पुस्तके नास्ति. २. 'चन्दनके' ख. ३. 'एष' क.

वरुणायार्पयामास सलीलं नीलकन्धरः ।
अर्कबिम्बप्रतीकाशः कौस्तुभश्चोदयौ मणिः ॥ ७० ॥
तं लक्ष्मीपतये देवः प्रसादीकृतवान्हरः ।
धन्वन्तरिं समुत्पन्नमायुर्वेदप्रजापतिम् ॥ ७१ ॥
लोकारोग्याय तं देवो वरयामास धूर्जटिः ।
अथोदभूद्भगवती मदिरा दिव्यरूपिणी ॥ ७२ ॥
अनन्तदेवताचक्रसेव्यमाना समन्ततः ।
सर्वदर्शनपूज्यत्वं तस्यै विभुरकल्पयत् ॥ ७३ ॥
विचार्य योग्यतां लोके नियोजयति हि प्रभुः ।
ततः सुधा समुत्पन्ना प्रकटीकृतदिङ्मुखा ॥ ७४ ॥
परमेशप्रसादेन या कार्येषु प्रगल्भते ।
अमृतं भगवान्प्रीतः सुरेभ्यः प्राददत्ततः ॥ ७५ ॥
यत्प्रसादेन ते सर्वेऽप्यजरामरतां गताः ।
अमृतस्य परं सारं चन्द्रलेखामयं ततः ॥ ७६ ॥
आदाय देवा अवदन्प्रणम्य परमेश्वरम् ।
वपुर्भूतिसितं मूर्धा गङ्गालहरिपाण्डुरः ॥ ७७ ॥
इयं चन्द्रकला देव त्वयि तद्भजतु श्रियम् ।
इत्युक्ते तैः स भगवानाददे शशिनः कलाम् ॥ ७८ ॥
विहस्य च जटाजूटकोटरे पर्यकल्पयत् ।
अथ कैलासशिखरं जगाम परमेश्वरः ।
तदाज्ञया च स्वांल्लोकान्धर्मप्रभृतयो ययुः ॥ ७९ ॥

कवलमकृतकालकूटमेकः
पशुपतिरित्यवधार्य साधुवर्गः ।
परिचरतु तदङ्घ्रियुग्ममेव
त्रिभुवनदुर्लभमुख्यसौख्यदायि ॥ ८० ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणौ
कालकूटकवलीकारो नाम तृतीयः प्रकाशः ।

चतुर्थः प्रकाशः ।

ॐ भेदतमोहर्त्रे श्रीमृत्युजिते नमः ।

स्थित्वा भेदमहासरोभुवि सदा दुर्वारमायाशिलां
मूर्द्धन्युद्वहता मया कति न ते क्लेशाः समासादिताः ।
इच्छोद्गच्छति शाम्भवी यदि परानन्दीभवद्विग्रहं
तत्सद्यो जयतामनुग्रहमयीमासूत्रये प्रक्रियाम् ॥ १ ॥

किंचित्साध्यं कदाचित्स्यात्कस्यचित्कर्हिचित्किल ।
अखण्डशक्तेरीशस्य सदा किं किं न सिध्यति ॥ २ ॥

क्रीडन्तं मृडमालोक्य कैलासाद्रौ कदाचन ।
उवाच देवी दन्तांशुभासिताम्बरमण्डला ॥ ३ ॥

भगवन्भवतः सर्वे वर्तन्ते सेवकागणाः ।
क्व स तद्वीरको नाम बहुकालं न दृश्यते ॥ ४ ॥

इति पृष्टोऽब्रवीद्देवो लोकानुग्रहणाय सः ।
विसृष्टो देवि भूलोकं द्विजजन्मगृहीतवान् ॥ ५ ॥

सार्धास्तिस्रो मन्त्रकोटीर्जजापान्तर्जले च सः ।
उत्कण्ठितोऽहं तद्देवि गच्छावस्तद्दिदृक्षया ॥ ६ ॥

अथाब्रवीद्गिरिसुता श्रुत्वा भगवतो वचः ।
मुखेन्दुं कौमुदीमन्तं कुर्वती दशनांशुभिः ॥ ७ ॥

कदाचिदपि सोत्कण्ठो भगवन्नाभवद्भवान् ।
अधुना पुनरुत्कण्ठां किमु त्वत्कुमुदञ्चति ॥ ८ ॥

पुनः पुनरिति प्रोक्तो गौर्या देवो महेश्वरः ।
बभाषे कण्ठमालिन्यविभक्तस्मितपल्लवः ॥ ९ ॥

यदा विसृष्टः स मया तदा वरमयाचत ।
भवदेकायनोऽहं स्यां सदैवेति कृताञ्जलिः ॥ १० ॥

तत्स सद्यः पयोमध्ये भक्तिपावनमानसः ।
जपं करोति विधिवन्मां निध्यायन्नहर्निशम् ॥ ११ ॥

उक्तेति तेनाभिदधे देवी सा जातविस्मया ।
अहमप्युदितोत्कण्ठा तत्क तिष्ठति वीरकः ॥ १२ ॥
उत्तरापथवर्तीति जगाद परमेश्वरः ।
सापि कौतूहलात्फुल्ललोचना पुनरब्रवीत् ॥ १३ ॥
उत्सृज्य पुण्यतीर्थानि किं तिष्ठत्युत्तरापथे ।
नाना म्लेच्छशताकीर्णः श्रूयतेऽसावपावनः ॥ १४ ॥
अथैतद्वचनं श्रुत्वा बभाषे वृषकेतनः ।
दन्तप्रभापरिकरैश्चूडेन्दुं परिवर्धयन् ॥ १५ ॥
उदीच्यां दिशि वर्तन्ते कश्मीरा अतिपावनाः ।
पूर्वानुभूतवृत्तान्ताः श्रूयतां वर्णयामि ते ॥ १६ ॥
कल्पान्तसमये देवि पयोमूर्ति श्रिते मयि ।
त्वं नौस्त्वमगमो[1] वोढुं जगत्कृत्स्नं चराचरम् ॥ १७ ॥
तेनेति गदिते देवी ब्रवीति स्म सविस्मया ।
कस्मिन्काले कथं शंभो किं कृतं न स्मराम्यहम् ॥ १८ ॥
इत्याकर्ण्य महादेवः पुनर्देवीमभाषत ।
विस्मृतं प्राक्स्वरूपं ते रहस्यं शृणु वर्णये ॥ १९ ॥
सर्गारम्भे कदाचित्प्रागहं ब्रह्मादिभिर्वृतः ।
अनिष्पत्तिमयीं सृष्टिं पश्यन्नाकुलतां गतः ॥ २० ॥
ततः सर्वत्र गर्जन्ती ज्वालावलिरदृश्यत ।
विमोहयन्ती तेजोभिर्ब्रह्माणमपि हेलया ॥ २१ ॥
दृष्टा तत्र त्वमस्माभिः पूरयन्ती जगत्त्रयम् ।
ज्वलद्विविधशस्त्रास्त्रपरिवारनिरङ्कुशा ॥ २२ ॥
त्वत्तेजोमोहितास्तेऽथ ब्रह्माद्याः शिक्षिता मया ।
अमुं स्तवमभाषन्त भयविह्वलचेतसः ॥ २३ ॥
त्वं गतिः सर्वभूतानां व्यक्ताव्यक्तस्वरूपिणी ।
कालरात्रिर्महारात्रिः कालक्षयविधायिनी ॥ २४ ॥

१. 'नौत्वमगमो' ख.

इत्यादि स्तोत्रमाकर्ण्य कृता लोकस्थितिस्त्वया ।
प्रतिकल्पं प्रवृत्तिस्ते तादृश्येव महेश्वरि ॥ २५ ॥
मया सहास्मिन्कालेऽपि त्वमेव समवस्थिता ।
सर्वकारणकर्तृत्वं त्वदन्येन न शक्यते ॥ २६ ॥
एवं सुन्दरि वृत्तान्तं कश्मीरेष्ववधारय ।
नौरूपा तत्र बद्धा त्वमिति नौबन्धनं सरः[1] ॥ २७ ॥
तस्मात्त्वत्संनिधानेन कश्मीराः पावनीकृताः ।
संस्पर्धते न सोमीभिर्ब्रह्मलोकोऽपि सुन्दरि ॥ २८ ॥
एवंविधेषु कश्मीरेष्वेष तिष्ठति वीरकः ।
तदेहि देवि गच्छावस्तदालोकनवाञ्छया ॥ २९ ॥
इत्युक्त्वा सह पार्वत्या जगाम परमेश्वरः ।
वीरकालोकनोत्कण्ठानिर्भरो नन्दिपर्वतम् ॥ ३० ॥
गणाः सर्वेऽपि ते द्रष्टुं कौतूहलमकल्पयन् ।
प्रभोश्चित्तानुसारेण वर्तते हि परिच्छदः ॥ ३१ ॥
अथ नन्दिगिरिं प्राप्य बभाषे पार्वतीं शिवः ।
अयं स देशः सूनुस्ते वीरकोऽत्र तपस्यति ॥ ३२ ॥
शिलादेन तपस्तप्तं पूर्वमस्मिन्वनाध्वनि ।
यः शिलाचूर्णमात्रेण प्राणवृत्तिमकल्पयत् ॥ ३३ ॥
लोकानुग्रहकार्याय विसृष्टो वीरको मया ।
पाषाणादग्रहीज्जन्म शिलादश्च तमाददे ॥ ३४ ॥
पुत्रप्रीत्या शिलादस्तं शिशुं नन्दीति भाषते ।
प्रशंसितं मुनिवरैर्जातो नन्दिगिराविति ॥ ३५ ॥
महर्षयोऽपि सर्वे तं योग्यतापरितोषिताः ।
निष्पन्नद्विजसंस्कारमाशीर्भिः पर्यवर्धयन् ॥ ३६ ॥
स बालोऽपि तपश्चक्रे यत्र तत्रापि भावितः ।
अन्ववर्तन्त मुनयस्तत्र तत्र तमादरात् ॥ ३७ ॥

---

१. 'पुनः' ख.

एहि तं नन्दिनं द्रष्टुं यास्यावो विश्ववन्दिते ।
इत्युक्त्वा चोदयामास पार्ष्णिभ्यां वृषभं शिवः ॥ ३८ ॥
अथ नन्दिसमीपं स प्रेप्सुर्देवीमभाषत ।
अस्मत्प्रवेशान्मार्गोऽसावुत्तरोऽस्तु महापथः ॥ ३९ ॥
अस्मिन्गिरौ त्वया देवि मदर्थिन्या तपः कृतम् ।
श्यामं वपुः परित्यज्य गौरीमूर्तिश्च निर्मिता ॥ ४० ॥
अत्र तन्नियमं भीममाचरन्त्याः कदाचन ।
सिंहो बुभुक्षितो देहमैच्छद्भक्षयितुं प्रिये ॥ ४१ ॥
ज्वलन्तीमिव तेजोभिर्दृष्ट्वा त्वां स लुलोठ च ।
करुणाकोमला त्वं तु न कोपं तं प्रति व्यधाः ॥ ४२ ॥
तृप्तये तस्य कृपया स्तनात्क्षीरमवाकिरः ।
सप्तधा यत्प्रसुस्राव रसायनसहोदरम् ॥ ४३ ॥
निपीयैकान्ततो धारां सिंहोऽभूदजरामरः ।
भवत्या वाहनार्थं च गृहीतः परितुष्टया ॥ ४४ ॥
धाराभिरथ शेषाभिस्तीर्थान्युदभवन्पुनः ।
स्तनकुण्डाभिधानेन यैः पवित्रीकृता जनाः[1] ॥ ४५ ॥
तत्पयःस्पर्शमात्रेण भुक्तिमुक्ती करस्थिते ।
यज्ञकोटिसहस्राणां फलं तद्दर्शनाद्भवेत् ॥ ४६ ॥
अत्र क्रूरं तपस्यन्ती भवती कथिता सुरैः ।
भीमा देवीति विघ्नौघघट्टिनी चोत्कटाशया ॥ ४७ ॥
तत्र त्वत्तेजसा शुष्कानालोक्य तटिनीद्रुमान्[2] ।
विषण्णा मुनयः सर्वे संध्योपासाम्भसा विना ॥ ४८ ॥
त्वमत्र तेषु कृपया संध्यारूपमुपागता ।
गतागतोद्यत्पानीयमहाकौतुकधारिणी ॥ ४९ ॥
संध्यारूपत्वमाप्तायाः किंवा तत्र प्रशस्यते ।
आगच्छसि न यद्देवि पापीयोजनसंनिधौ ॥ ५० ॥

---

1. 'जनैः' क-ख. २. 'ह्रदान्' ख.

ऋषिभिर्वालखिल्यैश्च सप्तार्चास्थाननामनि ।
अत्र ते भगवत्पूज्ये सपर्या सप्तधा कृता ॥ ९१ ॥
इयं विशोकारूपेण जगदुत्तीर्य वर्तसे ।
वितस्ता च विशोका च त्वन्नेत्राभ्यामिहोद्यता ॥ ९२ ॥
वितस्ता च प्रविष्टात्र पर्वताच्चकुषे मया ।
तं त्रिशूलेन निर्भिद्य कश्मीरेषु नियोजिता ॥ ९३ ॥
इयमुत्तरगङ्गेति वितस्तैव वृता मया ।
ब्रह्मघ्नोऽपि जलेनास्याः स्पर्शमात्राद्विशुध्यति ॥ ९४ ॥
अपरा वामनेत्रोत्था विशोकेति च या नदी ।
तत्स्पर्शमात्रेण नृणामग्निष्टोमफलं भवेत् ॥ ९५ ॥
इत्युक्ते शंभुना देवी प्रत्युवाच सविस्मया ।
इदानीमपि न प्राप्ता वयं यत्र स वीरकः ॥ ९६ ॥
उवाच स विभुर्देवि क्लान्तासि विसृज श्रमम् ।
इह प्रविश्य तन्मार्गमहमालोकयेऽग्रतः ॥ ९७ ॥
नियोज्येति शिवो देवीं तत्र छायातरोरधः ।
दिण्डिपिङ्गलनामानौ तद्वासत्वे न्यवेशयत् ॥ ९८ ॥
अथ गच्छन्पुरो देवः पर्वतं वृद्धिगामिनम् ।
क्रोधेन मुण्डितं चक्रे वामपादेन शंकरः ॥ ९९ ॥
तत्रैव मुण्डिते शैले स्वरूपस्थोऽभवच्चिरम् ।
पुण्यक्षेत्रादितो देहं त्यजन्नभ्येति शंकरम् ॥ ६० ॥
इति मुण्डितशैलं स वरयामास शंकरः ।
वरयित्वा गिरिं देवो देवीनिकटमासवान् ॥ ६१ ॥
पुनरप्यगमद्द्रष्टुं नन्दिनं शिवया सह ।
देवीगिरा च तत्स्थानं वरयामास धूर्जटिः ॥ ६२ ॥
अयं पृथ्वीधरो[1] लोके विपाकं कल्पयत्विति ।
रामह्रदं पुण्डरीकं दिण्डिशूलकदम्बकम् ॥ ६३ ॥

---

१. 'पथीश्वरो' क-ख.

दातुं फलानि भक्तानां देवो वरयति स्म सः ।
अथोवाच प्रभुर्देवीं गच्छन्नाकाशवर्त्मना ॥ ६४ ॥
मयोऽत्र पर्वतं भित्त्वा निर्ममेऽनुपमं पुरम् ।
तपोभिर्मां स संतोष्य ययाचे मुकुटं प्रिये ॥ ६५ ॥
भक्तिप्रियोऽहमप्यस्मै व्यतरं सोऽपि चाग्रहीत् ।
ततो निजपुरे चारुनानारत्नमये गृहे ॥ ६६ ॥
पूजितं तेन तन्नित्यं मदेकायनचेतसः ।
निवेशितः कोशरूपो गिरिस्तेनास्य चोपरि ॥ ६७ ॥
मुकुटेन च पातालवर्तिना स्पृशते गिरिः ।
ततः प्रभृति सिद्धौघैः पूजितः कोशपर्वतः ॥ ६८ ॥
एतद्धरस्य मुकुटमिति विश्वत्र विश्रुतः ।
इत्थं वदन्महादेवः पार्वत्याः प्रीतिकारणम् ॥ ६९ ॥
प्राप नन्दिगिरिं यत्र वीरकः सरसि स्थितः ।
विलोक्य वीरकं तत्र गभीरे सरसि स्थितम् ॥ ७० ॥
मूर्ध्नाधिरोपितशिलं जगाद परमेश्वरः ।
अस्मिन्नगाधे पुत्रस्ते सरोमध्ये तपस्यति ॥ ७१ ॥
पश्य पार्वति येनैते स्पर्धन्ते न महर्षयः ।
इत्युक्त्वा पार्वतीं देवो गम्भीरं पुनरब्रवीत् ॥ ७२ ॥
उत्तिष्ठ नन्दिन्वरदस्तवायमहमागतः ।
त्वं पार्वतीप्रियसुतस्त्वं पुत्रो मयि भावितः ॥ ७३ ॥
तदुत्तिष्ठ यथाभीष्टं प्रयच्छामि स्वयं वरम् ।
रुद्रो भव चतुर्वक्त्रः षड्भुजश्छगलध्वजः ॥ ७४ ॥
प्रमथप्रथमः पिङ्गश्मश्रुकेशविलोचनः ।
व्याघ्रचर्माम्बरधरस्त्रिनेत्रो वृषवाहनः ॥ ७५ ॥
शूलपाणिर्मया तुल्यो भव सर्वत्र पुत्रक ।
मुञ्च मुञ्च शिलां मूर्ध्नो निर्गच्छ गहनाज्जलात् ॥ ७६ ॥

एह्येहि पुत्र मे लोकं विहरस्व मया सह ।
इत्युक्तवति देवेशे नन्दी सानन्दमानसः ॥ ७७ ॥
जलमध्यगतः शंभुं प्रणिपत्येदमब्रवीत् ।
का न स्तुतिस्तव विभो किं न ध्यानं महेश्वर ॥ ७८ ॥
तद्भासते कथंकारं मादृशां चर्मचक्षुषाम् ।
तथापि ते स्वेच्छयैव प्रकृष्टं ददतो वरम् ॥ ७९ ॥
लोकोत्तरं कृपाराशेः प्रभुत्वेनैव शस्यते ।
किंतु त्वद्दर्शनेनैव निराकाङ्क्षो वरेष्वहम् ॥ ८० ॥
इदं तु भगवन्याचे लोकानुग्रहकाम्यया ।
इदं नन्द्युदकं तीर्थं सर्वत्रैव प्रसिद्ध्यतु ॥ ८१ ॥
अत्र ये स्नान्ति मत्तुल्या देहान्ते ते भवन्तु च ।
मया सहायं छगलो वृद्धिमाप्तो महेश्वर ॥ ८२ ॥
अजरश्चामरश्चास्तु स्वरूपोत्कटमानवान् ।
अन्योऽपि कालविमलप्रभृतिस्तीर्थपञ्चकः ॥ ८३ ॥
संदृष्टो भगवन्भूयाद्भक्तानां किल्बिषापहः ।
मन्मांसवर्धिताश्चामी ये मत्स्याः सरसि स्थिताः ॥ ८४ ॥
तेऽपि भूतगणा देव भूयासुर्भवदाज्ञया ।
भूतेश्वराभिधानेन तेषां च स्यामहं पतिः ॥ ८५ ॥
पिता शिलादश्चायं मे त्वत्सायुज्येन जृम्भताम् ।
मया यत्र तपस्तप्तं तत्कैलाससमं कुरु ॥ ८६ ॥
इहस्थो मुनिवर्गश्च त्वद्गणौपम्यमेत्वयम् ।
एतन्महत्सरः शर्व भूयादुत्तरमानसम् ॥ ८७ ॥
यत्स्पर्शाद्रुद्रसालोक्यं पापिनोऽपि त्वदाज्ञया ।
तव मूर्धच्युता गङ्गा स्थिता मुकुटपर्वते ॥ ८८ ॥
सा जगत्पापशमनी प्राप्नोतूत्तरमानसम् ।
ये ये पिबन्ति तद्वारि ते ते यान्तु परां गतिम् ॥ ८९ ॥

१. 'त्वं कैर्न' क-ख. २. 'मद्दृष्टो' क-ख.

यत्तत्र क्रियते श्राद्धं तृप्यन्तु पितरस्ततः ।
इति तस्याभिलषितं धूर्जटिः प्रत्यपद्यत ॥ ९० ॥
तीव्रसेवाप्रपन्नेभ्यः[1] किं ददुः प्रभवो न वा ।
नन्दिरुद्रोऽप्यथासाद्य वरं सानन्दमानसः ॥ ९१ ॥
प्रणनाम महादेवीं महेशं च मुहुर्मुहुः ।
अथ देवोऽपि कैलासं जगाम गिरिजायुतः ।
नन्दिरुद्रः स तावेव भक्त्या परिचचार ह ॥ ९२ ॥
अहह भगवतः कृपापरत्वं निरवधि कस्य न कौतुकं करोति ।
तदपि सपदि ये पराङ्मुखत्वं विदधति तत्र त एव दैवदग्धाः ॥ ९३ ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणौ
नन्दिरुद्रवर्णनो नाम चतुर्थः प्रकाशः ।

---

## पञ्चमः प्रकाशः ।

ॐ श्रीपरामृतदात्रे नमः ।

यः क्रीडन्निजयेच्छयापि हितदृग्देव्या निशाचारिणं
दुर्भेदं प्रकटय्य दारुणतमोरूपं भयं निर्ममे ।
भूयस्तं च निशातशूलशिखरे ज्ञानस्वरूपे हठा-
दारोप्याभयमातता न भगवान्सोऽयं मैमाभासताम्[2] ॥ १ ॥
सर्वेषामुपकाराय समुत्पत्तिर्दुरात्मनाम् ।
एक एव तु सर्वत्र महादेवो दयानिधिः ॥ २ ॥
कदाचिदात्मजं लब्धुं स्वकुलोचितचेष्टितम् ।
हिरण्याक्षाभिधो दैत्यश्चकार विषमं तपः ॥ ३ ॥
तपोभिर्दुष्करैस्तस्य भगवान्संमुखीकृतः ।
कारुण्यातिशयावेशात्प्रसादरसिकोऽभवत् ॥ ४ ॥
अस्मिन्नवसरे देवी परिहासकुतूहलात् ।
पाणीभ्यां परमेशस्य पिदधे लोचनद्वयम् ॥ ५ ॥

---

१. 'प्रसन्नेभ्यः' क-ख. २. 'समा' ख.

तत्पाणिपिहिते ज्योतिर्मये शर्वेक्षणद्वये ।
उद्भूत्तिमिरं घोरं लोकोपद्रवकारकम् ॥
करनेत्रसमायोगादन्योन्यमभिलाषिणोः ।
तयोर्भगवतोस्तस्मिंस्तिमिरं भूतमुद्ययौ ॥ ७ ॥
तत्क्षोभवशतः सर्वे ब्रह्मविष्णुपुरःसराः ।
शरणं प्रययुः शंभुं शरण्यं करुणानिधिम् ॥ ८ ॥
अथ कारुणिको देवो जगद्विप्लवहानये ।
दीप्तं ज्योतिर्मयं नेत्रं ललाटादुदपादयत् ॥ ९ ॥
उत्कटाभिर्ललाटाक्षिज्वालाभिरगलत्ततः ।
विश्वोपद्रवसंनद्धमन्धकारमशेषतः ॥ १० ॥
तद्भाललोचनशिखिज्वालाभिः कनकाचलः ।
दह्यमानो हठेनार्धे राजतः सहसाभवत् ॥ ११ ॥
तपस्यन्स हिरण्याक्षस्तस्मिन्नेव क्षणेऽचिरम् ।
पुत्रमात्माधिकबलं प्रसन्नं तमयाचत ॥ १२ ॥
शंभुरस्मै ततः पुत्रं प्रायच्छद्भक्तितोषितः ।
तत्तमोविग्रहं रक्षःकुलोचितविचेष्टितम् ॥ १३ ॥
स तमोविग्रहो विश्वं मोहयन्नन्धतावशात् ।
अन्धकाख्यां दधे तस्मादुत्पन्नः परमेश्वरात् ॥ १४ ॥
तस्य निश्वासमात्रेण कम्पमानं मुहुर्मुहुः ।
वात्याहताभ्राम्बरवद्ब्रह्माण्डं समजायत ॥ १५ ॥
तद्बलान्निष्प्रभीभूतौ तदा सूर्यसुधाकरौ ।
चिरं विचार्य लोके न परिज्ञातौ प्रयत्नतः ॥ १६ ॥
हिरण्याक्षोऽपि तं पुत्रं प्राप्य रक्षःकुलोन्नतम् ।
पूर्णं तपःफलं मेने शिवभक्त्येकभावितः ॥ १७ ॥
ततोऽन्धकः स नेत्रार्थी तपः क्रूरमकल्पयत् ।
तीव्रोद्योगवतामस्ति किमसाध्यं जगत्त्रये ॥ १८ ॥

कुर्वन्वर्षशतं दिव्यं दुष्करं स तपःक्रमम्।
देवमाराधयामास तदेकायनमानसः ॥ १९ ॥
प्रतिवर्षमसौ जुह्वन्मांसं कर्षन्कलेवरात्।
प्राप कालेन महता निर्मांसत्वं ततः परम् ॥ २० ॥
अथ तीव्रतपश्चर्यापरितुष्टो महेश्वरः।
तस्याग्रतः प्रादुरभून्मुकुटोदञ्चिताञ्जलेः ॥ २१ ॥
देवं प्रसन्नमालोक्य ययाचे वरमन्धकः।
नेत्रे वितर मे विश्वजयसिद्धिं स्थिरां तथा ॥ २२ ॥
उवाच च महादेवो नेत्रयुग्मं प्रवर्तताम्।
स्थिरा जगत्रयमयी सिद्धिरेषा कथं पुनः ॥ २३ ॥
त्वयि स्थिरजयप्राप्तौ सर्वे शक्रादयः सुराः।
प्रयान्ति कान्दिशीकत्वं नैसर्गिकविरोधतः ॥ २४ ॥
इत्युक्तवति देवेशे सोऽन्धकः प्रणतोऽब्रवीत्।
भक्तिलभ्य महादेव श्रूयतां मम भारती ॥ २५ ॥
मम धर्मे मतिर्यावत्तावल्लक्ष्मीः प्रवर्तताम्।
विरतायां भवद्भक्तौ दुःखमेव भवत्विति ॥ २६ ॥
एवं तस्याभिलषितं भगवान्प्रत्यपद्यत।
करुणाकोमलधियां परार्थप्रवणं मनः ॥ २७ ॥
अथान्धको लब्धवरः प्रणनाम महेश्वरम्।
मुहूर्तमात्रेण ततो विश्वात्मा स तिरोदधे ॥ २८ ॥
अहो भगवतः साध्ये अनुग्रहतिरोहिते।
तमन्तरेण केनापि न किंचिदपि शक्यते ॥ २९ ॥
तथापि सोऽन्धको धर्म्या विधाय सुचिरं क्रियाः।
कुपथेन प्रववृते विनाशफलशंसिना ॥ ३० ॥
अकस्मादेव शक्रादीनाचक्राम दिवौकसः।
सर्वलोकपराभूतिं चकार स निशाचरः ॥ ३१ ॥

अथ ब्रह्मादयो देवाः शक्रविष्णुपुरःसराः ।
अन्धकेन समं योद्धुं प्रावर्तन्त बलीयसा ॥ ३२ ॥
अन्धकोऽप्यसुरैः सार्धं स्वर्गलुण्ठनवाञ्छया ।
निर्जगाम सहुंकारतिरस्कृतजगत्त्रयः ॥ ३३ ॥
सुराणामसुराणां च तत्र प्रववृते रणः ।
अन्योन्यायुधसंघर्षज्वालासौदामि(म)नीमयः ॥ ३४ ॥
अथैके कवलीचक्रुरन्धकस्य पदातयः ।
हाहाकारपरान्हन्त देवान्संग्रामसंमुखान् ॥ ३५ ॥
गरुडेन समं विष्णुं जग्रास जम्भदानवः ।
न्यगिरत्पद्मजन्मानं कुजम्भाख्यश्च राक्षसः ॥ ३६ ॥
विकुक्षिः कवलीचक्रे शक्रमाक्रान्तविष्टपम् ।
कोटिशो निर्जराँश्चान्ये ग्रसन्ते स्म निशाचराः ॥ ३७ ॥
एवं नष्टेषु देवेषु परिम्लानो बृहस्पतिः ।
स्तोत्रेणाराधयामास भगवन्तं त्रिलोचनम् ॥ ३८ ॥
प्रभुं प्रसन्नमालोक्य बभाषे दिविषद्गुरुः ।
बाष्पनिःष्पन्दसंदर्भगर्भया प्रसभं गिरा ॥ ३९ ॥
भगवन्निर्जराः सर्वे भवद्भक्तिपरायणाः ।
स्मृतिशेषत्वमापन्नाः शरीरेणापि संप्रति ॥ ४० ॥
तीक्ष्णधारमवज्ञाय चक्रं तत्र जनार्दनम् ।
जग्रास गरुडारूढं जम्भो नाम निशाचरः ॥ ४१ ॥
नक्तंचरः कुजम्भाख्यो निगीर्य जलजासनम् ।
अस्वादिष्टं जरन्मांसमित्यनिन्दत्पुनः पुनः ॥ ४२ ॥
अहो महन्मया दृष्टमवद्यं बत धूर्जटेः ।
विकुक्षिणा सहस्राक्षो यद्ग्रस्तो भयकातरः ॥ ४३ ॥
इत्थं श्रुत्वा वचस्तस्य जगाद परमेश्वरः ।
जीवन्त एव ब्रह्माद्याः स्थितास्तदुदराध्वनि ॥ ४४ ॥

तदिदं वत्स जृम्भास्त्रं गृहाणास्य प्रभावतः ।
निशाचराणां वदनाद्विकचा निः(न्नि)सरन्ति ते ॥ ४५ ॥
ततो जृम्भास्त्रमादाय तस्माद्देवाद्बृहस्पतिः ।
भगवत्स्मरणं कृत्वा सुरारीन्प्रति संदधे ॥ ४६ ॥
अथ जम्भादयः सर्वे जातास्ते जृम्भिणोऽसुराः ।
अस्त्रप्रभावान्न्यसरन्देवास्तत्कुक्षितश्च ते ॥ ४७ ॥
ततो निर्गत्य ते देवास्तेषामुदरवर्त्मनः ।
तद्भयेन परित्यज्य राज्यं क्वापि पलायिताः ॥ ४८ ॥
निशाचराश्च त्रैलोक्यमाचक्रा(?)मुश्चराचरम् ।
अधिकारिणमात्मानं स्वर्गे चक्रुर्निरर्गलाः ॥ ४९ ॥
दासीवृत्तं सुरस्त्रीणां विधाय पिशिताशिनः ।
निजोपवनवीथीषु दिव्यान्कल्पद्रुमान्व्यधुः ॥ ५० ॥
इत्युपद्रवमालोक्य कदाचिदमराधिपः ।
जगाद रहसि स्फीतसंतापो दिविषद्गुरुम् ॥ ५१ ॥
उपद्रवोऽयं निर्मुक्तो वर्तते गहनौकसाम् ।
तदत्र कोऽप्युपायोऽस्ति चिन्त्यतां दिविषद्गुरो ॥ ५२ ॥
पौरुषं देशकालादिसापेक्षमिह लक्षये ।
प्रज्ञयैव सदा सिद्धिरिति सिद्धिमतां वर ॥ ५३ ॥
इत्युक्त्वा विरते तस्मिन्बृहस्पतिरभाषत ।
उपायं चिन्तयिष्यामि तद्दुःखं त्यज्यतामिति ॥ ५४ ॥
अथैकदा प्रियरणं नारदं सोऽब्रवीद्रहः ।
बृहस्पतिः सुराधीशकार्यसिध्ध्यभिलाषुकः ॥ ५५ ॥
भगवन्नारदमुने समुत्पन्ना दिवौकसः ।
यज्ञादिकाः क्रिया नष्टास्तदत्र कुरु मद्वचः ॥ ५६ ॥
गच्छ त्वमन्धकपुरीमभिधेह्यन्धकासुरम् ।
हरस्य हृद्या दयिता तां हर स्वोचितामिति ॥ ५७ ॥

जिहीर्षत्यथ तामस्मिन्प्रभुर्वैमुख्यमागतः ।
सुराधिपाभीष्टसिद्धिं हेलयैव करिष्यति ॥ ५८ ॥
एवं करोमीति वचः प्रतिपद्य बृहस्पतेः ।
नारदोऽप्यन्धकपुरीमगमद्देवकार्यतः ॥ ५९ ॥
अन्धकाभ्यर्णमासाद्य जगाद च स नारदः ।
अमर्त्यकार्यनिष्पत्तिप्रकल्पितमनोरथः ॥ ६० ॥
अहो ते पौरुषोत्कर्षः सर्वलोकेषु दृश्यते ।
अहो सिद्धिरहो बुद्धिरिति किं किं न शस्यते ॥ ६१ ॥
मयाद्य मन्दरगिरौ दृष्टा काचन सुन्दरी ।
रतीर्लक्ष्मीः शची वापि न जातु स्पर्धते यया ॥ ६२ ॥
किंतु सा वर्तते दिव्या दुर्गतस्य तपस्विनः ।
उचिता त्वादृशस्येति त्वामहं वक्तुमागतः ॥ ६३ ॥
उक्त्वेति नारदे याते तदानीं दिविषत्पुरात् ।
बृहस्पतेर्गिरा कामो विवेशान्धकमानसम् ॥ ६४ ॥
चेतः प्रविश्य कामेन मोहितो भवदन्धकः ।
तामानेतुं बहुतरान्राक्षसान्स व्यसर्जयत् ॥ ६५ ॥
अथ शंभौ स्वरूपस्थे राक्षसास्ते सहस्रशः ।
एकाकिन्या महादेव्याः समीपं प्रापुरुन्मदाः ॥ ६६ ॥
देवी तेषां मनोवृत्तिं ज्ञानदृष्ट्या व्यचिन्तयत् ।
कुमारीलक्षमसृजत्तद्वधाय न्ययुङ्क्त च ॥ ६७ ॥
दिव्यायुधाः कुमार्यस्तान्राक्षसान्समताडयन् ।
तेऽगच्छन्नन्धकपुरं लूनाङ्गाश्च समन्ततः ॥ ६८ ॥
अन्धकेनापि साश्चर्यं पृष्टास्ते सर्वमब्रुवन् ।
कुमारीमात्रचारित्रमिति छिन्नाङ्गविग्रहाः ॥ ६९ ॥
तेभ्योऽधिगम्य तां वार्तां तद्युद्धकृतनिश्चयः ।
निर्ययावन्धकः क्रोधात्समं सर्वैर्निशाचरैः ॥ ७० ॥

युद्धं विधातुमायाते तदानीमन्धकासुरे ।
मतिविप्लवमज्ञासीद्विभुरस्य विनाशने ॥ ७१ ॥
ब्रह्मा विष्णुश्च शक्रश्च ये चान्येऽपि दिवौकसः ।
सर्वेऽप्येते व्योमपथादैक्षन्त समरक्रमम् ॥ ७२ ॥
प्रजह्रुरथ दैत्येन्द्रबले भगवतीगणाः ।
बृहस्पतेरमन्यन्त प्रज्ञोत्कर्षं च निर्जराः ॥ ७३ ॥
नन्दिरुद्रस्तदा क्रोधाज्जम्भासुरमघातयत् ।
यो विष्णुमकरोदेककवलं गरुडस्थितम् ॥ ७४ ॥
गणाधिपः कुजम्भाख्यं जघान पिशिताशनम् ।
ब्रह्माण्डमिव यद्वक्त्रकुहरं प्राविशद्विधिः ॥ ७५ ॥
न्यगिरद्यः सहस्राक्षं विकुक्षिं तं मदोत्कटम् ।
नन्दिरुद्रः सहुंकारं चपेटाभिरपातयत् ॥ ७६ ॥
पाणिप्रहरणश्रान्तो नन्दी कांश्चन दानवान् ।
पादताडनमात्रेण स्मृतिशेषानकल्पयत् ॥ ७७ ॥
ततो हतेषु सर्वेषु रक्षःसु भगवद्गणैः ।
युद्धाय क्रोधसंभ्रान्तो निर्ययावन्धकासुरः ॥ ७८ ॥
आयान्तमन्धकं दृष्ट्वा गणवर्गः पलायितः ।
भगवद्वरतस्तस्योत्कर्षं गणैरमन्यत ॥ ७९ ॥
गणानुपद्रुतान्पश्यन्नन्धकं च महाबलम् ।
हसन्महेश्वरः शूलशिखायां तं न्यवेशयत् ॥ ८० ॥
ततः शूलशिखारूढस्योद्ययुः शोणितापगाः ।
अन्धकस्याखिलाङ्गेभ्यो गणानां भयहेतवः ॥ ८१ ॥
यत्र यत्र पपातास्य रुधिरस्य कणः कणः ।
तत्र तत्र च तत्तुल्यो राक्षसो राक्षसोऽजनि ॥ ८२ ॥
रक्षःकोटिसहस्राणि तच्छोणितकणोत्करात् ।
इत्थं निर्गत्य भूयोऽपि विश्वक्षोभमकल्पयन् ॥ ८३ ॥

तस्मिन्नवसरे देवो वीक्ष्य तत्क्षोभितं जगत् ।
ससर्ज दक्षिणात्कर्णाद्भीषणीयं हुताशनम् ॥ ८४ ॥
तन्मध्यान्निर्ययौ देवी पद्मरागाचलोपमा ।
नृमुण्डमुण्डिता व्यालभूषणा भीषणाकृतिः ॥ ८५ ॥
सिंहचर्मावृतकटिर्मेखलीकृतपन्नगा ।
अन्त्रस्रग्दामसहिता त्रिनेत्रा दीप्तमूर्धजा ॥ ८६ ॥
तीक्ष्णात्रस्तस्फुरद्दन्ता घण्टामालोपवीतिनी ।
कपालखट्वाङ्गधरा शूलखङ्गायुधोत्कटा ॥ ८७ ॥
कर्णनिर्गमनान्नाम्ना कर्णमोटेति[1] विश्रुता ।
सा निर्गत्य ततो रक्तमन्धकस्याखिलं पपौ ॥ ८८ ॥
तस्मिन्कपाले निक्षिप्य राक्षसोत्सादनक्षमा ।
पीतरक्तासवा सर्वानन्यानपि निशाचरान् ॥ ८९ ॥
निजघान ततो देवी दीप्तज्वालोपमाकृतिः ।
अथ तत्र त्रिशूलाग्रे स शुष्यन्नन्धकासुरः ॥ ९० ॥
संवत्सरसहस्रान्ते प्रोवाच प्रणमन्हरम् ।
नमस्ते परमेशाय पञ्चकृत्यविधायिने ॥ ९१ ॥
कारणैरप्यविज्ञेयस्वरूपाय नमोऽस्तु ते ।
विगलन्मोहतिमिरस्तदानीमन्धकासुरः ॥ ९२ ॥
शूलाग्रादेव गिरिशं स्तुत्वेत्थं पुनरब्रवीत् ।
रक्षोवृत्तं निवृत्तं मे गतिस्त्वत्तोऽस्ति नापरा ॥ ९३ ॥
उत्पादितस्त्वयैवाहं शान्तिं नीतस्त्वयैव च ।
धन्योऽस्मि देव भवता यः शूलमधिरोपितः ॥ ९४ ॥
इयतैव चरित्रेण मां स्तोष्यन्ति चराचराः ।
अधिगच्छति लोकोऽयं किमन्यज्जन्मनः फलम् ॥ ९५ ॥
यद्देवदेव भवतस्त्रिशूले स्थीयते मया ।
त्वमेव सर्वभूतानां शरण्यो विश्वकृद्विभुः ॥ ९६ ॥

---

१. 'भेटेति' ख.

एको महाकारुणिकस्तस्मादनुगृहाण माम्।
यदज्ञानं मया पूर्वमकारि श्रीविमोहिना ॥ ९७ ॥
तल्लोकनाथ क्षन्तव्यं भृत्यो विश्वप्रभो ह्यहम्।
देव्या गणैर्नन्दिना वा न मे किंचित्प्रयोजनम् ॥ ९८ ॥
त्वमेव मे गतिर्देव तद्वरं दातुमर्हसि।
इति वर्षसहस्रान्ते शुष्कस्नाय्वस्थिबन्धनात् ॥ ९९ ॥
अन्धकाद्वचनं श्रुत्वा प्रसन्नः शंभुरब्रवीत्।
प्रीतोऽस्मि ते वरं किंचिदभ्यर्थय निजेच्छया।
विष्णुत्वं वासवत्वं वा ब्रह्मत्वं वा ददामि ते ॥ १०० ॥
अथवा रक्षसां राज्यं प्रार्थय त्वं मदाज्ञया।
यत्नाद्यत्राभिलाषो वा प्रसन्नोऽहं न संशयः ॥ १०१ ॥
इत्युक्ते विभुना सोऽपि जगाद रचिताञ्जलिः।
भगवन्नधुना मोहो विरतो मे पुरातनः ॥ १०२ ॥
शक्रत्वं च हरित्वं च ब्रह्मत्वं चार्पितं त्वया।
किमेतैर्घोरसंसारगतागतविधायिभिः ॥ १०३ ॥
रक्षसामाधिपत्यं यत्तत्पुनः केन याच्यते।
तत्प्रमादाद्भवद्भक्तिः शिथिलीभावमाप मे ॥ १०४ ॥
एकमेव वरं याचे भवद्भक्तिनिबन्धनम्।
गणोऽहं स्यां तवैवेति किमन्यैरवरैर्वरैः ॥ १०५ ॥
अङ्गीचकार तं तस्य वरं करुणया शिवः।
अनुग्रहे निग्रहे च प्रभोरेव प्रवृत्तयः ॥ १०६ ॥
अथायं परमेशेन त्रिशूलादवरोपितः।
स्पृष्टः करेणापरेण निर्व्रणत्वमवाप्तवान् ॥ १०७ ॥
इत्यनुग्रहमालोक्य तस्याशेषदिवौकसः।
ब्रह्मादयः प्राञ्जलयो महादेवं बभाषिरे ॥ १०८ ॥

---

१. 'रधरै' ख.

अहो भगवतः कोपप्रसादादानचातुरी ।
निगृह्यानुगृहीतो यदेष कारुण्यलेशतः ॥ १०९ ॥
तदेव मे तद्वृत्तान्तं यः शृणोति समाहितः ।
तस्यास्तु देहिनो लक्ष्मीः स्थिरा श्रेयश्च वर्धताम् ॥ ११० ॥
एवमस्त्विति तेषां स वचनं प्रत्यपद्यत ।
अन्धकश्चाभवत्पूर्णभक्तिपावनमानसः ॥ १११ ॥
भवसरणिजुषां पिनाकपाणिः
प्रसभमनुग्रहनिग्रहौ करोति ।
इति हृदि विनिधाय तस्य भक्तिं
रचयति यः स कृती स एव धन्यः ॥ ११२ ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणा-
वन्धकासुरवरप्रदानं नाम पञ्चमः प्रकाशः ।

---

षष्ठः प्रकाशः ।

ॐ नमः श्रीप्रकाशविमर्शरूपाभ्यां शिवाभ्याम् ।

यत्स्वातन्त्र्यमखण्डमेव घटते तच्छक्तिरित्युच्यते
शुद्धः सर्वगतः प्रकाश इति यो जागर्ति सोऽयं शिवः ।
अन्योन्यं विगलद्विभागमनयोरैकात्म्यमायासय-
न्नित्यं हर्षपथावतारविरमद्भेदप्रथः स्यामहम् ॥ १ ॥
नियतं नियतं कृत्यं ब्रह्मविष्ण्वादिषु स्थितम् ।
अतिदुर्घटकारित्वं शिवादन्यत्र न क्वचित् ॥ २ ॥
अथेत्थमन्धकः प्राप्य गणत्वं परमेशितुः ।
शिवैकायनचेताः स प्रणनाम न पार्वतीम् ॥ ३ ॥
त्र्यक्षं प्रदक्षिणीकृत्य स गणेन्द्रः सहस्रशः ।
ननाम न महादेवीं मोहचेताः सुनिश्चितम् ॥ ४ ॥
देवी विलोक्य तं नित्यमनभ्रं शिवभावितम् ।
चपलो भृङ्गवदसाविति भृङ्गाख्यया व्यधात् ॥ ५ ॥

देवी तमेकदोवाच माता तेऽहं पिता शिवः ।
तं नमन्मां न नमसि क्रमः कोऽसौ भवेदिति ॥ ६ ॥
अब्रवीत्स गणेन्द्रस्तां शंभुर्माता पिता च मे ।
तवापि शरणं देवः स एवेति किमुच्यते ॥ ७ ॥
अन्ये गणा यथा नन्दिप्रमुखास्त्वं तथैव मे ।
प्रभुः पुनरसौ शंभुः स्तूयते वा प्रणम्यते ॥ ८ ॥
नाहं पुत्रो न माता त्वं निश्चयोऽयं दृढो मम ।
तत्किमन्यन्मया देवो नक्तंदिनमुपास्यते ॥ ९ ॥
इत्युक्ते तेन सा देवी प्रकोपस्फुरिताधरा ।
जगाद भवतः कोऽयं व्यामोहो हृदि वर्तते ॥ १० ॥
सुतोऽसि मम दाक्षिण्यात्किमेवं प्रतिभाषसे ।
नन्वेष पुरुषे पुत्र प्रकृतित्वे स्थिता त्वहम् ॥ ११ ॥
त्वङ्मांसशोणितान्त्रं यद्वसावस्तिगुदं च यत् ।
तन्मातृवीर्यं निश्चित्य मदीयमवधार्यताम् ॥ १२ ॥
नखदन्तास्थिसंघातनासाश्मश्रु शिरश्च यत् ।
तत्पित्र्यमिति संचिन्त्य शाम्भवं हृदये कुरु ॥ १३ ॥
इत्थं स्थिते क्रमे कोपं व्यामोहस्तव चेतसि ।
मातापित्र्यस्फुरद्रक्तरेतोरूपो हि विग्रहः ॥ १४ ॥
इति भृङ्गिरिटिः श्रुत्वा स्वयोगेन बलीयसा ।
अत्यजन्मातृकं भागं त्वङ्मांसादि शरीरतः ॥ १५ ॥
ततः प्रभृत्यस्थिशेषो ववृते स गणेश्वरः ।
अनम्रः परमेश्वर्याः शिवभक्तिपरायणः ॥ १६ ॥
तमप्रणतमालोक्य कदाचित्परमेश्वरी ।
सुधांशुलेखामूर्धानं सप्रश्रयमभाषत ॥ १७ ॥
दृढोऽस्य निश्चयश्चित्ते नाथ भृङ्गिरिटेः स्थितः ।
न यत्कचित्प्रणमति प्रसादेनापि देव माम् ॥ १८ ॥

यदन्यगणसामान्यादसौ मामपि गण्यते[1] ।
भवद्भक्तिमदोद्रेकान्न किंचिदपि चेक्षते ॥ १९ ॥
तदत्र भगवन्नेक उपायश्चिन्तितो मया ।
निर्मायैकशरीरत्वं त्वं वर्तस्व मया सह ॥ २० ॥
एकदेहस्थितिकृतोरावयोरविभागयोः ।
विशेषमेष प्रमथः कथं कर्तुं प्रगल्भते ॥ २१ ॥
एवमुक्ते महादेव्या तदानीं शशिशेखरः ।
अग्रहीदङ्गुलिं देव्या वामहस्तात्कनीयसीम् ॥ २२ ॥
वामहस्तं तयाङ्गुल्या मथ्नाति स्म स चात्मनः ।
समा सहस्रेण ततो देवो गौरीश्वरोऽभवत् ॥ २३ ॥
वामे तस्य महादेवी रराज कनकोज्ज्वला ।
देवश्च दक्षिणे भूरितुषारभरनिर्भरः ॥ २४ ॥
एकत्र शीतांशुकला कपालालंकृतं शिरः ।
अभूदन्यत्र धम्मिल्लचूडारत्नविभूषितम् ॥ २५ ॥
दृप्यद्भुजंगमारब्धकर्णिकः कर्ण एकतः ।
अन्यतश्चाभवद्दिव्यमणिकुण्डलमण्डितः ॥ २६ ॥
एकतो लोचनं वह्निज्वालाभास्वरतारकम् ।
अन्यतश्च शरत्कालपीवरेन्दीवरोपमम् ॥ २७ ॥
एकतो नासिकाघोरश्वसना कन्दरोपमा ।
अन्यतश्चाभवत्स्वर्णघटितेव मनोरमा ॥ २८ ॥
एकः कपोलो व्यालोलफणिफूत्कारभूषितः ।
अन्यतश्चाभवच्चारुकुरङ्गमदमेदुरः ॥ २९ ॥
एकत्र कण्ठो दुष्प्रेक्ष्यकालकूटविभूषणः ।
आसीदन्यत्र विस्तीर्णमहाहारमनोरमः ॥ ३० ॥
एको भवद्भुजो भूरिभुजंगकटकोत्कटः ।
अपरश्चाभवच्चारुमरीचिमणिकंकणः ॥ ३१ ॥

---

१. चिन्त्योऽयं प्रयोगः.

एकतः कठिनं वक्षो मन्दराद्रिशिलोपमम् ।
अन्यतश्चाभवद्दिव्यं कचत्काञ्चनसंनिभम् ॥ ३२ ॥
एकत्र वक्षो विस्तीर्णं भस्मधूलिविलेपनम् ।
अन्यतश्चाभवत्तुङ्गकुचमण्डलमण्डितम् ॥ ३३ ॥
भोगियज्ञोपवीताङ्कं बभासे मध्यमेकतः ।
अन्यतश्च स्फुरच्चारुवलित्रयविचित्रितम् ॥ ३४ ॥
एकत्र कटिसंस्थानं भाजनं गजचर्मणः ।
अन्यत्र रत्नरशनाझांकाराह्लादितश्रुति ॥ ३५ ॥
ऊरुरेकत्र भस्माङ्कः कदलीकान्तिरेकतः ।
एकत्र पादे भुजगः परत्र मणिनूपुरः ॥ ३६ ॥
एवं दक्षिणतस्त्र्यक्षो वामतश्चाचलात्मजा ।
अविभक्तिमयं कायं कुर्वाते स्म निजेच्छया ॥ ३७ ॥
अथ **गौरीश्वरो** देवो ननर्त स निरन्तरम् ।
वामार्धे विलसत्काञ्चि दक्षिणार्धे गरोत्कटम् ॥ ३८ ॥
तमालोक्य परं देवं विश्वकौतुककारिणम् ।
ब्रह्मविष्ण्वादयो देवा भक्त्याचारैरुपाचरन् ॥ ३९ ॥
नन्दी मुरजमादाय वादयामास तत्क्षणे ।
उपवीणयितुं देवौ प्राप्तौ नारदतुम्बुरू ॥ ४० ॥
अन्येऽपि सुरगन्धर्वसिद्धविद्याधरादयः ।
प्रमोदिता विदधिरे गीतं तत्समयोचितम् ॥ ४१ ॥
अथ भृङ्गिरिटिर्दृष्ट्वा शिवभ(श)क्तिमयं जगत् ।
स्तुतीश्चकार प्रणमन्भवभक्त्येकभावितः ॥ ४२ ॥
ततः प्रभृति पार्वत्याः शंकरस्येव भक्तिमान् ।
सदा भृङ्गिरिटिः पादौ ववन्दे तीव्रभावनः ॥ ४३ ॥
ननर्त यत्र भगवान्स्थानं वरयति स्म तत् ।
अयं हर्षपथो हर्षं जनोऽस्माल्लभतामिति ॥ ४४ ॥

विषमविषयजन्ममृत्युरूपा
विरतगतागतजायमानचिन्ता ।
जगति कतिपये शिवं स्मरन्तो
वपुरपि मोक्षसदृक्षमुद्वहन्ति ॥ ४५ ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणा-
वर्धनारीश्वरोदयो नाम षष्ठः प्रकाशः ।

---

सप्तमः प्रकाशः ।

ॐ नमः श्रीकामेश्वराभ्याम् ।

दृप्यद्दुःसहभेदराक्षसगणक्षोभादकस्मादिदं
रूपं हारयते स कृष्ण इह यन्मायाप्रमाता हठात् ।
तत्तस्मै प्रतिपाद्य निस्तुषकचत्संवित्तिचक्रात्मकं
श्रीचैतन्यमहेश्वरो मम हृदि स्फारं समारोहतु ॥ १ ॥

दयालुरन्यः किं दद्यात्परमित्यनियन्त्रितः ।
ईश्वरस्यैव पूर्णस्य दातृत्वं शोभतेतराम् ॥ २ ॥

बभूव दानवपतिर्बलवाञ्छरभाभिधः ।
देवायुधानि गात्रेषु यस्य जीर्णान्यनेकशः ॥ ३ ॥

तमजेयं समालोक्य सर्वोपद्रवकारकम् ।
विनिर्ममे ब्रह्मदण्डं तद्वधाय पितामहः ॥ ४ ॥

ब्रह्मदण्डोऽपि तं प्राप्य ज्वलत्पावकभास्वरः ।
आसाद्य विफलीभावमकिंचित्करतामगात् ॥ ५ ॥

एवं तदक्षमं वीक्ष्य कदाचिद्विष्णुमागतम् ।
स्निग्धगम्भीरया वाचा जगाद जलजासनः ॥ ६ ॥

नक्तंदिनममी लोकाः शरभेन(ण) कदर्थिताः ।
असदस्त्राणि सर्वाणि निर्वीर्याण्यत्र भूरिशः ॥ ७ ॥

तदस्य दैत्यराजस्य वधार्थमुपयुज्यते ।
महेश्वरकरस्थायि चक्रं तत्संप्रपाद्यताम् ॥ ८ ॥

त्वया तोषयितुं शक्यस्तपोभिः परमेश्वरः ।
स प्रदास्यति चक्रं ते शरभो येन जीयते ॥ ९ ॥
इत्युक्तस्तेन गोविन्दो बभाषे कौतुकान्वितः ।
कुतश्चक्रं समुत्पन्नं कीदृग्वा वर्ण्यतामिति ॥ १० ॥
एवं पृच्छति वैकुण्ठे प्रोवाच चतुराननः ।
सितेन कुर्वन्हंसानां मृणालमृगतृष्णिकाम् ॥ ११ ॥
पूर्वं कल्पक्षये वृत्ते नष्टे स्थावरजंगमे ।
अव्यक्तभूते परितः प्रसुप्ते जगति स्थिते ॥ १२ ॥
भविष्यत्सर्गनिष्पत्तिचिन्तनैकपरे मयि ।
एकदा मन्मुखादेको निर्जगाम बली पुमान् ॥ १३ ॥
सर्वमेकार्णवं विश्वं स चचार महाबलः ।
जानुदघ्नमभूद्वारि तस्य दीर्घवपुष्मतः ॥ १४ ॥
नापश्यद्वारिमध्ये स यदा किंचिदितस्ततः ।
मामभ्येत्य तदादृप्यन्युद्धं देहीत्यभाषत ॥ १५ ॥
अहं तदानीं संचिन्त्य तत्र रुद्रमदूरगम् ।
आह्वयस्वामुमित्युक्त्वा घोरं दैत्यं व्यसर्जयम् ॥ १६ ॥
ततो गाढमदोन्मादो रुद्रमाह्वयते स सः ।
प्रहरस्व मयेत्येनं सोऽब्रवीच्च महेश्वरः ॥ १७ ॥
दानवः सोऽपि गर्वेण तदानीं परमेश्वरम् ।
अयःपिण्डेन चण्डेन ताडयामास मूर्धनि ॥ १८ ॥
स तद्गृहीत्वायःपिण्डं चक्रं चक्रे महेश्वरः ।
शिरश्चिच्छेद तेनैव दानवस्यावहेलया ॥ १९ ॥
कल्पान्तकालचण्डांशुसहस्रगुणतेजसः ।
तस्य चक्रस्य यद्वीर्यं तद्गिरां गोचरे कुतः ॥ २० ॥
तदाराध्य महादेवं चक्रं याचस्व केशव ।
स दास्यति प्रसन्नस्ते भगवान्भक्तवत्सलः ॥ २१ ॥

इत्युक्तवन्तं ब्रह्माणमापृच्छ्याथ जनार्दनः ।
जगाम हिमवच्छृङ्गं बदर्याश्रमकाभिधम् ॥ २२ ॥
तत्रोर्ध्वबाहुरभवद्वायुभक्षः समाशतम् ।
क्रूरक्रूरतपश्चर्यापरितोषितशंकरः ॥ २३ ॥
पुनर्वर्षायुतान्यष्टौ निराहारो यदा स्थितः ।
तदा ददौ महादेवो दर्शनं दयया शिवः ॥ २४ ॥
विश्वात्मानं तमालोक्य परिक्षीणतपःक्रमः ।
उवाच केशवो भक्त्या मुकुटोदञ्चिताञ्जलिः ॥ २५ ॥
जय प्रभो महादेव विश्वात्मञ्जय धूर्जटे ।
जय सृष्टिस्थितिध्वंसकारिणे भवते नमः ॥ २६ ॥
एवं स्तुवन्तं गोविन्दमुवाच परमेश्वरः ।
तपसा ते प्रसन्नोऽहमभीष्टं प्रार्थ्यतामिति ॥ २७ ॥
अथोवाच महादेवं केशवो भक्तिभावितः ।
आनन्दाश्रुकणैः कुर्वन्कर्बुरामीक्षणद्वयीम् ॥ २८ ॥
भगवन्बाधते देवाञ्छरभो नाम दानवः ।
समग्राण्यस्मदस्त्राणि तत्र वैफल्यमागमन् ॥ २९ ॥
सर्वातिशायि तद्देव देह्यस्त्रं करुणापर ।
चक्राभिधं यदासाद्य दानवो जीयते मया ॥ ३० ॥
एवं ब्रुवति गोविन्दे जगाद शशिशेखरः ।
दशनज्योत्स्नया वर्षन्स्वप्रसादसुधामिव ॥ ३१ ॥
प्रीतस्तवाहं दास्यामि विष्णो चक्रं सुदर्शनम् ।
अशक्यं किंतु तत्सर्तुं करे वोढुं कथैव का ॥ ३२ ॥
त्वं मद्भक्तिपरो नित्यमिति प्रीत्या मया पुनः ।
तथा विधीयते वोढुं यथा तच्चक्रमर्हसि ॥ ३३ ॥
इत्युक्त्वा भगवान्वक्त्रादमुञ्चत्तेजसां कणान् ।
निचिक्षेप च कृष्णस्य वदने परमेश्वरः ॥ ३४ ॥

उवाच च पुनः शंभुर्भगवान्भक्तवत्सलः ।
देहार्धमेत्य मे कृष्ण भव चक्रधृतिक्षमः ॥ ३५ ॥
ततो जग्राह देहार्धे भगवान्मधुसूदनम् ।
अहो भक्तानुकम्पित्वं परमेशस्य शोभते ॥ ३६ ॥
दृष्ट्वा तद्रूपमीशस्य विमिश्रं विष्णुतेजसा ।
लोकपालादयः सर्वे तुतुषुर्दृढनिश्चयाः ॥ ३७ ॥
अर्धे स धारयन्विष्णुं ननर्त परमेश्वरः ।
कुर्वन्नशेषगीर्वाणलोचनामृतवर्षणम् ॥ ३८ ॥
विधाय ताण्डवं देवो देहादाकृष्य केशवम् ।
अस्पृशत्सर्वगात्रेषु करेण करुणापरः ॥ ३९ ॥
स्पृष्ट्वा करेण संचिन्त्य तं चक्रोद्वहनक्षमम् ।
आदिदेश महादेवो दयामधुरया गिरा ॥ ४० ॥
अधुना वर्तते विष्णो चक्रधारणयोग्यता ।
मत्कराङ्गुलिसंस्पृष्टनिःशेषवपुषस्तव ॥ ४१ ॥
सुदर्शनाभिधं चक्रं गृह्यतामित्यदत्त सः ।
चक्रसंधानमोक्षौ च शिक्षयामास शंकरः ॥ ४२ ॥
स च प्रणम्य चरणौ भक्त्या शंभोः पुनः पुनः ।
जग्राह चक्रं तेजोभिराक्रान्ताम्बरमण्डलम् ॥ ४३ ॥
स्तोत्राणि देवदेवस्य स चकार पुनः पुनः ।
चक्रप्रभावाद्दैत्येन्द्रजयं मेने करस्थितम् ॥ ४४ ॥
अथ तत्स्तुतिसंतुष्टः परं रूपमदर्शयत् ।
भगवानपि विश्वात्मा सूर्यकोटिशतोपमम् ॥ ४५ ॥
तदालोक्य वपुः शंभोर्बभाषे गरुडध्वजः ।
मूर्ध्ना धरणिमालिङ्गन्भक्तिपावितमानसः ॥ ४६ ॥
भगवन्दुःसहं तेजो न तव द्रष्टुमुत्सहे ।
इदानीं तद्वपुः शान्तं प्रकाशय कृपावशात् ॥ ४७ ॥

इत्युक्ते तेन भगवाञ्छान्तं वपुरदर्शयत् ।
पीयूषपूरप्रतिममनेकेन्दुमनोरमम् ॥ ४८ ॥
तमालोक्य शिवं शान्तं प्रणनाम जनार्दनः ।
लेभे वरशतं चेष्टमुत्कर्षं परमं भजन् ॥ ४९ ॥
तस्याभीष्टं स निष्पाद्य महादेवस्तिरोदधे ।
हरिश्चक्रेण शरभं जघान च महाबलम् ॥ ५० ॥
एवं नारायणश्चक्रे तेन चक्रेण विक्रमम् ।
अनेकशो व्यदलयन्दानवान्व्यथितामरान् ॥ ५१ ॥
कदाचिद्राक्षसा गर्वाज्जलोद्भवपुरःसराः ।
सुरानाक्रम्य निःशेषं स्वीचक्रुर्भुवनत्रयम् ॥ ५२ ॥
ततो ब्रह्मादयः सर्वे चक्रपाणिमुपाश्रिताः ।
सोऽपि चक्रेण चिच्छेद शिरांसि पिशिताशिनाम् ॥ ५३ ॥
जलोद्भवशिरश्छित्त्वा चिर भ्रान्त्वा सुदर्शनम् ।
भूरिरक्तासवक्षीबं करं प्राप पिनाकिनः ॥ ५४ ॥
नारायणोऽपि सर्वत्र चक्रमन्विष्य विह्वलः ।
शंभुमाराधयामास तपोभिर्भक्तिकल्पितैः ॥ ५५ ॥
प्रत्यहं स सहस्रेण पद्मैः शंभुमपूजयत् ।
एवं बहूनि वर्षाणि भक्त्या परिचचार तम् ॥ ५६ ॥
कदाचिदर्चने[1] पद्ममेकमूनं विलोक्य सः ।
विपाट्य स्वेक्षणं चक्रे तत्संख्यापरिपूरणम् ॥ ५७ ॥
तदा देवः प्रसन्नोऽस्य प्रादाच्छंभुः सुदर्शनम् ।
अथाब्रवीन्मुरारातिरतिप्रणतविग्रहः ॥ ५८ ॥
इदं चक्रं यथा भूयो मां त्यक्त्वा न प्रयास्यति ।
तथा कुरु महादेव यदि सत्यं प्रसीदसि ॥ ५९ ॥
यत्र देव त्वया दत्तमिदं चक्रं मम प्रभो ।
संनिधेहि सदा तत्र भक्तानुग्रहवाञ्छया ॥ ६० ॥

---

१. 'दर्शने' ख.

तच्चक्राख्ये महातीर्थे भगवन्पूजितो भवान्।
तदत्र जाह्नवी देवी संनिधत्तां त्वदाज्ञया ॥ ६१ ॥
तेनेत्थमुक्तो नमता जगाद शशिशेखरः।
एवमस्तु ममाप्यत्र संनिधानं विधीयते ॥ ६२ ॥
अत्र मां पूजयति यो भवन्तं च दिवानिशम्।
स विष्णुलोकमासाद्य भवता सह मोदताम् ॥ ६३ ॥
सिद्धक्षेत्रमिदं पुण्यं प्राप्तं चक्रधराभिधम्।
यः पश्यति स देहान्ते लभते वैष्णवं पदम् ॥ ६४ ॥
इति दत्त्वा वरं विष्णोर्महादेवस्तिरोदधे।
नारायणोऽपि मुमुदे समवाप्य सुदर्शनम् ॥ ६५ ॥

परिचरति यमेव देवदेवं
हरिपरमेष्ठिपुरःसरः सरौघः।
प्रतिपदममुमेव चिन्तयध्वं
प्रसृमरसंसृतिघोरतापशान्त्यै ॥ ६६ ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणौ चक्रप्रदानं नाम सप्तमः प्रकाशः।

---

## अष्टमः प्रकाशः।

ॐ नमो हरिहराभ्याम्।

तत्तत्कर्म विधानतः समुचितं लब्धुं फलं सादरो
योऽसौ त्वामवधीरयन्गुरुतरैः पाशैश्चिरं वेष्टितः।
दक्षः संप्रति सोऽहमीक्षणपथं त्वय्यागते स्यां प्रभो
प्रोन्मीलन्निखिलप्रजापतिगणोत्कर्षाच्चिरं निर्वृतः ॥ १ ॥
कियान्कोपः प्रसादो वा निर्वाह्यः प्रभविष्णुभिः।
अखण्डशक्तेरीशस्य निःसाधारस्तु दृश्यते ॥ २ ॥
सर्गारम्भक्षणे धात्रा सृष्टो दक्षः प्रजापतिः।
कन्याचतुःषष्टिमसौ विश्वबन्धः प्रसूतवान् ॥ ३ ॥

---

१. 'लब्धम्' क. २. 'मोह' ख.

तासां मध्यादथोत्कृष्टामा(म)दादेकां पिनाकिने ।
दाक्षायणीति या तत्तत्समग्रामरपूजिता ॥ ४ ॥
भगवान्स तया देव्या सह व्यहरदीश्वरः ।
प्रणनाम न दक्षं तु प्रभुत्वेन कदाचन ॥ ५ ॥
सर्वेषामस्मि मन्तव्यस्तदेकोऽयमहंकृतः ।
इति दक्षः स देवाय चुकोप वृषलक्ष्मणे ॥ ६ ॥
वैरायमाणः शर्वेण न मेने स्वसुतामपि ।
दिने दिने भजत तदपात्रप्रतिपादनम् ॥ ७ ॥
कस्यान्यस्य न मोहोऽस्ति संसारोदरचारिणः ।
दक्षोऽपि यन्महादेवं निनिन्द स दिने दिने ॥ ८ ॥
दीर्घकालमविच्छिन्नक्रियोपकरणश्च सः ।
एकदा हयमेधेन यजते स प्रजापतिः ॥ ९ ॥
देवदानवगन्धर्वरक्षसा भुजगा अपि ।
शैलाः समुद्रा नद्यश्च तेन तत्र निमन्त्रिताः ॥ १० ॥
समग्रौषधयो मूर्ता ऋतवश्च तदध्वरे ।
किमन्यत्सर्ववस्तूनि तत्रावर्तन्त सर्वतः ॥ ११ ॥
दक्षो निमन्त्रयांचक्रे समस्ताः सरकामिनीः ।
दुहितृश्च निजाः सर्वास्तत्र जामातृभिः सह ॥ १२ ॥
नामन्त्रयत नायं तु दाक्षायण्या सहेश्वरम्[1] ।
विडम्बयति मूढानां विमना भवितव्यता ॥ १३ ॥
ततः प्रकुपिता देवी जनकस्यावमानतः ।
कदाचिदब्रवीद्देवं परिपाटललोचना ॥ १४ ॥
अभ्यर्थ्य सर्वे नीयन्ते दक्षेणाध्वरकारिणा ।
अयोग्यत्वं किमस्माकमवकाशो न यत्र तत् ॥ १५ ॥
तत्किमन्यन्महादेव शरीरमपि मे निजम् ।
अवमानाय तादृक्षाद्दक्षाद्यद्विहितोदयम् ॥ १६ ॥

---

१. 'महे' ख.

इत्युक्तमनया श्रुत्वा जगाद परमेश्वरः ।
सान्त्वयन्मधुरैर्वाक्यैर्हासं कृत्वा पुनः पुनः ॥ १७ ॥
दक्षाध्वरावकाशेन किमस्माकं प्रयोजनम् ।
एतावतैव यद्देवि त्वमकाण्डे विषीदसि ॥ १८ ॥
मूर्तयो मम या अष्टौ ताः सर्वत्र प्रतिष्ठिताः ।
तत्परित्यागतो नान्यो यज्ञः कश्चित्प्रवर्तते ॥ १९ ॥
तद्वयं तत्र तिष्ठामो नानारूपैरितस्ततः ।
वेदमन्त्रैर्वयं स्तुत्या न तदशक्यमन्यथा ॥ २० ॥
इत्युक्तवति देवेशे बहिः कोपं नियम्य सः ।
एवमस्त्विति गाम्भीर्यादन्तर्गूढमकल्पयत् ॥ २१ ॥
ततो बालेन्दुमुकुटे विहर्तुं जातु निर्गते ।
वरं स्थावरतो जन्म न तु दक्षमुनेः क्वचित् ॥ २२ ॥
जन्मान्तरेऽपि भर्ता मे शंभुरस्त्वित्युदीर्य सा ।
देवी रहसि तत्याज योगधारणया तनुम् ॥ २३ ॥
अथोज्झिततनुं दृष्ट्वा मुहूर्तेनैव तां शिवः ।
अथ हिंस्रं व्यधाद्रौद्रं वीरभद्रगणं क्रुधा ॥ २४ ॥
स वीरभद्रो निर्मुद्रपराक्रमनिरङ्कुशः ।
प्रभुं विज्ञापयामास किं करोम्युच्यतामिति ॥ २५ ॥
देवोऽप्युवाच तं गच्छ दक्षस्याध्वरमाक्षिप ।
गणैः समावृतः सर्वैर्नन्दिरुद्रानुगैरिति ॥ २६ ॥
शंकरं स प्रणम्याथ निर्जगाम गणैः सह ।
दक्षयज्ञं प्रमथितुं विपुलं जाह्नवीतटम् ॥ २७ ॥
अपश्यत्तत्र दक्षं स दीक्षितं यज्ञकर्मणि ।
ब्रह्मविष्णुप्रभृतिभिः समग्रैः परिवारितम् ॥ २८ ॥
वीरभद्रं ततो दृष्ट्वा ज्वलन्तमिव तेजसा ।
संत्रस्तेषु च सर्वेषु स जगाद प्रजापतिः ॥ २९ ॥

कस्त्वं किमर्थमायातः कुतो वा कथ्यतामिति।
श्रुत्वेत्थमब्रवीत्क्रूरो वीरभद्रः सहुंकृतिः॥ ३० ॥
मद्वृत्तान्तेन किं कृत्यं परतो ज्ञास्यते त्वया।
अस्मिन्पुनर्भवत्कार्ये विस्मयोऽस्ति तदुच्यताम्॥ ३१ ॥
यजसे मोहितः कं त्वं सदस्याः के च तावकाः।
रक्षिता कश्च को यज्ञ इति मे संशयं हर॥ ३२ ॥
श्रुत्वा तमब्रवीत्सोऽपि तदा दक्षः प्रजापतिः।
कोपकम्पितसर्वाङ्गप्रसृतस्वेदनिर्झरः॥ ३३ ॥
अहं दक्षः सदस्यो मे भृग्वादिर्मुनिमण्डलः।
रक्षिता भगवान्विष्णुर्याज्याश्चेन्द्रादयः सुराः॥ ३४ ॥
इति तस्य वचः श्रुत्वा स जगाद गणाग्रणीः।
रक्षिता भवतो यज्ञं सद्यो रक्षत्वसाविति॥ ३५ ॥
अथ प्रववृते यज्ञं संहर्तुं सगणैः सह।
मुष्टिप्रहारैर्निःशेषांस्त्रिदशान्पर्यताडयत्॥ ३६ ॥
आस्कन्द्य नाभिपद्मेन नारायणमसौ व्यधात्।
तद्वासिनो विधेस्त्रासं विहसन्[1] कारणद्वयम्॥ ३७ ॥
धूलिमेको निचिक्षेप तथा शक्रस्य दृष्टिषु।
यथा स नेत्रमेकैकमश्विनोः समदर्शयत्॥ ३८ ॥
भृग्वादयोऽपि मुनयः सर्वे तत्र पलायिताः।
वयं न याजकाः केचिदवदन्सत्यवादिनः॥ ३९ ॥
[2]येद्यद्यज्ञाय दक्षेण नैवेद्यं परिकल्पितम्।
तत्तदेको गणस्तत्र भोक्तुं प्रावर्तताग्रतः॥ ४० ॥
किमन्यत्तत्र सर्वेषु विद्रुतेषु यतस्ततः।
मृगरूपं व्यधाद्यज्ञोऽप्यपरिज्ञानहेतवे॥ ४१ ॥
पलायितेषु सर्वेषु वीरभद्रो व्यवेष्टयत्।
दक्षं प्रजापतिं क्रूरैर्नागपाशैर्निरङ्कुशैः॥ ४२ ॥

१. 'विहरन्' ख. २. 'उद्यद्यशाय' ख.

अथातिचपलाः सर्वे प्रमथा मथितामराः ।
यज्ञवाटं समग्रं ते लुण्ठयामासुराग्रहात् ॥ ४३ ॥
जह्रुः सुराङ्गनाः सर्वा यूपानप्युदपाटयन् ।
मुनीनामवमानांश्च चक्रिरे बहुशो गणाः ॥ ४४ ॥
उपद्रुतं गणैर्दृष्ट्वा सर्वं स्थावरजङ्गमम् ।
अथाब्रवीद्वीरभद्रः किंचित्कोपं प्रकाशयन् ॥ ४५ ॥
भो[1] भो गणाः कृतं कार्यं यदर्थं वयमागताः ।
लोकानुपप्लावयतां भवतामेष कः क्रमः ॥ ४६ ॥
श्रुत्वा तत्तस्य वचनमवधीर्य च ते गणाः ।
तथैव तत्र संक्षोभमकुर्वन्त यतस्ततः ॥ ४७ ॥
अथोवाच स तान्वीरभद्रो [2]भ्रूभङ्गभीषणः ।
अवधीरितमद्वाक्यान्युष्मान्हन्मि हठादिति ॥ ४८ ॥
ततस्तेऽप्यवदन्कस्त्वं प्रभुवद्भाषसे कथम् ।
नन्दिनो वयमायत्तास्त्वमस्माकं समो गणः ॥ ४९ ॥
इत्थं तान्वदतो वीरो वीरभद्रो जघान च ।
अधिगम्येदृशीं वार्तां नन्दिरुद्रोऽप्युपागमत् ॥ ५० ॥
दृष्ट्वा गणान्हतान्हा हा पुत्रका निहता इति ।
वदंस्त्रिशूलमादाय नन्दी तं प्रति चागमत् ॥ ५१॥
वीक्ष्य संमुखमायान्तं नन्दिनं कुपितं ततः ।
वीरभद्रोऽब्रवीन्मूर्ध्ना संस्पृशन्नवनीतलम् ॥ ५२ ॥
शंभुना निर्विशेषस्त्वं भगवन्रक्ष रक्ष माम् ।
भवत्तेजो हुताशस्य स्फुलिङ्गोऽपि न मादृशः ॥ ५३ ॥
इत्युक्तो वीरभद्रेण नन्दी नैनमताडयत् ।
केवलं वेष्टयांचक्रे पाशैश्चापलशान्तये ॥ ५४ ॥
अथ सारङ्गरूपेण यज्ञेन सह सोऽनयत् ॥
दक्षं च वीरभद्रं च गाढपाशनियन्त्रितम् ॥ ५५ ॥

---

१. 'भोभोंर्गणाः' क-ख. २. 'भूभङ्ग' ख.

शंभोरदर्शयन्नन्दी मृगरूपमथाध्वरम् ।
तं विलोक्य च देवस्य क्रुधा जज्वाल लोचनम् ॥ ५६ ॥
ततो निरगमत्तेजः पपात धरणौ च तत् ।
उदियाय ततो जन्तुः पिङ्गश्मश्रुविलोचनः ॥ ५७ ॥
शोणवर्णः कृष्णकान्तिराचक्राम च तं मृगम् ।
मृगं दग्ध्वा च निःशेषामवनीमप्यपातयत् ॥ ५८ ॥
तदूष्मणा सुराः सर्वे पलायन्ते स्म कुत्रचित् ।
इत्युपद्रवमालोक्य हाहाकारं च देहिनाम् ॥ ५९ ॥
ब्रह्मा चकार विज्ञप्तिं तदा नम्रः पिनाकिनः ।
अयं देव तव क्रोधो ज्वरो नामोदितः पुमान् ॥ ६० ॥
अस्य तेजोभिरखिलं जगज्जीर्णं चराचरम् ।
एकीकृतमिदं तेजो न सह्यं केनचिद्विभो ॥ ६१ ॥
तदेतद्बहुधा कृत्वा मा दहस्व महेश्वर ।
नागानां मूर्ध्नि सर्वेषां शिलानां च शिलाजतु ॥ ६२ ॥
जलस्य नीलिका पृथ्व्या औषर्यं खारको गवाम् ।
पशूनां दृष्टिरोधश्च शिखोद्भेदश्च केकिनाम् ॥ ६३ ॥
अवीनां पित्तभेदश्च शुकानामपि हिक्किका ।
नेत्ररोगः कोकिलानां शार्दूलानामपि श्रमः ।
जन्म मध्यावसानेषु मनुष्याणामपि ज्वरः ॥ ६४ ॥
एवं विभज्य बहुधा त्रैलोक्यं रक्ष शंकर ।
इत्युक्ते ब्रह्मणा देवः सोऽब्रवीदेवमस्त्विति ॥ ६५ ॥
एवं तेजोमये तस्मिन्विभक्ते शंकराज्ञया ।
इन्द्रादयः सुराः सर्वे स्वांल्लोकान्पुनरागमन् ॥ ६६ ॥
तदा पाशनिबद्धं तं वीरभद्रमदर्शयत् ।
नन्दिरुद्रो भगवतस्तद्वृत्तान्तं जगाद च ॥ ६७ ॥
कुपितो वीरभद्रं च मर्त्यभावाय चाशपत् ।
शापावसानं च ददौ देवः कारुणिकाग्रणीः ॥ ६८ ॥

गणाः क्ष्मामवतीर्णास्ते केदाराम्भःप्रभावतः ।
यदा गणत्वं गच्छन्ति तदा शापोऽपयात्विति ॥ ६९ ॥
अथ पाशावलीबद्धो दक्षो देवं पिनाकिनम् ।
स्तोत्रेण दक्षप्रोक्तेन स्तौति स्म रचिताञ्जलिः ॥ ७० ॥
तेन स्तोत्रेण तस्याथ संप्रीतोऽभून्महेश्वरः ।
उपरागात्प्रभोः कोपः प्रसादः सहजः पुनः ॥ ७१ ॥
देवीं त्यक्ततनुं दृष्ट्वा तदा क्रुद्धोऽपि धूर्जटिः ।
नतं तमनुजग्राह देवः कारुणिकः शिवः ॥ ७२ ॥
उवाच च विभुर्दक्ष यज्ञस्ते मथितो मया ।
एतत्फलं कोटिगुणं तत्तवास्तु मदाज्ञया ॥ ७३ ॥
प्रसन्ने शंकरे तस्य न्यवर्तन्त प्रजापतेः ।
स्वयमेव तदा पाशास्तीव्रपीडाविधायिनः ॥ ७४ ॥
दक्षोऽगमन्निजं स्थानमाज्ञया च महेशितुः ।
फलं कोटिगुणं प्राप्य यज्ञस्यानन्दमाश्रितः ॥ ७५ ॥

दृढतरकरुणारसस्त्रिनेत्रा-
त्क च न परोऽस्ति विचार्यतामिदानीम् ।
अनुसरत तमेव मोक्षलक्ष्मी-
वितरणकेलिसमर्थमादरेण ॥ ७६ ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणौ
दक्षवरप्रदानं नामाष्टमः प्रकाशः ।

---

नवमः प्रकाशः ।

ॐ श्रीमृत्युजिते नमः ।

घोरः कोऽपि निशाचरोऽयमियतो लोकानलं बाधते
सर्वस्तारकमेतमाह पुरुषं नैवैष मे रोचते ।
त्वं देव्या सहसामरस्वविधिना स्वं वीर्यमाश्चर्यकृ-
त्तन्नाथ प्रथयस्व येन विलयं सद्यः प्रयातीदृशः ॥ १ ॥

ऐकात्म्येन महादेव्या दाहेन मदनस्य च ।
अहो रक्तो विरक्तश्च जयत्येको महेश्वरः ॥ २ ॥
कदाचित्तारकाख्येन दानवेन्द्रेण पीडिताः ।
इत्थं विज्ञापयामासुर्निर्जराः कमलासनम् ॥ ३ ॥
भगवन्भवतः प्राप्य वरं स रजनीचरः ।
न कं रचयते नित्यमवमानं दिवौकसाम् ॥ ४ ॥
अपहृत्य स दुष्टात्मा गरुत्मन्तं सुरद्रुहः ।
क्रीडाशकुन्तं विदधे भुजपञ्जरगर्वितः ॥ ५ ॥
ध्यायते कथमद्यापि शिवमाधिपमण्डलम् ।
चक्रं संयोगसोत्कण्ठं स्यान्न चेदसुरीमनः ॥ ६ ॥
सास्रुपूर्णेक्षणश्रेणिरमुष्या स्थानवर्त्मनि ।
विहस्यते सहस्राक्षः समग्रैरेव राक्षसैः ॥ ७ ॥
दाहकः सर्वभूतानां वह्नेरुष्मा बभूव यः ।
उत्तंसकुसुमग्लानिरोषात्स शमितोऽमुना ॥ ८ ॥
भवान्स नाम यो भुङ्क्ते कुपितः स कथं जितः ।
इत्थं विहस्यते तेन कृतान्तोऽपि दिने दिने ॥ ९ ॥
तूष्णीकत्वे विजिह्वत्वं वाचाटत्वं चटूक्तिषु[1] ।
उद्घोष्य दिविषद्वर्गस्तदास्थाने विहस्यते ॥ १० ॥
सिद्धकिन्नरगन्धर्ववर्गोऽस्यास्थानवर्त्मनि ।
अवकाशो न भवत इति द्वाःस्थैर्निरुध्यते ॥ ११ ॥
सिंहासनस्थिते[2] यस्मिन्मेदिनीचुम्बिमौलयः ।
अवमानार्थ[3]ममरा मन्यन्ते चिरजीवितम् ॥ १२ ॥
तस्मिन्प्रभवति प्रायः किमन्यैर्बहुभाषितैः ।
स्पर्धते मरुमार्गेण स्वर्गमुद्वसतां गतम् ॥ १३ ॥
इत्युक्तवत्सु देवेषु बाष्पबन्धुरदृष्टिषु ।
दन्तांशुभिर्नभः सिञ्चञ्जगाद जलजासनः ॥ १४ ॥

१. 'सदुक्तिषु' ख. २. 'गते' ख. ३. 'सानार्थं' ख.

विदितं मम यत्सोऽयं बाधते निखिलं जगत् ।
अद्यापि जातो न पुनः संहर्ता तस्य राक्षसः ॥ १५ ॥
स हि घोरेण तपसा जगद्विजयसादरः ।
अङ्गीचकार स्ववधं बालकात्सप्तवासरात् ॥ १६ ॥
बालः सप्तदिनः को वा तारकं यो व्य(वि)जेष्यते ।
उत्पत्स्यते स वीर्येण रुद्रस्येति न संशयः ॥ १७ ॥
कुतश्चित्कारणात्त्यक्ततनुं देवीं विना प्रभुः ।
स तपः कल्पयन्नास्ते हिमवत्कन्दरागृहे ॥ १८ ॥
विश्वात्मा विश्वकर्ता च तत्र देवस्तपस्यति ।
स केन कारणेनेति मादृशामप्यगोचरे ॥ १९ ॥
जनयिष्यति सा देवी स्वात्मानं योगयुक्तितः ।
जठरे हिमवत्पत्न्या मेनकाया असंशयम् ॥ २० ॥
देव्याः शंभोश्च यद्वीर्यमुदेष्यति निरङ्कुशम् ।
तदेव भवतामिष्टं साधयिष्यति तद्वधम् ॥ २१ ॥
इत्युक्तास्ते विरिञ्चेन हृष्टचित्ता दिवौकसः ।
प्रणम्य भक्त्या बहुशो जग्मुः सर्वे निजां भुवम् ॥ २२ ॥
अस्मिन्नवसरे विश्वजननी परमेश्वरी ।
निजयोगबलेनैव मेनकायामजायत ॥ २३ ॥
क्रमेण वर्धमानायां भगवत्यां कदाचन ।
शक्रस्य वचसा प्राप नारदस्तुहिनाचलम् ॥ २४ ॥
नारदोऽथ तुषाराद्रिं कल्पितातिथ्यमभ्यधात् ।
पीयूषमृदुभिर्वाक्यैः किंचिद्विनयकारणम् ॥ २५ ॥
चितस्य शिखराणां च पृथुत्वं तव दृश्यते ।
पाषाणानां गुणानां च गुरुत्वं प्रतिभाव्यते ॥ २६ ॥
स्वभावेन प्रसन्नत्वं मनसः पयसश्च ते ।
धन्यो भवान्यस्य गुहामध्यास्ते तपसे हरः ॥ २७ ॥

---

१. 'भक्ता' ख. २. 'रात्रि' ख.

नारदे च वदत्येवं मेनका हिमवद्वधूः ।
आजगाम महादेव्या सह कन्यात्वमाप्तया ॥ २८ ॥
ननाम मेनका तस्मै जगाद च हिमाचलः ।
प्रालेयं जंगमत्वेन सृजन्निव रदांशुभिः ॥ २९ ॥
शुभाशुभेन युज्यन्ते मुने प्राक्कर्मणा नराः ।
व्यामुह्यन्त्येव पितरस्तच्चिन्तोद्वहनात्पुनः ॥ ३० ॥
त्वं सत्यवादी सर्वज्ञस्तन्मयेत्थं निगद्यसे ।
पाणिग्रहाय कन्यायाश्चिन्ता मनसि मे स्थिता ॥ ३१ ॥
इत्युक्ते हिमशैलेन सादरे नारदोऽब्रवीत् ।
हर्षस्थाने विषादस्ते किमयं वर्तते वृथा ॥ ३२ ॥
शृणु तावदिदं वाक्यं नास्या जातः पतिः क्वचित् ।
तेनेति गदिते तत्र मेनका भयमाददे ॥ ३३ ॥
पुनरस्य भवेत्सृष्टिस्थितिसंहारकारिणः ।
जन्ममृत्युविहीनस्य पत्नीयं परमेशितुः ॥ ३४ ॥
यस्य क्रीडनकायन्ते ब्रह्मविष्ण्वादयः सुराः ।
स देवदेवो विश्वात्मा भर्तामुष्या भवेदिति ॥ ३५ ॥
चराचरस्य जगतः पिता स परमेश्वरः ।
तस्य पत्नी भवत्येषा जननी सर्वदेहिनाम् ॥ ३६ ॥
धन्यः किमन्यत्सर्वत्र कोऽन्योऽस्ति भवतः समः ।
विश्वस्य जननीमेतां यः प्रासूत महेश्वरीम् ॥ ३७ ॥
इयं तदचिरादेव योगं यातु पिनाकिना ।
अभीष्टफलनिष्पत्त्यै को विलम्बं समीहते ॥ ३८ ॥
इत्युक्ते तेन हिमवानुवाच परितोषितः ।
अङ्गैस्तरङ्गयन्भङ्गिं पुलकाङ्कुरदन्तुरैः ॥ ३९ ॥
नरकाद्दुस्तरात्सोऽहमुद्धृतो भवता मुने ।
अनेन वचसा येन यदमूर्ध्वमधिष्ठितम् ॥ ४० ॥

हिमाचलोऽस्मि हेमाद्रेरपि तिष्ठामि मूर्धनि ।
यस्य जामातृतामेति देवश्चन्द्रशिखामणिः ॥ ४१ ॥
देवेन संयोजयितुमिमां यत्नो विधीयते ।
श्रेयोऽभिनन्द्यते कैर्न भवद्वाक्यानुवर्तनात् ॥ ४२ ॥
इत्युक्ते हिमशैलेन निजकन्याममन्यत ।
मेनका भगवत्पत्नीं परितोषमुपागता ॥ ४३ ॥
सा पुनः पार्वती देवी लज्जयावनतानना ।
चित्तं कथंचिदुद्वोढुं शशाकानन्दमन्थरम् ॥ ४४ ॥
प्रतिमुच्य ततः शैलं नारदो निर्जरेश्वरम् ।
धृतिमन्तं व्यारचयत्तद्वृत्तान्तनिवेदनात् ॥ ४५ ॥
जगाद च पुनः शीघ्रं मदनः प्रेष्यतामिति ।
इन्द्रोऽपि स्मरमानीय जगाद मधुरं वचः ॥ ४६ ॥
मनोभव त्वं जानासि मम सर्वं मनोगतम् ।
तत्किमन्यन्महादेवं पार्वत्या योजयेरिति ॥ ४७ ॥
अथ तद्वचसा कामो जगाम तुहिनाचलम् ।
प्रविवेश च तत्रैव पवित्रं शंकराश्रमम् ॥ ४८ ॥
रत्याः करं करे गृह्णन्प्रविष्टस्तत्र मन्मथः ।
अनुयातो वसन्तेन सौहार्दाय वृ[1]थास्पृशा(?) ॥ ४९ ॥
नानाप्रसवनिर्मुद्रसरलद्रुमवेदिकम् ।
तूष्णीकगणमव्यग्रं वृषभं तं ददर्श सः ॥ ५० ॥
सेवितं भक्तिनम्रेण नन्दिना द्वारवर्तिना ।
समाधानप्रयोगेन निःस्पन्दाखिलविग्रहम् ॥ ५१ ॥
भुजङ्गयोगपट्टाङ्कं ध्यानस्तिमितलोचनम् ।
नासानिषण्णदृष्टिं च शंभुं तत्र व्यलोकयत् ॥ ५२ ॥
विवेश तस्य हृदयं सूक्ष्मेण वपुषा स्मरः ।
तदानीं च स्मरन्देवीं देवोऽपि क्षोभमाययौ ॥ ५३ ॥

---

१. 'वृषा' ख. 'वृषस्पृशा' इति भवेत्.

शनैश्चित्तं नियम्याथ तमपश्यच्च योगतः ।
देवो विकाररहितो भूयोऽपि शममाददे ॥ ५४ ॥
अपास्तो मदनस्तेन चितात्स्थूलं वपुर्वहन् ।
मार्गणं परमेशाय संदधे मोहनाभिधम् ॥ ५५ ॥
स तेनाशोकरूपेण संस्पृष्टो वक्षसि प्रभोः ।
असाधारणधैर्योऽपि किंचिच्चुक्षोभ चेतसि ॥ ५६ ॥
क्षोभहेतुं ततो वीक्ष्य मदनं परमेश्वरः ।
हुंकृत्य भस्मसाच्चक्रे भाललोचनवह्निना ॥ ५७ ॥
दग्ध्वा स्मरमथोद्रिक्तो भर्गलोचनपावकः ।
विश्वं दग्धुं प्रववृते कल्पान्तभ्रान्तिमावहन् ॥ ५८ ॥
अथ व्यभजतेशानस्तं स्वलोचनपावकम् ।
सहकारप्रभृतिषु द्रुमेषु[1] मधुपायिषु ।
अन्येष्वपि पदार्थेषु रागिणां[2] ज्वरकारणम् ॥ ५९ ॥
मदनं भस्मसाद्भूतं वीक्ष्याथ विवशा रतिः ।
चिरं समुचितैर्वाक्यैश्चक्रन्द च रुरोद च ॥ ६० ॥
प्रलप्य च चिरं शंभोरग्रे विरचिताञ्जलिः ।
सा चकार स्तुतिं येन प्रसन्नोऽभून्महेश्वरः ॥ ६१ ॥
सा ययाचे प्रियं कामं जीवन्तं सोऽप्यभाषत ।
भविष्यत्यचिरेणैव तव भर्ता प्रयाहि तत् ॥ ६२ ॥
जगाद च रतिर्दीना विलपन्ती पुनः पुनः ।
भर्तुर्वियोगः प्रायेण नारीणां मृत्युना समः ॥ ६३ ॥
सखीयुगलसंयुक्तां नानालंकारधारिणीम् ।
तामानिनाय शैलेन्द्रस्तदानीं निजकन्यकाम् ॥ ६४ ॥
अपश्यत्पथि शैलेन्द्रो रुदतीं कामवल्लभाम् ।
पप्रच्छ च स्ववृत्तान्तं समयं चाभ्यभाषत ॥ ६५ ॥

---

१. 'क्रमेषु' ख. २. 'रागिणम्' ख.

अधिगम्य च कामस्य दाहं तुहिनभूधरः ।
इयेष स्वपुरं गन्तुं दुहित्रा सह विह्वलः ॥ ६६ ॥
कंदर्पदाहमाकर्ण्य जगादाथ हिमाद्रिजा ।
स्वपुरे मम किं कार्यं न तत्र स्थातुमुत्सहे ॥ ६७ ॥
किमेतेन शरीरेण दुर्भगेन प्रयोजनम् ।
तीव्रं तपः करिष्यामि यमेन नियमेन च ॥ ६८ ॥
इत्याकर्ण्य हिमाद्रिः स जगाद स्नेहविह्वलः ।
उ मा मृदुशरीरा त्वं तपः क्लेशावहं कुरु ।
एहि स्वपुरमेवात्र प्रयावः पुत्रि सांप्रतम् ॥ ६९ ॥
इत्युक्तवति शैलेन्द्रे तदा वागशरीरिणी ।
वाणी समुद्ययौ व्योम्नः सत्यार्थपरिकल्पिनी ॥ ७० ॥
उ-मेति तपसः सेयं निषिद्धा भवता गिरे ।
उमेति प्रथितं नाम प्राप्नोति भुवनत्रये ॥ ७१ ॥
इयं मूर्तिमती सिद्धिश्चिन्तितं साधयिष्यति ।
इयं न[1] मानुषी मूर्तिस्तन्मा मिथ्यावकल्पथाः ॥ ७२ ॥
इति श्रुत्वा स सहसा शैलेन्द्रः प्रत्यपद्यत ।
तपस्तस्याः स्वभवनं जगाम च सविस्मयः ॥ ७३ ॥
उमाप्यथ तपः कर्तुं जगाम शिखरं गिरेः ।
अभीष्टसिद्धिपर्यन्तं दृढं विहितनिश्चया ॥ ७४ ॥
अपश्यत्तत्र हरितच्छदमेकं च पादपम् ।
विचित्रैः कुसुमैः सिद्धिं सूचयन्तं मनोहरैः ॥ ७५ ॥
संत्यज्य तत्राभरणान्यसौ वस्त्राणि तानि च ।
सखीभ्यां सेविता ताभ्यां तपः कर्तुं प्रचक्रमे ॥ ७६ ॥
सा वल्कलप्रावरणा दर्भकल्पितमेखला ।
त्रिकालस्नायिनी चक्रे तपांसि शरदां शतम् ॥ ७७ ॥
स्वयंशीर्णेन पर्णेन प्राणयात्रां चकार सा ।

---

१. 'मूर्तिमती सिद्धिः' क-ख.

एकेन प्रत्यहं यावत्समानां[1]मगमच्छतम् ॥ ७८ ॥
समाशतं निराहारमपि सा विदधे तपः ।
अन्यथा हि कथंकारं तादृशः पतिराप्यताम् ॥ ७९ ॥
अथ तत्तपसा तेन ज्वलितां भुवनत्रयीम् ।
आलोक्योद्वेजितां शक्रः सप्तर्षीन्कचिदस्मरत् ॥ ८० ॥
सप्तर्षयोऽपि निकटं प्राप्ता मुदितचेतसः ।
पूजयित्वा महेन्द्रेण प्रोक्तास्तत्समयोचितम् ॥ ८१ ॥
हिमाद्रौ पार्वती क्रूरं तपस्यति वरार्थिनी ।
तस्यास्तदिष्ट[2]संसिद्ध्याः समापयत तत्तपः ॥ ८२ ॥
शक्रोक्तमिति संचिन्त्य जग्मुस्ते तुहिनाचलम् ।
व्यलोकयन्त तां तत्र पावनीं हिमवत्सुताम् ॥ ८३ ॥
अभाषन्त च तां भद्रे किमर्थं कुरुषे तपः ।
सापि तद्वाक्यमाकर्ण्य प्रत्युवाच तपःकृशा ॥ ८४ ॥
आश्रमं मम संप्राप्ता गृह्णीतैतद्वरासनम् ।
ततो वक्ष्याम्यशेषेण विधेयं हृदयेप्सितम् ॥ ८५ ॥
तेन तद्वचसा सर्वैस्तदासनमगृह्यत ।
सापि व्रतात्मकं मौनं हित्वा ह्रीमयमग्रहीत् ॥ ८६ ॥
पुनः पुनश्च तैः पृष्टा गौरवात्साप्यभाषत ।
किंचित्स्मितमुखी कान्तलाभेच्छावर्णनाक्षरैः ॥ ८७ ॥
सर्वेषां प्राणिनां चित्तगतगोचरवर्तिनः ।
तत्स्ववृत्तान्तकथनं कथं नाधीयते मया ॥ ८८ ॥
चित्तवृत्तिरियं तावत्किं वाञ्छति देहिनाम् ।
अलभ्यप्रार्थितात्तस्मान्मा[3]दृश्यां न विडम्बना ॥ ८९ ॥
प्रार्थयन्त्येव(?) केषांचिच्चेतो लेशेन किंचन ।
नैपुणं घटते तत्र केषांचिद्विविधोद्यमैः ॥ ९० ॥
देहान्तरे फलं प्राप्तं केषांचन परिश्रमः ।

---

१. 'वासग' ख. २. 'संपत्त्याः' ख. ३. 'मादृशानां' इति शोधितम्.

केचिच्चैनैव कायेन सिद्धिमिच्छन्त्यतन्द्रिताः ॥ ९१ ॥
मम यस्त्वभिलाषोऽस्ति तपसा कोऽपि संप्रति ।
आत्मनोऽपि सहायार्थमपरेषां किमुच्यते ॥ ९२ ॥
चेतः संकल्पसंरम्भैर्यद्वाञ्छति दिने दिने ।
तत्साधनाय कायोऽपि मयायं विनियोज्यते ॥ ९३ ॥
तद्वन्ध्या तनयं स्रष्टुमभिवाञ्छति कौतुकात् ।
यत्प्रार्थये दुराराधं वरं मदनवैरिणम् ॥ ९४ ॥
कारणैरप्यविज्ञेयो भगवान्स महेश्वरः ।
मयाभिलष्यते हन्त निर्निरोधो मनोरथः ॥ ९५ ॥
इत्युक्तवत्याः पार्वत्याश्चित्तस्थैर्यदिदृक्षया ।
सप्तर्षयोऽभिदधिरे विस्मयाकुलचेतसः ॥ ९६ ॥
कायिकं मानसं वापि लोकेऽस्ति द्विविधं सुखम् ।
शंकरं पतिमासाद्य तत्रैकमपि नेक्ष्यते ॥ ९७ ॥
वस्त्राभरणसङ्गेन दृश्यते कायिकं सुखम् ।
प्रकृत्यैव स दिग्वासाः कठोरास्थिविभूषणः ॥ ९८ ॥
उत्पद्यते सुखं लोके सोत्साहत्वेन चैतसम् ।
जुगुप्सितेषु क्रूरेषु श्मशानेषु वसत्यसौ ॥ ९९ ॥
कुलं गुणाश्च लक्ष्मीश्च पत्युर्लोको विचार्यते ।
स्वयंभवो निर्गुणोऽयं भस्ममात्रानुलेपनः ॥ १०० ॥
देवाधिपतिरिन्द्रोऽस्ति लक्ष्मीवान्निधिनायकः ।
यस्त्वया प्राकृते हन्त केवलोऽयं दिगम्बरः ॥ १०१ ॥
एवमाकर्ण्य तद्वाक्यं प्रकोपस्फुरिताधरा ।
उवाच हिमवत्पुत्री कम्पमानविलोचना ॥ १०२ ॥
सदसत्प्रविवेकेऽस्मिन्स्वसंवेदनगोचरे ।
बुद्धिमन्तो विमुह्यन्ति का मूढेषु विचारणा ॥ १०३ ॥
स्वेच्छागृहीतरूपोऽयं कारणैरप्यनिश्चितः ।

पुरंदरकुबेराद्यास्तद्भक्त्यैश्वर्यशालिनः ॥ १०४ ॥
न जानन्ति भवन्तस्तु परमार्थेन शंकरम् ।
तद्विडम्बनया कस्मादवीचिप्रार्थना कथम् ॥ १०५ ॥
तन्निन्दापातकाक्रान्ता यूयं भवथ सांप्रतम् ।
ममापि सत्यं युष्माकं वाचो निरयकारणम् ॥ १०६ ॥
मम भर्ता स एवास्तु भगवानिति निश्चयः ।
तद्युष्मदीयं वचनं कः प्रमाणाय मन्यते ॥ १०७ ॥
यात यूयमितोऽविघ्ना गृहीतमुनिभूमिकाः ।
दूतोऽथवाहं गच्छामि तपस्यामि वनान्तरे ॥ १०८ ॥
एवमुक्त्वा तदा गन्तुमियेष हिमवत्सुता ।
महर्षयः प्रमुदिता नमन्तश्च बभाषिरे ॥ १०९ ॥
अहो बत स्थिरं चेतो वर्तते पर्वतात्मजे ।
सत्यं त्वदालोकनया वयमद्य पवित्रिताः ॥ ११० ॥
स देवदेवो विश्वात्मा धीमता केन नेष्यते ।
स्थिरनिश्चयतां ज्ञातुमस्माकं किंत्वयं क्रमः ॥ १११ ॥
अनेन स्थिरभावेन त्वं पतिं लप्स्यसे शिवम् ।
किमन्यदचिरेणैव विश्वमाता भविष्यसि ॥ ११२ ॥
इति प्रोत्साहनं कृत्वा पार्वत्यास्ते महर्षयः ।
सुरकार्याय सर्वेऽपि जग्मुर्द्रष्टुं महेश्वरम् ॥ ११३ ॥
अथ ते मुनयः स्नात्वा भागीरथ्यां यथाविधि ।
शंकरार्चनचर्चार्थमगृह्णन्कुसुमस्रजः ॥ ११४ ॥
शंकराश्रममासाद्य बहिर्द्वारस्थितास्ततः ।
द्वाराधिकारिणं देवं नन्दिरुद्रं बभाषिरे ॥ ११५ ॥
सकृपस्त्वं समग्राणां गणानां शिरसि स्थितः ।
त्वया निवेद्यमानास्तु तत्पश्यामो महेश्वरम् ॥ ११६ ॥
इदानीं सुरकार्याय महादेवदिदृक्षवः ।

वयं प्रदर्शनीयास्ते शंकराश्रमवेदिकाम् ॥ ११७ ॥
त्वमेव गतिरस्माकं नन्दिरुद्र दिने दिने।
प्रभूणां न स्थितिः कुत्र द्वारपालपुरःसराः ॥ ११८ ॥
तत्कालमनतिक्रम्य साधयास्मदभीप्सितम्।
द्वारपालप्रसादेन प्रभूणां ह्यन्तरं गता ॥ ११९ ॥
इत्युक्तो मुनिभिर्नन्दी तानुपांशु जगाद सः।
अयं नावसरः शंभुस्तिष्ठत्येव समाहितः ॥ १२० ॥
क्षणमात्रान्महादेवः संध्योपासनकर्मणे।
प्राप्स्यत्येव तटं गाङ्गं तत्तत्रैव प्रतीक्ष्यताम् ॥ १२१ ॥
इति तद्वचनं श्रुत्वा परितोषमुपागताः।
अगमन्मुनयो गङ्गातीरं शीकरपावनम् ॥ १२२ ॥
प्रतीक्षन्ते स्म तत्रैव महादेवं महर्षयः।
वर्षाकालपयोवाहं तृषिताश्चातका इव ॥ १२३ ॥
अथ क्रमेण विरतसमाधाने पिनाकिनि।
विलोक्यावसरं नन्दी जगाद रचिताञ्जलिः ॥ १२४ ॥
प्रभो सप्तर्षयः प्राप्तास्तिष्ठन्ति बहिरङ्गने।
कृतार्थयितुमात्मानं त्वत्पादपरिचर्यया ॥ १२५ ॥
इत्युक्तो नन्दिना देवो बालचन्द्रशिखामणिः।
अदत्त तत्प्रवेशार्थं शनैर्भ्रूभङ्गसंज्ञया ॥ १२६ ॥
तानाजुहाव दूरस्थान्मूर्धकम्पेन वीरकः।
नमन्तो विविशुस्तेऽपि **शंकराश्रमवेदिकाम्** ॥ १२७ ॥
ते प्रविश्य प्रभोः पूजामकुर्वत[1] महर्षयः।
शिरसा तुङ्गजूटेन चरणौ च ववन्दिरे ॥ १२८ ॥
मन्यमानाः कृतार्थत्वं शंभुस्निग्धेक्षणक्षणे।
बभाषिरे सहर्षास्ते क्षणमात्रान्महर्षयः ॥ १२९ ॥
कृपापरोऽसि हिमवत्सुता तीव्रं तपस्यति।

---

१. 'अकुर्वन्त' क-ख.

तारको बाधते विश्वं तदत्रोचितमाचर ॥ १३० ॥
ब्रह्मविष्णुप्रभृतयो भवदंशाभिलाषिणः ।
तारकेण त्रिलोकीयं बाध्यते दुष्टचेतसा ॥ १३१ ॥
किमन्यदुच्यसे देव सर्वेषां हृदयं भवान् ।
स्वयमेव विजानाति विधेयं यदनन्तरम् ॥ १३२ ॥
तैरित्युदीरिते देवो जगाद शशिशेखरः ।
किंचित्स्मितेनापहरन्दुःखस्तोमविभावरीम् ॥ १३३ ॥
विदितं मे यथा सर्वे तारकेण तिरस्कृताः ।
गाढोत्कण्ठाः प्रतीक्षन्ते मत्कार्यं वासवादयः ॥ १३४ ॥
लोकवृत्तानुसारेण न प्रवृत्तिर्निवार्यते ।
मय्यन्यथा प्रवृत्ते तु जायते लोकविप्लवः ॥ १३५ ॥
तत्साधये देवकार्यं भवद्भिस्तत्र कल्प(ल्प्य)ताम् ।
लोकमार्गानुवृत्त्यैव सत्यः समुचितः क्रमः ॥ १३६ ॥
इत्युक्ताः शंभुना तेऽपि निर्गत्येङ्गितवेदिनः ।
पिनाकी याचते कन्यां त्वामित्यद्रीन्द्रमब्रुवन् ॥ १३७ ॥
ततो हिमगिरिः साकं मुनिभिर्मेनकान्वितः ।
जगाम कन्यामानेतुं तद्वाक्याद्गिरिजाश्रमम् ॥ १३८ ॥
अपश्यन्पार्वतीं सर्वे निरङ्कुशतपःकृशाम् ।
तेजसा पुनरुद्रिक्तहुताशनशिखोपमाम् ॥ १३९ ॥
तामालोक्य ततो देवीमभाषन्त महर्षयः ।
अस्माभिर्भगवानद्रिं याचितो भवतीमिति ॥ १४० ॥
श्रुत्वेति सा तद्वचनं सद्यस्त्यक्ततपःक्लमा ।
पूर्णं तपःफलं प्राप्तमिति चेतस्यकल्पयत् ॥ १४१ ॥
ततः पितृभ्यां सहसा जगाम गिरिजा गृहम् ।
हिमवानप्यसामान्यमुत्सवं पर्यकल्पयत् ॥ १४२ ॥
ऋतवो मूर्तिमन्तोऽस्य दासभावं वितेनिरे ।

१. 'सद्यः' ख. २. 'नद्रिं याचते' इति शोधितः.

वायुर्मार्जनकृज्जातस्तदानीं सरलद्रुमः ॥१४३ ॥
पुष्पोपकारनिर्माणं चक्रिरे वनदेवताः ।
स्वयं लक्ष्मीर्गृहे तस्थौ चिन्तामणिविभूषणा ॥ १४४ ॥
नागकिन्नरगन्धर्वयक्षविद्याधरादयः ।
सर्वेऽपि किंकरीभावं हिमाद्रेः पर्यकल्पयन् ॥ १४५ ॥
कुलनद्यः समुद्राश्च मेरुमुख्याश्च पर्वताः ।
सर्वे साहायकं चक्रुस्तदानीं हिमभूभृतः ॥ १४६ ॥
सप्तर्षिकथितार्थस्य शंकरस्याथ नाकिनः ।
सर्वाभरणसंरम्भं चक्रिरे गन्धमादने ॥ १४७ ॥
शौरिः सर्वाण्याभरणान्यानिनायास्य सेवया ।
चाटूनि कुर्वञ्जग्रन्थ चन्द्रं मूर्ध्नि पितामहः ॥ १४८ ॥
भस्माङ्गरागद्वैगुण्यं कृत्वा कर्पूररेणुभिः ।
पुरंदरेण मन्दारमालाभिः शंभुरर्चितः ॥ १४९ ॥
वायुर्विभूषयांचक्रे वृषभं समनोजवम् ।
अन्येऽपि देवाः सेवार्थमवर्तन्त पुनः पुनः ॥ १५० ॥
मां निवेदय देवायेत्याचचक्षे पुनः पुनः ।
चाटूनि नन्दिरुद्रस्य कुर्वाणो गरुडध्वजः ॥ १५१ ॥
धरामालम्ब्य जानुभ्यामथोवाच जनार्दनः ।
शोभसे भगवञ्छंभो रूपेणानेन चारुणा ॥ १५२ ॥
प्रागेव प्रतिपन्नार्था रतिरेषा पुरःस्थिता ।
तदुत्पादय कन्दर्पं करुणा क्रियतामिति ॥ १५३ ॥
अथ गौरीमुखाम्भोजदर्शनोत्सुकमानसः ।
ससर्ज मदनं देवो गिरिशो निजयेच्छया ॥ १५४ ॥
ततो वृषभमारुह्य स[1] जगाम हिमाचलम् ।
अहंपूर्विकया क्रान्तानन्यान्नन्दी जगाद च ॥ १५५ ॥
दूरीभवन्तु गिरयः पाषाणस्पर्शकर्कशाः ।

१. 'संजगाम' ख.

आर्द्रीकुरुध्वमालोकाः(?) कठिनीभवताब्धयः ॥ १५६ ॥
इन्द्रादयः सुराः सर्वे पुरो यान्तु शनैः शनैः।
समीरो मृदुतामेतु न चेद्रेणुः प्रगल्भते ॥ १५७ ॥
कुरुतां युगपद्वृत्तिं सूर्याचन्द्रौ गिरा मम।
न चेदुष्णत्वशीतत्वरूपोदेति कदर्थना: ॥ १५८ ॥
कम्पयन्पवनश्छत्रं किंकिणीर्वादयत्वलम्।
न विचारयते पश्य किंनरी कलकाकलीम् ॥ १५९ ॥
एवं वदति साटोपं नन्दिरुद्रे प्रभोः पुरः।
नियमेनागमन्सर्वे ब्रह्मविष्णुपुरःसराः ॥ १६० ॥
ततः प्राप तुषाराद्रिं शशिखण्डशिखामणिः।
चिन्तारत्नगृहव्रातवशीकृतविलोचनम् ॥ १६१ ॥
तं विलोकयितुं देवं हिमवत्पुरवासिनः।
अतिष्ठन्राजमार्गेषु निर्गत्य निजमन्दिरात् ॥ १६२ ॥
पुराङ्गनाजनो हर्म्यगवाक्षविवराध्वना।
तमीक्षमाणः पार्वत्यास्तपः क्रूरमवन्दत ॥ १६३ ॥
ततो मणिमयागारं विश्वकर्मविनिर्मितम्।
प्रविवेश हरो गौरीं विलोकयितुमुत्सुकः ॥ १६४ ॥
क्रीडोद्यानसहस्राढ्यं कनकाम्भोजराजितम्।
तदालोक्य गृहं शक्रश्चक्षुष्मत्तामवन्दत ॥ १६५ ॥
आसीत्तत्र हरिर्द्वारि कांश्चित्कांश्चित्प्रवेशयन्।
अलक्षिताः केऽप्यविशन्निपतन्मणिकङ्कणाः ॥ १६६ ॥
तुषाराद्रिगिरा तत्र ब्रह्माजनि पुरोहितः।
चतुर्भिश्चापठद्वक्त्रैर्ऋचः परिणयोचिताः ॥ १६७ ॥
पाणिग्रहक्षणे तत्र पार्वत्या वासवादयः।
निवृत्ततारकत्रासा इत्यन्योन्यमचिन्तयन् ॥ १६८ ॥
रत्नान्युपायनीचक्रे तत्क्षणे वरुणः पुनः।

अदत्त चित्राभरणान्यग्निश्च वृषलक्ष्मणे ॥ १६९ ॥
जग्राह वासवश्छत्रमादत्त हरिरासनम् ।
नारदस्तुम्बुरुश्चित्रं कालोचितमवादयत् ॥ १७० ॥
पाणिग्रहे च निष्पन्ने प्रणनाम महीधरः ।
देवं देवीं च हर्षास्रदन्तुरीभवदीक्षणः ॥ १७१ ॥
तत्रैव च निशामेकां देव्या निन्ये महेश्वरः ।
प्रातरापृच्छ्य शैलेन्द्रं मन्दराद्रिमवाप च ॥ १७२ ॥
गते शंभौ समं देव्या हिमाद्रिर्मेनकायुतः ।
शून्यीभूतमिवाशेषं निजं पुरममन्यत ॥ १७३ ॥
मन्दराद्रौ ततो देवो विजहार तया सह ।
नानाविधेषु देशेषु विलासैर्विविधैः प्रभुः ॥ १७४ ॥
कदाचित्पार्वती पुत्रं चकाराशोकपादपम् ।
असेचयदमुं शश्वत्प्रीत्या कस्तूरिकारसैः ॥ १७५ ॥
एवं गते बहौ काले वासवेन प्रचोदितः ।
जगाद पार्वतीं जातु नमन्मूर्ध्ना बृहस्पतिः ॥ १७६ ॥
त्वं देवी वल्लभा शंभोर्जननी सर्वदेहिनाम् ।
इति किंचिन्मया वाच्यमिदानीं निर्णयस्व तत् ॥ १७७ ॥
प्रायेण पुत्रो देहस्य फलं सर्वत्र कीर्त्यते ।
सुतं विना निरर्थं च जन्म कस्योपयुज्यते ॥ १७८ ॥
अत एव हि सर्वेषां स्नेहः पुत्रेष्वनश्वरः ।
तदत्र मातर्मर्यादां समां द्रष्टुमिहार्हसि ॥ १७९ ॥
इत्युक्ते तेन गिरिजा बभाषे हर्षनिर्भरा ।
श्रूयतामत्र[1] पुत्रस्य माहात्म्यं कथयामि ते ॥ १८० ॥
मरौ पयोमयं कूपं यः कारयति कोविदः ।
बिन्दुना बिन्दुना चास्य वर्षं वर्षं वसेद्दिवि ॥ १८१ ॥
दशकूपोपमा वापी दशवापीसमो ह्रदः ।

१. 'श्रूयता(तां) पुत्र पुत्रस' ख.

दशहृदसमो वृक्षो दशवृक्षसमः सुतः ॥ १८२ ॥
एवं सुतस्य मर्यादामवधारय तत्त्वतः ।
इति श्रुत्वा च तद्वाक्यं हृष्टोऽगच्छद्बृहस्पतिः ॥ १८३ ॥
देवकार्योद्यतस्यैवं वाणीं संचित्य गीःपतेः ।
पुत्रोत्पत्त्याभिलाषं सा बबन्ध हृदि पार्वती ॥ १८४ ॥
अथ वामकरे देवीं गृहीत्वा परमेश्वरः ।
प्रविश्य रत्नप्रासादं दुरोदरमकल्पयत् ॥ १८५ ॥
क्रीडतोर्द्यूतविधिना तयोस्तत्र पुनः पुनः ।
वपुः सहायतां भेजे मणिकुट्टिमबिम्बितम् ॥ १८६ ॥
तयोरेवं विहरतोः कदाचन निरन्तरः ।
प्रादुर्बभूव शस्त्रौघः पूरिताम्बरकन्दरः ॥ १८७ ॥
ततः किमेतदित्युक्ते देव्या तत्र सविस्मयम् ।
स्मितेन ककुभो लिम्पन्बभाषे परमेश्वरः ॥ १८८ ॥
एतददृष्टपूर्वं ते वर्णये शृणु पार्वति ।
क्रीडन्ति मत्प्रिया एते गणाः शैलेऽत्र सर्वतः ॥ १८९ ॥
मत्क्षेत्रसेविनः केचित्केचिच्च मदुपासिनः ।
मामिष्टवन्तः केचिच्च भक्त्या मे गणतां गताः ॥ १९० ॥
ब्रह्मविष्णुप्रभृतयस्तेऽपि सर्वे व्यवस्थिताः ।
तेऽपि मत्प्रियतां दृष्ट्वा गणेशान्पर्युपासते ॥ १९१ ॥
संख्या न काचिदस्त्येषां गणानां देवि पार्वति ।
नन्दिरुद्रश्च सेनानीः सर्वेषां च स ते सुतः ॥ १९२ ॥
इत्युक्ते तेन देवेन पार्वती जातविस्मया ।
अहो भगवतो रूपमिति चेतसि संदधे ॥ १९३ ॥
अथैकदा भगवतो रहःक्रीडाभिलाषिणोः ।
प्रविष्टयोर्मणिगृहं द्वारमध्यास्त केशवः ॥ १९४ ॥
स रुरोध तदा सर्वान्ब्रह्मशक्रपुरःसरान् ।

असौ नावसरो देवौ विहरन्तौ स्थिताविति ॥ १९५ ॥
एवं रहःस्थितवतोस्तयोस्तत्र निजेच्छया ।
समासहस्रमगमद्विलासमणिवेश्मनि ॥ १९६ ॥
ततस्तथा स्थिते देवे ब्रह्माद्याः कार्यविह्वलाः ।
तद्वृतान्तानुसारेण हव्यवाहं व्यसर्जयन् ॥ १९७ ॥
प्रविश्य पक्षरन्ध्रेण शुकरूपः शिखी ततः ।
देवमालोकयामास देव्या सह रहःस्थितम् ॥ १९८ ॥
शुकरूपं परिज्ञाय पावकं प्रेषितं सुरैः ।
भगवानब्रवीत्कोपपरिपाटललोचनः ॥ १९९ ॥
ममैवं तिष्ठतो यातो विघ्नभावं जडो भवान् ।
तदिदानीं वच इदं कुरुष्व गलितत्रपः ॥ २०० ॥
सर्वेषामास्यभूतस्त्वममराणां हुताशन ।
तत्सर्वं भुञ्जते देवा हुतं क्षिप्तं च यत्त्वयि ॥ २०१ ॥
दिवौकसां समग्राणामुपभोगाय संप्रति ।
तदेतत्पिब मद्वीर्यमन्यथा न भविष्यसि ॥ २०२ ॥
इत्युक्तो देवदेवेन पावको भयकातरः ।
देव देहीति तद्वीर्यं पपौ विरचिताञ्जलिः ॥ २०३ ॥
अत्युत्कटं महादेववीर्यं पीतं हविर्भुजा ।
सर्वेषामपि देवानामविशज्जठरान्तरम् ॥ २०४ ॥
एकः स्तब्धत्वमगमद्वह्निः सर्वे सुरास्तथा ।
देवकोट्यस्त्रयस्त्रिंशदथ निःस्पन्दतां गताः ॥ २०५ ॥
स्तोत्रेणाराधयामासुरभयाय महेश्वरम् ।
स्तुतीः सुराणामाकर्ण्य तदानीं हव्यवाहनम् ॥ २०६ ॥
तद्वीर्यपानाद्व्यामूढमुवाच परमेश्वरः ।
गच्छ नष्टधृते वह्ने मूर्धानं मेरुभूभृतः ॥ २०७ ॥
मदाज्ञया वमेस्तत्र मद्वीर्यमिदमुत्कटम् ।

मद्वीर्ये भवता वान्ते मेरुपर्वतमूर्धनि ॥ २०८ ॥
यथाप्रकृति वर्तन्ते स्वस्थत्वेन सुरा इति ।
एवं तदाज्ञया वह्निरगच्छन्मेरुपर्वतम् ॥ २०९ ॥
ववाम तत्र वीर्यं च पारमेश्वरमुत्कटम् ।
वान्ते हुताशेन शनैः पपात गहने वने ॥ २१० ॥
द्रवत्सुवर्णसदृशं तद्वीर्यं शरकानने ।
संपद्यते स्म सरसी विकसत्कनकाम्बुजा ॥ २११ ॥
अधिगम्य ततो देवी द्रवत्कनकनिर्मलाम् ।
सरसीमगमत्साकं सखीभिर्जलकेलये ॥ २१२ ॥
अथोपविष्टा तत्तीरे पातुकामा पयांसि सा ।
स्नात्वोत्थिताः कृत्तिकाः षडविकल्पा व्यलोकयत् ॥ २१३ ॥
आदाय पद्मपत्रेषु तद्वारि गमनोन्मुखीः ।
ताः कृत्तिकास्तत्समये जगाद परमेश्वरी ॥ २१४ ॥
पद्मपत्रस्थितं वारि पिबाम्यस्मि पिपासिता ।
आनीयतामिदं सान्द्रद्रवत्काञ्चननिर्मलम् ॥ २१५ ॥
इत्युक्तवत्यां पार्वत्यां पयोभरपिपासया ।
अवोचन्कृत्तिकास्तत्र मधुराक्षरया गिरा ॥ २१६ ॥
निपीयतामिदं किंतु सुतं यं जनयिष्यसि ।
अस्माकमपि पुत्रोऽसौ भवत्विति कृपां कुरु ॥ २१७ ॥
युवयोर्वर्तते वीर्यं भुवनत्रयदुःसहम् ।
त्वदंशस्त्वदसाधार इति किं नाम वर्ण्यते ॥ २१८ ॥
एतत्तदुक्तमाकर्ण्य साब्रवीदेवमस्त्विति ।
अपिबत्पद्मपत्रैश्च सरसीं सकलामपि ॥ २१९ ॥
अजायत ततो देव्या बालो रविशशिद्युतिः ।
तीव्रशक्तिकरश्चूडापाटलीभिश्च शोभितः ॥ २२० ॥
देव्या विनिर्गतः कुक्षेर्दैत्यान्मारयितुं क्षमः ।
इति लेभे कुमाराख्यां स बालः परमेश्वरात् ॥ २२१ ॥

षड्भ्यः प्रसादीचक्रे यं कृत्तिकाभ्यो महेश्वरी ।
ततः षण्मुखतां लेभे कार्तिकेयाभिधां च सः ॥ २२२ ॥
चैत्रस्य बहुले पक्षे पञ्चदश्यां कृतोदयम् ।
तमालोक्य ततो देवाः परितोषमुपागताः ॥ २२३ ॥
तं चैत्रसितपञ्चम्यां षड्दिनं परमेश्वरः ।
षड्वक्रं प्रथयामास शस्त्रास्त्रप्रथनादिभिः ॥ २२४ ॥
चैत्रस्य सितषष्ठ्यां च वासवोऽस्मै निजां सुताम् ।
आदत्त देवसेनाख्यां ब्रह्मविष्णुप्रचोदितः ॥ २२५ ॥
मयूरं वाहनं वायुरुपायनमकल्पयत् ।
त्वष्टा च कुक्कुटं तस्मै क्रीडार्थं कामरूपिणम् ॥ २२६ ॥
अथ सर्वे सुरास्तत्र शक्रोपेन्द्रपुरःसराः ।
तस्य सप्तदिनस्यापि विज्ञप्तिमिति चक्रिरे ॥ २२७ ॥
देवदेवस्य पुत्रस्त्वं तत्समानपराक्रमः ।
प्रसीद तत्कुरु कृपां सर्वदानवदुर्जय ॥ २२८ ॥
श्रुत्वेति तत्क्षणं तेषामभाषत षडाननः ।
षड्भिर्मुखैः प्रकटयन्नभयामृतसारिणीम् ॥ २२९ ॥
अभीष्टं कथयध्वं मे किमस्ति भवतां हृदि ।
संपादयामि यत्सद्यो निःसंदेहं निमेषतः ॥ २३० ॥
इत्युक्ते तेन शक्राद्या अभाषन्त नतास्ततः ।
तारकः पीडयत्यस्मान्दैत्येन्द्रो विजयस्व तम् ॥ २३१ ॥
इति तद्वचनं श्रुत्वा सोऽब्रवीदेवमस्त्विति ।
चचाल तारकवधं कर्तुं च शिखिवाहनः ॥ २३२ ॥
तस्मिन्निर्गतवत्येव शक्रो दूतं व्यसर्जयत् ।
तारकस्य तिरस्कारवचनैः परुषक्रमैः ॥ २३३ ॥
स पुरंदरदूतस्तं व्यलोकयत तारकम् ।
अभाषत च निःशङ्कधैर्यगम्भीरया गिरा ॥ २३४ ॥

भो भोस्तारक देवेन्द्रस्त्वामाह श्रूयतामिदम् ।
निवार्य दानववधगीतश्रवणचापलम् ॥ २३५ ॥
लोकोच्छेदनतः कर्म राजद्विष्टं त्वया कृतम् ।
तदद्य ते नियन्तास्मि समग्रभुवनप्रभुः ॥ २३६ ॥
तस्येति वचनं श्रुत्वा सोऽब्रवीदथ तारकः ।
करेण करमास्फाल्य विकृतस्मितया गिरा ॥ २३७ ॥
किं किं नाम न मां शास्ति बाधकं पाकशासनः ।
अद्यापि वर्तते तस्य हृदये विभुताज्वरः ॥ २३८ ॥
धिग्धिक्स शक्रः सर्वाङ्गनेत्रगाढास्रडम्बरम् ।
स्वेदोऽयमिति निह्नोतुं प्रावर्तत पुरो मम ॥ २३९ ॥
सहस्रशो मया तस्य पौरुषं तत्परीक्षितम् ।
लज्जते हन्त नाद्यापि परुषैर्वचनैः खलः ॥ २४० ॥
इत्युक्त्वा तारको दूतं न्यवारयत तं ततः ।
अचिन्तयच्च तत्कालमरिष्टैर्भयमाश्रयन् ॥ २४१ ॥
भूरिशो विजितः शक्रस्तथाप्येवं वदेत्कथम् ।
अवैमि तस्य कोऽपि स्यादाश्रयो धैर्यकारणम् ॥ २४२ ॥
एवं विचिन्तयत्यस्मिन्नाजगाम षडाननः ।
अकस्मादेव शुश्राव तारकश्च सुरध्वनिम् ॥ २४३ ॥
सप्तवासर षड्वक्त्र जितनिःशेषदानव ।
जय शक्तिधर स्कन्द गौरीनन्दन रक्ष नः ॥ २४४ ॥
इति तत्र गुहस्तोत्रं स निशम्य च दानवः ।
कालनेमिप्रभृतिभिर्दैत्यैः सह विनिर्ययौ ॥ २४५ ॥
आलोक्य तेजोरूपं च कुमारं तारकोऽब्रवीत् ।
अयं स मां भवाञ्जेतुमागतः प्रेरितः सुरैः ॥ २४६ ॥
बालोऽसि भवतो योग्यं लीलाकन्दुकखेलनम् ।
मत्पौरुषं यमं पृच्छ पलायितमितस्ततः ॥ २४७ ॥

बालानां निर्विवेकत्वमिति सर्वत्र गीयते।
यत्क्षीरकण्ठोऽपि भवान्मां विजेतुं व्यवस्यति॥ २४८॥
इति श्रुत्वा वचस्तस्य जगाद शिखिवाहनः।
वचोभिः पौरुषनयैः सुरचिन्तां निवर्तयन्॥ २४९॥
हंहो तारक बालोऽहं करवै कन्दुकक्रमम्।
मूर्ध्नैव पतता वेगात्क्षणमुत्पतता च ते॥ २५०॥
प्रत्यक्षलक्ष्ये शौर्येऽसिन्पुरः किमिति पृच्छ्यते।
बालोऽहमिति का भ्रान्तिरिदमाकर्ण्यतां वचः॥ २५१॥
भयं शिशोरजगराद्धास्वान्बालो हि दुःसहः।
अल्पाक्षरश्च मन्त्रश्च स्फुरतां न किमर्हति॥ २५२॥
वयोधिकत्वं प्रायेण देहिनां बलहानये।
बहुकालवशात्पश्य क्षीयन्ते पादपादयः॥ २५३॥
तद्बालोऽहं भवान्भूरिवया इति विचार्यताम्।
मणिस्तत्कालसंभूतः पाषाणश्च चिरंतनः॥ २५४॥
एवं वदत्येव गुहे स निचिक्षेप मुद्गरम्।
चक्रेण च निराचक्रे कुमारेणापि तत्क्षणम्॥ २५५॥
विभिद्य मुद्गरं स्कन्दो गदां चिक्षेप कोपतः।
कल्पान्तवात्ययेवाद्रिश्चकम्पे दानवस्तया॥ २५६॥
तारकं कम्पितं दृष्ट्वा दैत्येन्द्रास्तस्य विग्रहे।
अवलेपेन सहिताः क्रुद्धाः क्रूरं प्रजह्रिरे॥ २५७॥
दानवायुधसंघट्टाद्गुहो न हृदि विव्यथे।
वदन्नेव महातेजाः स जहास पुनः पुनः॥ २५८॥
बाध्यमानानथालोक्य दानवैर्दारुणैः सुरान्।
क्रन्दन्तं वासवं पश्यन्नुवाच विहसन्गुहः॥ २५९॥
तिष्ठ तारक सर्वाणि निजास्त्राणि सराधुना।
अयं निहन्यसे सद्यो मया स्वबलगर्वितः॥ २६०॥

इत्युक्त्वा शक्तिममुचत्तदानीं शिखिवाहनः ।
अदहत्सा च दैत्येन्द्रं महातडिदिव द्रुमम् ॥ २६१ ॥
हते तारकदैत्येन्द्रे स्तुवन्तो वासवादयः ।
अनुजग्मुरथ स्कन्दं शिवदर्शनसंमुखम् ॥ २६२ ॥
इन्द्रस्तदानीं दैत्येन्द्रलुठितं सुरवारणम् ।
जग्राह विहसन्नुच्चैःश्रवसं च तुरङ्गमम् ॥ २६३ ॥
दैत्योद्यानेभ्य आनीय सहकारादयो द्रुमाः ।
नन्दने स्कन्दमाहात्म्यात्सुरैर्भूयोऽपि रोपिताः ॥ २६४ ॥
दानवे निहते तस्मिन्केषां नाभवदुत्सवः ।
भूयोऽपि लेभिरे स्वर्गं चिरादप्सरसां गणाः ॥ २६५ ॥
अथ स्कन्दो महेन्द्राद्यैः सेव्यमानो व्यलोकयत् ।
देव्या सह महादेवं स्थितं मन्दरमूर्धनि ॥ २६६ ॥
ततोऽविशन्महादेवसभां केवल एव सः ।
तत्र शंभोरुमायाश्च पादौ जग्राह मूर्धनि ॥ २६७ ॥
कुमारावेदितान्ब्रह्मविष्णुशक्रपुरोगमान् ।
प्रावेशयत्ततो नन्दी शंभुभ्रूभङ्गसंज्ञया ॥ २६८ ॥
ते प्रविष्टास्ततो देवाः शिरश्चुम्बितभूमयः ।
विज्ञप्तिमित्यरचयन्बालचन्द्रशिखामणेः ॥ २६९ ॥
विश्वप्रभुर्भवानेव तारकारिश्च ते सुतः ।
चिरादिदानीमस्माकं सर्वे शाम्यन्त्युपद्रवाः ॥ २७० ॥
तारको निहतो देव तव प्राप्तं च दर्शनम् ।
अभ्यर्थनीयं किमन्यदस्माकं हृदि वर्तते ॥ २७१ ॥
तथाप्येतावदभ्यर्थ्यमस्माकं हृदि वर्तते ।
स्मृतः पवित्रयत्येष सुरलोकमहोत्सवः ॥ २७२ ॥
य इमं वाचयेद्यो वा शृणुयात्स्कन्दचेष्टितम् ।
भक्तः स निर्वृतिं प्राप्नोत्वन्तरायविवर्जितम् ॥ २७३ ॥

यत्रैतत्पठ्यते तत्र भयं घोरं निवर्तताम् ।
मा कदाचिच्च जायन्तां दुर्भिक्षाद्या उपद्रवाः ॥ २७४ ॥
एवं स धूर्जटिर्देवैर्विज्ञप्तः करुणापरः ।
सुराणामुत्सवं पश्यन्नब्रवीदेवमस्त्विति ॥ २७५ ॥
इयति जगति निस्तुषानुकम्पा
प्रकटनकेलिपटुर्महेश एव ।
इति मनसि निधाय को(के)ऽपि भक्तिं
विदधति तत्र गलत्समस्तमोह(हा)ः ॥ २७६ ॥

इति श्रीमहामाहेश्वरराजानकजयद्रथविरचिते हरचरितचिन्तामणौ तारकवधे सुरमहोत्सवो नाम नवमः प्रकाशः ।

---

दशमः प्रकाशः ।

ॐ नमः श्रीकामेश्वराभ्याम् ।

एते ये मुनयः शिवेन्द्रियमयास्तेषां बहिर्वृत्तयः
क्षोभ्यन्ते भवता प्रभो प्रियतमाः स्वातन्त्र्यलीलायितम् ।
तेष्वज्ञानवशाद्विवादिषु ततो लिङ्गं स्वमाश्चर्यकृ-
त्प्राग्भिन्नं प्रकटय्य संप्रति मयि ज्योतिर्मयं भासताम् ॥ १ ॥
शक्त्या सर्वानधरयन्ब्रह्मविष्णुपुरःसरान् ।
निगृह्याप्यनुगृह्णाति महादेवो दयानिधिः ॥ २ ॥
कदाचन तुषाराद्रेरागच्छन्व्योमवर्त्मना ।
अपश्यदाश्रमं शंभुर्देवदारुवनाभिधम् ॥ ३ ॥
उत्सङ्गस्था स्मरारातेर्देवी दृष्ट्वा तमाश्रमम् ।
कौतूहलं परं प्राप प्रमोदविकचेक्षणा ॥ ४ ॥
फलैः सषड्रसाहारविविधौषधिसुन्दरम् ।
तदनुद्धतशार्दूलं मनोहारि तपोवनम् ॥ ५ ॥
कृष्णशारकुलाक्रान्तं पवित्रकुसुमद्रुमम् ।
निसर्गसंयतैश्चित्रं पक्षिभिश्च विराजितम् ॥ ६ ॥

अत्रिर्वशिष्ठो माण्डव्यः पुलस्त्यभृगुकश्यपाः।
मरीच्यगस्त्याङ्गिरसः पुलहक्रतुवत्सकाः ॥ ७ ॥
जमदग्निस्तथा विश्वावसुः कौशिकगौतमौ।
अपरेऽप्येकदा तत्र तपोऽकुर्वन्महर्षयः ॥ ८ ॥
वपुषा दीप्यमानास्ते चिन्तयन्तो महेश्वरम्।
क्रूरक्रूरतपश्चर्यां चिरकालमकल्पयन् ॥ ९ ॥
दन्तोलूखलिनः केचिच्छिलोञ्छव्रतिनः परे।
शुष्कपर्णाशिनश्चान्ये बभूवुस्ते महर्षयः ॥ १० ॥
जटाभारेषु केषांचित्कृताः पक्षिभिरालयाः।
केषांचिदभवद्दंशक्षपितस्तत्र विग्रहः ॥ ११ ॥
पूर्णेन्दुबिम्बसुन्दर्यस्तत्पत्न्यो मधुरस्मिताः।
वेणा वेणुकरास्तत्र गायन्ति स्म मुहुर्मुहुः ॥ १२ ॥
एकत्र मुनिपत्नीभिः कुसुमायुधजीवितम्।
अन्यत्र मुनिभिश्चारुवैराग्यं च वनं बभौ ॥ १३ ॥
तदालोक्य ततो देवी देवदारुतपोवनम्।
पप्रच्छ चन्द्रमुकुटं कौतुकोद्रिक्तया गिरा ॥ १४ ॥
अस्मिन्वने प्रभो स्वर्गनरकाविव तिष्ठतः।
यदेकतोऽप्यप्सरसो निर्मांसा एकतो नराः ॥ १५ ॥
इति पृष्टो महादेव्या जगाद परमेश्वरः।
स्मितचन्द्रिकया लिम्पन्कर्पूरद्रवकल्पया ॥ १६ ॥
एता अप्सरसो देवि विहरन्ति तपोवने।
पत्न्यो मुनीनामेतेषामिमा अत्र मनोरमाः ॥ १७ ॥
ये चात्र विगलन्मांसास्ते पार्वति महर्षयः।
क्रूरक्रूरतपश्चर्या नियमक्षतविग्रहाः ॥ १८ ॥
ब्रह्मदेहोत्थिता एते देवि सप्तर्षयस्तथा।
अन्येऽपि मुनयोऽत्रैव तपस्यन्ति निरङ्कुशम् ॥ १९ ॥

उद्भूय ब्रह्मणो देहाज्ज्योतीरूपा नभस्तले ।
निपतन्त्यभिमानेन पशुत्वे मुनयोऽप्यमी ॥ २० ॥
इत्युक्तवति चन्द्रार्धमुकुटे साप्यभाषत ।
मुनयोऽमी महाभाग तपस्यन्तीति भाषसे ॥ २१ ॥
भक्तानुकम्पी सर्वत्र दीनानाथप्रियो भवान् ।
स्मर्यते यैर्महादेव तेषां सिद्धिरदूरतः ॥ २२ ॥
एवंविधाः प्रियास्त्यक्त्वा तपस्यन्ति महर्षयः ।
प्रसीदसि त्वमद्यापि नैषामित्यद्भुतं प्रभो ॥ २३ ॥
यदि न क्रूरतपसां महर्षीणां प्रसीदसि ।
कथमन्ये विधास्यन्ति तद्भक्तिं त्वयि देहिनः ॥ २४ ॥
तथेति कथिते देव्या जगाद गिरिजापतिः ।
सत्यं त्वयोदितं भक्तान्सततं पालयाम्यहम् ॥ २५ ॥
दुःखत्रयममी कामक्रोधलोभाभिधं पुनः ।
वहन्ति तत्र मुच्यन्ते पशुसंस्कारपञ्जरात् ॥ २६ ॥
राजकन्या इमा पत्न्य एषां लावण्यगर्विताः ।
कलुषीकुरुते चित्तं केषां न स्मितविप्रुषा ॥ २७ ॥
अपूर्वाश्चात्र ये केचित्प्रविशन्ति तपोवनम् ।
शपन्ति तान्निजवधूचापल्याशङ्कनादमी ॥ २८ ॥
प्रविश्य पश्यत्येतासां वदनं यः प्रमादतः ।
मुनयस्तं दहन्त्येव मूढास्तीव्रतपोर्चिषा ॥ २९ ॥
वार्धुकाद्दुर्बलत्वाच्च व्रतभीत्या च सुन्दरि ।
कामभोगेषु सक्तोऽयं वर्तते मुनिकीटकः ॥ ३० ॥
यथैव रोगिभिर्नान्नं पुरःस्थमपि भुज्यते ।
तथैव व्रतिनामेषां विद्धि कान्तासमागमम् ॥ ३१ ॥
मुनीननुगृहीत्वैतत्किं मां प्रार्थयसे वृथा ।
इत्युक्ते देवदेवेन देवी भूयोऽप्यभाषत ॥ ३२ ॥

स्नाय्वस्थिशेषास्तिष्ठन्ति मुनयः प्रेतवत्प्रभो ।
तापत्रयं वदन्नेषां हासमाविष्करोषि मे ॥ ३३ ॥
भूयो भूयो ब्रुवाणायामिति तस्यां शिवोऽब्रवीत् ।
प्रायः कौतूहलं स्त्रीणां नैसर्गिकमिहोच्यते ॥ ३४ ॥
प्रत्यक्षयस्व विप्राणां स्वभावं गगनादितः ।
अहं प्रकाशयिष्यामि प्रविश्यैकस्तपोवनम् ॥ ३५ ॥
इत्युक्त्वा भगवान्देवीं स्थापयित्वा नभस्तले ।
प्रविविक्षुर्मुनिस्थानं चक्रे रूपविपर्ययम् ॥ ३६ ॥
स देवः प्रकटीकुर्वन्स्वेच्छयोन्मत्तकव्रतम् ।
दर्भैः कण्ठस्रजं चक्रे विस्तीर्णामङ्गदानि च ॥ ३७ ॥
अलातं दक्षिणे पाणावङ्गारीभूतमाददे ।
विकौपीनकवस्त्रः स वामे च घटकर्परम् ॥ ३८ ॥
अराजत स दिग्वासाः कृतभस्मावगुण्ठनः ।
पीयूषनिःष्यन्दिवपुः शरदीव सुधाकरः ॥ ३९ ॥
एवंविधवपुः शंभुः प्रविवेश तपोवनम् ।
नानाविधैः स्वरैर्गर्जन्नदन्नृत्यन्हसन्नपि ॥ ४० ॥
साम गायन्क्वचिद्वीणां वेणुस्वरकरः क्वचित् ।
नारीमध्यं महादेवः प्रविवेश निरङ्कुशम् ॥ ४१ ॥
तमालोक्य [1]तदा सर्वा मुनिपत्न्यः प्रचुक्षुभुः ।
एह्येहीति हठेनैव समालिङ्गितुमुत्सुकाः ॥ ४२ ॥
तदालोकनसंक्षोभे मुनिपत्न्यः सहस्रशः ।
निजानि वस्त्राण्युत्सृज्य ममज्जुर्मान्मथे रसे ॥ ४३ ॥
न कृत्यं मुनिभिः किंचिदिति संचिन्त्य तत्क्षणम् ।
काश्चित्तमेवानु(न्व)सरन्स्मरवेगतिरस्कृताः ॥ ४४ ॥
प्रसन्नावयवाः काश्चिन्मदनज्वरजर्जराः ।
भेषजं सममन्यन्त सान्द्रं तदधरामृतम् ॥ ४५ ॥

---

१. 'ततः' ख.

काश्चित्तु दर्शनादेव निमीलितविलोचनाः ।
अपदे प्रकटीचक्रुः सीत्कारमधुरं वचः ॥ ४६ ॥
काश्चिद्विवस्त्राभरणा गाढरागविशृङ्खलाः ।
परिचुम्बितुमुन्मुख्यो जघनेन विलम्बिताः ॥ ४७ ॥
एवं क्षोभमयीं प्राप्य तदानीं रागविक्रियाम् ।
ता अभाषन्त मुञ्चन्त्यः कटाक्षेन्दीवरस्रजम् ॥ ४८ ॥
कण्ठसूत्रत्वमिच्छन्ति तवास्मद्बाहुवल्लयः ।
प्राणेश्वराचिरान्मुञ्च कर्कशं दार्भमङ्गदम् ॥ ४९ ॥
अस्मत्क्रीडोपधानत्वं नयस्व त्वरितं भुजम् ।
कान्त हेवाकमुत्सृज्य सांप्रतं घटकर्परे ॥ ५० ॥
त्वत्पाणिरस्मत्स्तनयोस्तरङ्गयतु संगतिम् ।
अयि सुन्दर केयं स्यादलातग्रहणार्थिता ॥ ५१ ॥
प्रेष्यतां पाणिपद्मोऽयमस्मत्क्रीडाकचग्रहे ।
जीवितेश्वर किं तिष्ठस्यद्यापि त्वं दिगम्बरः ॥ ५२ ॥
अस्माकमंशुकेनास्तामेकवस्त्रसुखासिका ।
लावण्यातिशयः कोऽपि तव वल्लभ वर्तते ॥ ५३ ॥
कन्दर्पशरभिन्नानि योऽस्मच्चित्तानि बाधते ।
इत्युक्त्वैव ततः सर्वाः समुत्सृज्य सतीव्रतम् ॥ ५४ ॥
आलिलिङ्गुर्महादेवं रागजर्जरचेतसः ।
एवंविधमथोदन्तमधिगम्य महर्षयः ॥ ५५ ॥
पत्नीक्षोभतिरस्कारकुपिताः समुपागमन् ।
केन तावदनार्येण मुषिताः सांप्रतं वयम् ॥ ५६ ॥
इति संचिन्तयन्तस्ते संप्रापुर्निजमाश्रमम् ।
तत्रापश्यन्स्मरक्षोभमयपत्नीसमाव्रतम् ॥ ५७ ॥
अपूर्वलावण्यतनुं मुनयस्तं दिगम्बरम् ।
रागविस्मृतवस्त्राभिर्मुनिपत्नीभिरादरात् ॥ ५८ ॥

मध्ये गृहीतं तं वीक्ष्य कुप्यन्ति स्म महर्षयः ।
कमण्डलुधराः केचित्केचित्पाषाणपाणयः ॥ ५९ ॥
केचित्सदण्डकाष्ठाश्च प्रजह्रुर्मोहिताः शिवे ।
मौञ्जीं कण्ठे विनिक्षिप्य केशेष्वाकृष्य केचन ॥ ६० ॥
पत्नीररुन्धन्नुन्निद्रमदनज्वरविह्वलाः ।
राजवंश्या महासाध्व्यो भवत्य इति केचन ॥ ६१ ॥
स्वपत्नीः सान्त्वयामासुर्जरादुर्बलमूर्तयः ।
विधाय मौञ्जीबन्धेन पाशं केचन दुःखिताः ॥ ६२ ॥
पत्नीक्षोभं पुरो दृष्ट्वा चक्रिरे मारणे मतिम् ।
मदनोन्मादसंत्यक्तगौरवाः काश्चनापरे ॥ ६३ ॥
स्वपत्नीः कर्कशतरैर्मुष्टिदण्डैरताडयन् ।
गाढं रागविषासङ्गमूर्छिताः परिभाव्य च ॥ ६४ ॥
केचित्स्वपत्नीरवदन्नुरस्ताडनतत्पराः ।
अंशेनापि न दोषोऽस्ति पत्नीनामस्मदाश्रमे ॥ ६५ ॥
असाध्य इन्द्रियजयो यत्सिद्धानामपि स्थितः ।
आसां क्षोभयिता यस्तु दण्ड्यतां बध्यतां च सः ॥ ६६ ॥
इत्यूचुरपरे तत्र कोपावेशविशृङ्खलाः ।
गृहीत्वा मुनयः सर्वे ते कामण्डलवं जलम् ॥ ६७ ॥
मायाव्यामूढमतयः शपन्ति स्म महेश्वरम् ।
खरवद्भाषसे क्रूरमुपप्लावयसे वनम् ॥ ६८ ॥
खरो वर्षायुतायुस्त्वमिति केचिद्बभाषिरे ।
कपालपाणिनिर्लज्ज उल्मुकं धारयस्यदः ॥ ६९ ॥
राक्षसस्तदटव्यां स्याः केचिदित्यवदन्नपि ।
दह्यतामयमस्माकं तपोभिश्चिरसंभृतैः ॥ ७० ॥
अवदन्निति केचिच्च भूमौ क्षिप्त्वा पयःकणान् ।
शंभौ न प्रभवन्ति स्म तेषां शापास्तथाविधाः ॥ ७१ ॥

निर्वाप्यते नहि तृणैः कदाचिदपि पावकः ।
बध्यते केन पवनो गगनं केन तन्यते ॥ ७२ ॥
विचारयन्निति न ते मूढाः शापार्पणोन्मुखाः ।
विलोक्य विफलीभूतानथ शापान्महर्षयः ॥ ७३ ॥
ते पुनरब्रुवन्कोपाज्ज्वलन्त इव सर्वशः ।
आजन्मसेवितः शंभुरस्माभिस्तपसा यदि ॥ ७४ ॥
तदुपप्लावकस्यास्य लिङ्गं पततु भूतले ।
इति तद्वचनं श्रुत्वा भक्तास्थाहेतवे शिवः ॥ ७५ ॥
स्वेच्छयैवामुचल्लिङ्गं किंचित्कोपमिवाश्रयन् ।
अथाट्टहासं निर्माय गिरिजायै प्रकाश्य तत् ॥ ७६ ॥
देवो नभःपथेनैव वृषमारुह्य सोऽगमत् ।
तल्लिङ्गं पतितं दृष्ट्वा तत्र ते मुनयस्ततः ॥ ७७ ॥
अन्धकारमयं विश्वमपश्यन्भयकातराः ।
वात्याभिरुल्लसन्तीभिस्तपोवनमकम्पत ॥ ७८ ॥
अन्धकारेण चन्द्रार्कनक्षत्राण्यपि जह्रिरे ।
कुतोऽप्यागत्य गर्जद्भिर्घोरैः कल्पान्तवारिदैः ॥ ७९ ॥
तेषां शान्तिमनीयन्त शिखिनो रक्तदुर्दिनैः ।
पाषाणवर्षिणः केचित्केचित्क्रूरपयोमुचः ॥ ८० ॥
तपोवने व्यदलयन्मुनिशालाः सहस्रशः ।
एवं बहुतरं कालं दृष्ट्वा तांस्तानुपद्रुतान् ॥ ८१ ॥
उदग्ररागविवशा मुह्यन्ति स्म महर्षयः ।
क्षुधा केचित्तृषा केचिद्भिया केचित्समाकुलाः ॥ ८२ ॥
स्वाध्यायाद्याः क्रियाः सर्वा व्यसरन्मुनयस्तदा ।
पिता पुत्रः सुहृत्पत्नी बन्धुर्दासः पितुर्गुरुः ॥ ८३ ॥
तत्र कोऽपि न कस्याभूत्तस्मिञ्जाते महाभये ।
इत्युत्पन्ने महाक्षोभे विश्वसंहारकारिणि ॥ ८४ ॥

महर्षयः शोकवशादभाषन्त परस्परम्।
कोऽसावुपद्रवः सर्वान्विमोहयति चिन्त्यताम् ॥ ८५ ॥
अदृष्टपूर्वकल्पान्तः किमस्माकं प्रगल्भते।
सत्योऽपि मुनिपत्न्यो यदुन्मत्तेन वशीकृताः ॥ ८६ ॥
इदं च तद्भयं जातं तस्मात्तत्परिभाव्यताम्।
संयता मुनिपत्न्योऽपि यस्मिन्प्राप्ते प्रचुक्षुभुः ॥ ८७ ॥
अयं प्रलयकालस्तु नैवाकस्माद्विशक्यते।
स कोऽपि देवो दिग्वासाः कोपेनेत्थमकल्पयत् ॥ ८८ ॥
स किं स्यादमराधीशो नाथो वा चिन्त्यमीदृशम्।
बिभेति न यदस्माकं तपोरूपात्स्म पावकात् ॥ ८९ ॥
अन्योऽपि लोकपालः को यः कुर्यादीदृशं क्रमम्।
दुःसहानि विजानन्ति यत्सर्वेऽपि तपांसि नः ॥ ९० ॥
ब्रह्माथवा विष्णुरसौ यदि स्यान्नाम पावकः।
तं त दहामस्तपसा देवमाराध्य शंकरम् ॥ ९१ ॥
अथ वा भगवानेव स किमेष महेश्वरः।
विहारेणाययौ हन्त नान्यसंभावना पुनः ॥ ९२ ॥
असंदेहं महादेवः स्वयमागच्छति स सः।
अस्मच्छापप्रतीघातः कुत्रान्यत्रोपलभ्यते ॥ ९३ ॥
खरो रात्रिचरश्च स्या इत्यस्मासु शपत्स्वपि।
स तेजोविग्रहो देवो मनाङ् नामापि नात्रसत् ॥ ९४ ॥
कुण्ठेषु सर्वशापेषु शिवभक्तानुरोधतः।
शापं गृहीत्वा पश्चात्स हसित्वा लिङ्गमत्यजत् ॥ ९५ ॥
एवं विचिन्तयत्स्वेव सर्वेषु दृढभीतिषु।
अवोचदत्रिः सत्रासगद्गदाक्षरया गिरा ॥ ९६ ॥
यः सर्गस्थितिसंहारकारी साक्षान्महेश्वरः।
आजगाम स विश्वात्मा नर्मणेति निरूप्यताम् ॥ ९७ ॥

तथाहि तस्य देवस्य सूक्ष्मरूपानुवर्तिनी।
मया सूर्येन्दुदहनच्छाया दृष्टौ निरूपिता ॥ ९८ ॥
इति तस्मिन्वदत्येव वशिष्ठो मुनिरब्रवीत्।
निधाय वक्षसि करं भयस्फुटनकातरः ॥ ९९ ॥
मुनिशापप्रतिघाताल्लक्षितोऽसौ शिवो मया।
रसना च विवादेषु नूनं तेनैव मोहिता ॥ १०० ॥
इत्युक्तवति चैतस्मिन्कश्यपो मुनिरब्रवीत्।
दर्शयन्भयवैक्लव्यं लोचनद्वयमीलनात् ॥ १०१ ॥
सिंहनादमसौ कुर्वन्परिज्ञातो मयामृतः।
यावच्च कथये तथ्यं तावत्तेनैव मोहितः ॥ १०२ ॥
इत्युक्त्वा विरते तस्मिन्भयनिःश्वासधूसरः।
दधीचिमुनिराख्यातुं प्रस्तौति स्म सविस्मयः ॥ १०३ ॥
मत्तमातङ्गलास्येन मया ज्ञातो महेश्वरः।
अन्यथा ये तु मन्यन्ते तेषां किमभिधीयते ॥ १०४ ॥
एवं गदितवत्यस्मिन्नभाषत पराशरः।
पाणिद्वयेन मूर्धानमवष्टभ्य ससंभ्रमः ॥ १०५ ॥
अहो भवन्तो जानन्ति किं किं न परमार्थतः।
तस्मिन्गते यदधुना विकल्पः परिकल्पते ॥ १०६ ॥
यो वादपरिवादेषु मूकः सर्वत्र लक्षते।
अथ वा वाक्पटोस्तस्य चरितं किं न शस्यते ॥ १०७ ॥
इहाप्यवस्थिते तस्मिन्नवलेपो विधीयते।
गते तु धूर्जटौ देवे इति ज्ञानं निवेद्यते ॥ १०८ ॥
स्तम्भिता यदि वाक्तेन तत्स्तुतिर्मा प्रवर्तताम्।
अधिक्षेपवचस्तस्य कथमित्यवधार्यताम् ॥ १०९ ॥
तस्मान्न ज्ञायते सोऽयं भगवान्को भवेदिति।
स्वाभिप्रायं परित्यज्य तद्ध्यानेनावधार्यताम् ॥ ११० ॥

अथेत्थं कथयत्यस्मिन्ध्यायन्तस्ते महर्षयः ।
स्मृतिदौर्बल्यतस्तत्र ज्ञानखण्डनमाप्नुवन् ॥ १११ ॥
यदा न किंचिद्ददृशुर्नष्टज्ञाना महर्षयः ।
अध्यगच्छंस्तिरोधानं तदानीमत्रिरब्रवीत् ॥ ११२ ॥
अस्माकं वर्तते कर्म धिगेतत्सामवायिकम् ।
आजगाम सुराधीशः कोऽप्यसावन्यविग्रहः ॥ ११३ ॥
यदधिक्षेपतो ज्ञानमस्माकमपि नश्यति ।
अहं पुनः किंचिदेव मार्गमुद्वीक्षितुं क्षमः ॥ ११४ ॥
तदन्धपङ्क्तिन्यायेन सर्वे मामनुगच्छत ।
अनेन वर्त्मना यामो देवं कमलसंभवम् ॥ ११५ ॥
तत्प्रसादान्निजं ज्ञानं पुनरप्यधिगम्यते ।
निश्चित्येति ततः सर्वे ते सप्तर्षिपुरःसराः ॥ ११६ ॥
अगमन्ब्रह्मणो लोकं मुनयो दीनचेतसः ।
प्रजापतिरपश्यत्तानथ दीनविलोचनान् ॥ ११७ ॥
आसने च परिस्थाप्य पप्रच्छ त्रासकारणम् ।
अथाब्रवीदत्रिमुनिर्मुनिवृत्तान्तमग्रतः ॥ ११८ ॥
यथावस्तु शिवं हेतुं पद्मयोनिर्जगाद च ।
ततोऽब्रुवन्नत्रिमुखास्तेऽपि सर्वे महर्षयः ॥ ११९ ॥
भगवन्सर्वकार्येषु त्वमेवास्माकमीश्वरः ।
इति तेषां वचः श्रुत्वा जगाद जलजासनः ॥ १२० ॥
शरीरनिर्विशेषा मे यूयमित्यवधार्यताम् ।
सर्वेष्वमीषु तत्त्वेषु प्रमाता परमेश्वरः ॥ १२१ ॥
अहं तु पृथिवीमात्रे कृतस्तेनाधिकारवान् ।
तदाज्ञया समग्राणामस्माकं ज्ञायते गतिः ॥ १२२ ॥
न नियन्त्रयितुं शक्यः परेण स पुनः क्वचित् ।
देवः स्वतन्त्रो विश्वात्मा स एव त्वजरामरः ॥ १२३ ॥

अल्पाधिकारे तिष्ठन्ति सर्वे प्रायस्तदाज्ञया ।
इत्युक्ते वेधसा सर्वे मुनयो भयविह्वलाः ॥ १२४ ॥
अरुदन्दीर्घनिःश्वासैः किं कुर्म इति कातराः ।
अथोवाच पुनर्ब्रह्मा पश्यंस्तेषामुपद्रवम् ॥ १२५ ॥
दन्तांशुभिः किरञ्ज्योत्स्नामिव मोहतमोपहाम् ।
असाध्ये भवतां वस्तुन्युपायश्चिन्तितो मया ॥ १२६ ॥
ब्रवीमि वस्तं तेनैव शमयध्वमुपप्लवम् ।
निम(य)म्यते कथं देवः केन वा परमेश्वरः ॥ १२७ ॥
अयमाराधनेनैव प्रसीदति न संशयः ।
अत्युत्कटो हि भगवान्भक्तिभाजां प्रसीदति ॥ १२८ ॥
प्रभुभावे दयालुत्वमिति तस्यैव शोभते ।
तद्गत्वा भगवानेव लिङ्गरूपो महेश्वरः ॥ १२९ ॥
भवद्भिः पूज्यतां नित्यं येन शाम्यन्त्युपद्रवाः ।
सर्वेषां भवतामद्य तिरोधानं दृढं स्थितम् ॥ १३० ॥
आधिक्याद्भगवद्भक्तिरत्रेरंशेन वर्तते ।
इत्युक्ते ब्रह्मणा किंचिन्मोदमाना महर्षयः ॥ १३१ ॥
अभाषन्त तदा सिद्धिमासन्ना मोक्षसादराः ।
उपद्रवं शमयितुं पूजयामो महेश्वरम् ॥ १३२ ॥
तदन्धकारेण विभो कथं दृष्टिः प्रवर्तते ।
इत्युक्ते मुनिभिर्ब्रह्मा भूयोऽप्यकथयत्तदा ॥ १३३ ॥
सर्वोपद्रवशान्तिर्वस्तद्ध्यानेन भवत्विति ।
स्वयंभुवमथापृच्छ्य जग्मुस्ते निजमाश्रमम् ॥ १३४ ॥
तस्मिन्नुज्झितकर्तव्याः पूजयन्ति स्म शंकरम् ।
यथा यथा महादेवं तदा ते समपूजयन् ॥ १३५ ॥
तथा तथा तमिस्राद्याः समशाम्यन्नुपद्रवाः ।
तदाप्रभृति ते सर्वे निबिडां भक्तिमाश्रिताः ॥ १३६ ॥

देवमाराधयामासुस्तीव्रेण तपसा शिवम्।
सामभिर्विविधैर्मन्त्रैः पुष्पमूलफलादिभिः॥ १३७॥
आज्याहुतिभिरप्येते पूजयन्ति स्म शंकरम्।
अनवाप्तमहादेवदर्शनानि महर्षयः॥ १३८॥
शरीराण्यपि निर्मोक्तुमैच्छन्संसारसागरात्।
एवंविधमथोदन्तमवधार्य पितामहः॥ १३९॥
आजगाम समं देवैरिन्द्रोपेन्द्रपुरःसरैः।
दृष्ट्वा ते पद्मजन्मानं प्रणम्य च महर्षयः॥ १४०॥
स्वशरीराहुतीरैच्छन्दातुं ज्वलति पावके।
अभाषत ततो ब्रह्मा मुनयः कोऽयमक्रमः॥ १४१॥
पशुवत्त्यज्यते कायस्तत्सहध्वं गिरा मम।
प्रसीदति स नाद्यापि भगवान्पार्वतीपतिः॥ १४२॥
युष्मच्चिन्तेयमत्यर्थं हृदयं मम बाधते।
अद्यप्रभृति तत्सर्वे तपस्यामो वयं समम्॥ १४३॥
यावन्न चन्द्रमुकुटः प्रसादाय प्रवर्तते।
स्वयंभूः कथयित्वेति मुनीनां दुःखनाशनम्॥ १४४॥
तपस्यति स्म तत्रैव सुरैः शक्रादिभिः सह।
निराहारास्ततश्चक्रुश्चिरकालं शिवैषणाः॥ १४५॥
स्तोत्रैर्विचित्रैर्मन्त्रैश्च पवित्रैस्ते त्रिलोचनम्।
नित्यमाराधयामासुरनुद्विग्नेन चेतसा॥ १४६॥
अथैकदा समाधानं विदधाने चतुर्मुखे।
दिव्यः पुरो व्योमगर्भात्सिंहनादः समुद्ययौ॥ १४७॥
तेनामृतरसेनैव मुदितास्तदनन्तरम्।
मन्दारपुष्पप्रकरानपश्यन्पतितान्भुवि॥ १४८॥
अपूर्वं हृदयाह्लादि तद्गीतं तत्र शुश्रुवे।
नृत्यन्त इव संतोषाददृश्यन्त वनद्रुमाः॥ १४९॥

शारदेन्दुसहस्राणामपि यन्नावलोक्यते ।
अकस्मादुदभूदर्चिस्तत्परं पारमेश्वरम् ॥ १९० ॥
अदृश्यत शनैस्तत्र व्यक्तरूपो महेश्वरः ।
चन्द्रचारुजटाजूटस्तुहिनाचलसंनिभः ॥ १९१ ॥
अभयं पाणिना पुष्णन्हसन्नमृतसुन्दरम् ।
व्यलोक्यते स तत्कालं समग्रैः परमेश्वरः ॥ १९२ ॥
यावत्येवाभवत्पूर्वं गाढा ज्ञानमयी स्थितिः ।
तेषां तद्दर्शनात्तावत्येव ज्ञानमयी तदा ॥ १९३ ॥
ते सर्वे शंकरं दृष्ट्वा ज्ञानव्यक्तिमुपागताः ।
अट्टहासकृतोद्रेकाः सचमत्कारमस्तुवन् ॥ १९४ ॥
महेशपादरजसा स्पृष्ट्वा वक्त्रचतुष्टयीम् ।
कृताञ्जलिरथोवाच प्रणम्य जलजासनः ॥ १९५ ॥
भगवन्भवता सृष्टिस्थितिसंहारकारिणा ।
भक्तिमात्रोपरोधेन स्वयं को नानुगृह्यते ॥ १९६ ॥
अमी तु मुनयो नित्यं भवद्भक्तिपरायणाः ।
देवानुग्रहमिच्छन्ति तदस्माकं कृपां कुरु ॥ १९७ ॥
इत्युक्ते ब्रह्मणा देवो जगाद सुभगं हसन् ।
अदीक्षितानामेतेषां कथं कुर्यामनुग्रहम् ॥ १९८ ॥
इत्थं भगवता प्रोक्ते जगाद चतुराननः ।
प्रभो विमोहयसि किं भूयोऽप्यस्मान्गिरानया ॥ १९९ ॥
प्रकटीभूय कारुण्यादिदानीं परमेश्वर ।
विधत्से भक्तिशैथिल्यं मुनीनामिति नोचितम् ॥ १६० ॥
अनेन वचसा चेतःपरीक्षा विहिता त्वया ।
अदीक्षितत्वमेतेषां न तु स्वप्नेऽपि विद्यते ॥ १६१ ॥
त्वत्स्वरूपमिति ज्ञानमिति दीक्षा महेश्वर ।
त्वयि दृष्टे स्वयं दीक्षां कः प्रतीक्षेत चापराम् ॥ १६२ ॥

प्रसीद तन्महादेव मा महर्षीन्विमोहय ।
कथं दासेषु वैमुख्यं प्रभोर्जातु प्रगल्भते ॥ १६३ ॥
इत्युक्ते ब्रह्मणा देवो गाढभक्तिवशीकृतः ।
मुनीन्विलोकयामास करुणार्द्रेण चक्षुषा ॥ १६४ ॥
तदीक्षणान्महर्षीणां निपपात शिखा स्वयम् ।
निष्कौपीनकवस्त्रं च गात्रं भस्माकुलं बभौ ॥ १६५ ॥
शिवशासनमासाद्य तदाकस्मान्महर्षयः ।
अलभन्त परं ज्योतिः स्वयमेव निरिन्द्रियम् ॥ १६६ ॥
तदासाद्य परं[1] रूपं महादेवविलोकनात् ।
सर्वेऽपि दण्डवद्भूमौ पतन्ति सात्विकल्पिताः ॥ १६७ ॥
ततश्चिरेण चोत्थाय ते समाहितचेतसः ।
विहिताञ्जलयो देवा अवदन्भक्तितत्पराः ॥ १६८ ॥
अनुग्रहीतुं कः शक्तो भगवन्भवता विना ।
त्वद्दर्शनसुखान्नान्यः कोऽपि कुत्राप्यनुग्रहः ॥ १६९ ॥
तदद्य गलदज्ञाना वयं तत्त्वावलोकनात् ।
प्रभवस्यधुना रूपमुपदेष्टुं निजं स्वयम् ॥ १७० ॥
इति श्रुत्वा वचस्तेषां जगाद गिरिजापतिः ।
दन्तांशुराशिभिः कुर्वन्मोहध्वान्ततिरस्कृतिम् ॥ १७१ ॥
मां ये[2] न जानते केचित्पशुसंस्कारमोहिताः ।
ते पाशवेष्टिताः शश्वत्संचरन्ति कलेवरे ॥ १७२ ॥
क्रूरैस्तपोभिर्विविधैर्न तुष्यामि कदाचन ।
भक्त्यैव प्रकटीभूय ददामि सततं फलम् ॥ १७३ ॥
मायावन्तस्तु ये तेषां मद्भक्तिर्न प्ररोहति ।
तस्माद्भक्तिप्रियो नित्यमहं नास्त्यत्र संशयः ॥ १७४ ॥
सा षोडशविधा भक्तिर्विधेया मम साधुभिः ।
शृणु संक्षेपतस्तस्याः स्वरूपाणि प्रकाशये ॥ १७५ ॥

---

१. 'वरं' ख. २. 'ते न' ख.

असाध्यास्तिकता सत्यं तुष्ट्यद्रोहार्जवक्षमाः ।
अहिंसाशौचवैराग्यसमताः सङ्गवर्जनम् ॥ १७६ ॥
संतोषाक्रोधकारुण्यसत्परिग्रहतास्तथा ।
भेदास्तस्याः प्रयत्नेन सेवनीयाः समाहितैः ॥ १७७ ॥
भक्तिमाहात्म्यमित्युक्त्वा भूयोऽपि परमेश्वरः ।
योगज्ञाने महर्षीणामुपादिशदशेषतः ॥ १७८ ॥
अथ ब्रह्मप्रभृतयो देवास्ते च महर्षयः ।
संप्राप्तज्ञानसर्वस्वाः सप्रमोदं बभाषिरे ॥ १७९ ॥
अस्माभिर्विजयः प्राप्तस्त्वत्प्रसादान्महेश्वर ।
एतेनैवावियोगः स्यादिदानीमिह देहिनाम् ॥ १८० ॥
इत्युक्तवत्सु देवेषु स्तुवत्सु च महेश्वरम् ।
ज्योतीरूपं परं धाम तल्लिङ्गात्स व्यलोक्यत ॥ १८१ ॥
सर्वातिशायि तत्तेजः पातालात्प्रभृतिस्थिति ।
जहार केषां नाज्ञानं दर्शनादेव दूरतः ॥ १८२ ॥
विस्मितेषु समस्तेषु वीक्ष्य लिङ्गं तदद्भुतम् ।
अनुग्रहपरां वाणीमुवाच परमेश्वरः ॥ १८३ ॥
अहमेव परं रूपमहमेव परः शिवः ।
अहमेवैष लिङ्गात्मा ज्योतीरूपो व्यवस्थितः ॥ १८४ ॥
विष्णुना सह ते ब्रह्मन्सर्गारम्भे विवादिनः ।
यदुज्जगाम तल्लिङ्गं तदेवैतत्तमोपहम् ॥ १८५ ॥
इदानीं घोरसंसारगतागतविधायिनाम् ।
एतन्मूर्त्यावतीर्णोऽहं नृणामनुजिघृक्षया ॥ १८६ ॥
युष्माभिर्विजयः प्राप्त इत्युक्तं मद्विलोकनात् ।
विजयेश्वरनामैष तत्प्रसिध्यतु सर्वदा ॥ १८७ ॥
एतल्लिङ्गं सदा पूज्यं भक्तिमास्थाय देहिभिः ।
परमां गतिमेतेन प्राप्नुवन्ति न संशयः ॥ १८८ ॥

वाराणस्यां सदा स्थित्या ब्रह्महत्या निवर्तते ।
शरीरिणां निमेषात्तु विजयेश्वरदर्शनात् ॥ १८९ ॥
आगमेषु पुराणेषु शास्त्रेष्वन्यत्र वा पुनः ।
क्षेत्राणि कथितान्येभ्यो विजयं क्षेत्रमुत्तमम् ॥ १९० ॥
एवमत्र महाक्षेत्रे विजयेश्वरनामनि ।
आकर्ण्यतां परिच्छेदं कथयामि यथाविधि ॥ १९१ ॥
पूर्वस्मिन्नुत्तरेणापि वितस्ता पापनाशिनी ।
गम्भीरा पश्चिमे भागे विश्ववत्यपि दक्षिणे ॥ १९२ ॥
ये सदा विजयेशानमर्चयन्ति यथाविधि ।
ते तत्सायुज्यमासाद्य देहान्ते शिवभागिनः ॥ १९३ ॥
मन्त्रादिकमजानन्तस्तीर्थमात्रैकभाविताः ।
देहान्ते क्षेत्रमाहात्म्यात्सामीप्यं प्राप्नुवन्ति च ॥ १९४ ॥
प्राणान्तकाले यः क्षेत्रमिदमाप्नोति मानवः ।
स तत्सायुज्यमासाद्य भजते गतिमुत्तमाम् ॥ १९५ ॥
सुरालये गृहे वापि रथ्यायां यत्र तत्र वा ।
शुद्धेऽप्यशुद्धे वा स्थाने क्षेत्रमाहात्म्यमुत्तमम् ॥ १९६ ॥
अन्येऽपि क्रिमिकीटाद्यास्तिर्यक्पक्षिसरीसृपाः ।
येऽस्मिन्म्रियन्ते तेषां स्यादुत्कृष्टं जन्म देहिनाम् ॥ १९७ ॥
नास्तिकव्रतनिष्ठानां मिथ्याज्ञानविमोहिनाम् ।
रागद्वेषाभिनिष्ठानां दम्भव्रतविधायिनाम् ॥ १९८ ॥
अनाश्रितविवेकानां पापानां क्रूरकर्मणाम् ।
अत्र प्रमथको[1] नाम प्रमथः स्थाप्यते मया ॥ १९९ ॥
तेषां मरणकाले तु ब्रह्मविद्यां पठत्यसौ ।
अव्यक्तरूपास्तेनैव ते प्राप्स्यन्त्युत्तमां गतिम् ॥ २०० ॥
विद्यां कन्यां सुवर्णं गामन्नं दीपं तथा शुभम् ।
छत्रादि चात्र यो दद्यात्स लोकानुत्तमान्व्रजेत् ॥ २०१ ॥

---

१. 'प्रथमको' ख.

वैशाखस्यान्तदिवसे तृतीयायां सिते तथा ।
संक्रान्तावाश्विने मासि ह्यमावस्यादिने शुभे ॥ २०२ ॥
विशेषाद्विषुवत्काले लिङ्गे ध्येयः सदाशिवः ।
चन्द्रायुतसहस्राभैः शोभनः पञ्चभिर्मुखैः ॥ २०३ ॥
सोमसूर्याग्निनयनो दशबाहूपलक्षितः ।
स्फुरच्छीतांशुशकलभास्वज्जूटतटावहः ॥ २०४ ॥
नानारत्नचयाकीर्णः किरीटावलिमण्डितः ।
भक्तानामभयं दातुमुद्यतो वरदः शिवः ॥ २०५ ॥
धनुःशरधरश्चैव मातुलुङ्गावभासितः ।
केयूरनूपुरयुतो मुक्ताहारैः प्रभासितः ॥ २०६ ॥
कर्पूरपूररुचिरः कण्ठच्छायोपशोभितः ।
ताम्बूलप्रेरितमुखः सौन्दर्यस्यैकमास्पदम् ॥ २०७ ॥
दिव्यवस्त्रपरीधानः सिंहचर्मोपशोभितः ।
कृपया भक्तलोकस्य शिक्षार्थमिव सर्वदा ॥ २०८ ॥
जपन्नङ्गुष्ठतर्जन्योरग्रभाजाक्षमालया ।
अनश्वरं सुधाराशिमङ्कैः प्रकटयन्निव ॥ २०९ ॥
अमुत्र लिङ्गे सततं पूज्यो ध्येयश्च भावितैः ।
निष्कलेनापि रूपेण भक्तानामस्मि मोचकः ॥ २१० ॥
भक्ष्यैर्भोज्यैश्च विविधैर्लेह्यैः पेयैश्च निर्मलैः ।
नैवेद्यैः पूजनीयोऽहं पुष्पधूपादिभिर्वरैः ॥ २११ ॥
तदत्र सर्वदा कार्या भक्तिः सर्वार्थदायिनी ।
वितस्तायाममुत्रास्ते तीर्थं विजयसंज्ञकम् ॥ २१२ ॥
दशहस्तपरिच्छिन्नं विजयेशस्य चाग्रतः ।
सदाशिवपुरादेतदवतीर्णं सुपावनम् ॥ २१३ ॥
अस्मिन्सुवर्णकमले दृश्यते भक्तिशालिभिः ।
स्वर्णमीनाकृतिधरास्तिष्ठन्त्यत्र गणाः सदा ॥ २१४ ॥

अत्र स्नात्वा पूजनीयो भक्तानां विजयेश्वरः।
यत्पापमन्यस्थानेषु क्रियते यत्रकुत्रचित् ॥ २१५ ॥
निवर्तते तन्निःशेषं विजयेश्वरदर्शनात्।
जन्मन्यमुष्मिन्नथवा प्राक्तनं पातकं कृतम् ॥ २१६ ॥
क्षयं यात्यस्य देहस्य दर्शनात्स्पर्शनादपि।
ये श्रीमद्विजयेशानमर्चयन्ति यथाविधि ॥ २१७ ॥
रुद्रलोकावतीर्णास्ते रुद्रा एव महीतले।
ये लुब्धमनसो विघ्नमोहिता नार्चयन्त्यमुम् ॥ २१८ ॥
ते घोरं नरकं यान्ति साहंकारा नराधमाः।
अत्र क्षेत्रवरे लोभात्कुकृत्यं विदधाति यः ॥ २१९ ॥
भोगं विना न तस्य स्यात्कर्मणः संशयः क्वचित्।
धनधान्यसुवर्णानि यो हरत्यत्र लोभतः ॥ २२० ॥
स महारौरवे वर्षलक्षमास्ते नराधमः।
नरकेषु चिरं स्थित्वा कृकिलासः प्रजायते ॥ २२१ ॥
शिवदीक्षामवाप्यापि योऽन्यदर्शनपूजकः।
उभयभ्रष्टतां प्राप्य स कुत्रापि न पूज्यते ॥ २२२ ॥
शिवप्रतिष्ठां कृत्वा यो निर्विवेको विमोहितः।
अन्यान्पूजयते तस्य नरके शाश्वती स्थितिः ॥ २२३ ॥
असत्यवादी क्षेत्रेऽस्मिन्नपकर्ता परस्य च।
परापवादी गुर्वादिनिन्दकः शल्मलौ वसेत् ॥ २२४ ॥
अथात्र देवस्वाद्वापि श्वेतिकामपि यो हरेत्।
स स्थित्वा नरके घोरे कान्तारे पन्नगो भवेत् ॥ २२५ ॥
पुष्पं फलं तृणं वापि देवदेवस्य कल्पितम्।
यो हरत्यत्र लोभेन स रौरवमवाप्नुयात् ॥ २२६ ॥
परित्यज्य निजां पत्नीं परदारान्हरन्ति ये।
पतित्वा लोहशङ्कौ ते जायन्ते शलभा वने ॥ २२७ ॥

अत्र पापानि कुरुते यो घोराणि विशेषतः ।
स महारौरवे तिष्ठेत्कल्पानामर्बुदं सदा ॥ २२८ ॥
सूक्ष्माण्यप्यत्र पापानि यो निदध्यान्नराधमः ।
नरकेषु चिरं स्थित्वा कृकिलासः प्रजायते ॥ २२९ ॥
एवं क्षेत्रवरस्यास्य प्रभावः केन वर्ण्यते ।
अहमेव विजानामि तत्सेव्योऽयं मदर्थिभिः ॥ २३० ॥
अस्मिन्नाश्वयुजे मासे चतुर्दश्यां सितेतरे ।
पक्षे सर्वात्मना पूज्यो भुक्तिमुक्तिफलप्रदः ॥ २३१ ॥
इति कृत्वा महादेवो महर्षीणामनुग्रहम् ।
कृपानिधिस्तत्र ततः क्षणमात्रात्तिरोदधे ॥ २३२ ॥
अदृश्यत्वमथ प्राप्ते महादेवे महर्षयः ।
परं प्रमोदमभजन्नज्ञानविनिवर्तनात् ॥ २३३ ॥
विष्णुः श्रीविजयेशानमपूजयदथादरात् ।
ततो ब्रह्मा सुरौघश्च महर्षिनिवहस्तथा ॥ २३४ ॥
एवमत्र महाक्षेत्रे ततः प्रभृति सर्वदा ।
जज्वाल तत्परं ज्योतिर्जन्ममृत्युजरापहम् ॥ २३५ ॥
येन जन्मसहस्रं तु विदधे दुष्करं तपः ।
अत्र क्षेत्रे स लभते मृत्युं भूयो न जायते ॥ २३६ ॥
अत एवेह सर्वत्र तिष्ठन्त्येवोत्तमोत्तमाः ।
देहान्तेऽप्यपरिच्छिन्ना भवन्ति ज्ञानभागिनः ॥ २३७ ॥
अस्मिन्नेव महाक्षेत्रे श्रीवर्षाख्योऽवसद्गुरुः ।
ममापि यः करुणया दीक्षासंस्कारमादधे ॥ २३८ ॥
तदत्र परमेशानो देवो जागर्ति सर्वदा ।
यमालोक्य स संसारो हेलयैव विजीयते ॥ २३९ ॥
अत्रैव भगवत्क्षेत्रे सेवार्थं परमेशितुः ।
तीर्थानि संनिदधते परानुग्रहणेच्छया ॥ २४० ॥

तथाहि चन्द्रतीर्थेण स्थितमत्र महात्मना ।
तदम्बु स्पृशतामस्ति राजसूयादिकं फलम् ॥ २४१ ॥
त्रिःसप्तकृत्वा क्षत्राणि निहत्य प्राप्तकिल्बिषः ।
जामदग्न्योऽपि यत्स्नानान्प्राप्तवान्गतिमुत्तमाम् ॥ २४२ ॥
वृत्रं छलेन हत्वेन्द्रो लब्धवान्दुर्गतिं घनाम् ।
अत्र स्नात्वा निजां लक्ष्मीं लेभे सुरवरार्चिताम् ॥ २४३ ॥
तदत्र तीर्थं प्रथमं हयपूर्वं कृतस्थिति ।
गोसहस्रप्रदानस्य फलं यत्स्पर्शतो भवेत् ॥ २४४ ॥
अत्र पञ्चतपो नाम तीर्थमस्ति मुनीन्प्रति ।
प्रकटीकृतमीशेन भूरिपापक्षयावहम् ॥ २४५ ॥
पादोदकप्लवं नाम तीर्थमत्रैव तिष्ठति ।
यदम्बु स्पृशतो जन्तोरग्निष्टोमफलं लभेत् ॥ २४६ ॥
कुलोद्धरणिकाख्या तु स्थिता सह वितस्तया ।
अत्र स्नात्वा जनैर्लभ्यमश्वमेधक्रतोः फलम् ॥ २४७ ॥
तत्र सुश्रवनागेन स्थीयते पावनात्मना ।
हारीतस्वामिनामात्र रविर्नित्यं व्यवस्थितः ॥ २४८ ॥
अत्रैव हि वितस्ताया एकदेशे शुभावहम् ।
कपालमोचनं नाम तीर्थं सिद्धनिषेवितम् ॥ २४९ ॥
माघकृष्णचतुर्दश्यां दयालुर्विजितेन्द्रियः ।
अत्र स्नानेन लभते महासत्त्राजितं फलम् ॥ २५० ॥
खण्डपुच्छस्य नागस्य भवनं चात्र विद्यते ।
यत्र चान्द्रायणशतं स्नानात्प्राप्नोति मानवः ॥ २५१ ॥
मडवावर्तनागोऽत्र वितस्तामध्यमाश्रितः ।
स्नानेन मोचयत्येव पातकाद्बहलान्नरान् ॥ २५२ ॥
अत्रैव पश्चाद्भागेऽस्ति क्रोशमात्रे शुभावहम् ।
अनन्तभवनं सिद्धैरमरैः सुनिषेवितम् ॥ २५३ ॥

स्नानं भाद्रपदे मासे प्रथमे दिवसेऽत्र यः ।
स जन्तुः फलमाप्नोति क्रतोर्द्वादशवार्षिकात् ॥ २५४ ॥
पापसूदनमित्यस्ति तीर्थमत्रातिपावनम् ।
यथार्थनामा यत्स्नानाज्जायते कापि निर्वृतिः ॥ २५५ ॥
अनन्तकार्कोटकयोर्ह्रदयोः पार्श्ववर्तिनी ।
अचलात्र सरित्तिष्ठेदश्वमेधफलावहा ॥ २५६ ॥
उपमन्युमुनेर्यत्र तपोधाम मनोरमम् ।
यत्र सोमाख्यया तीर्थं वन्न(प्रपन्न)र्षिगणावृतम् ॥ २५७ ॥
महादेवो यत्र तिष्ठत्युपमन्युप्रतिष्ठितः ।
अमावस्या ससोमा च संनिधानाय कल्पते ॥ २५८ ॥
सोमतीर्थस्यास्ति पश्चात्सोमतीर्थं यदम्भसा ।
सप्तम्यां भानवीयेऽह्नि पुण्यक्षेत्रे शुभं नृणाम् ॥ २५९ ॥
निकटे तस्य पीतं च वह्नितीर्थं सदा स्थितम् ।
यत्र स्नात्वा श्रद्दधानैरुत्कृष्टं प्राप्यते फलम् ॥ २६० ॥
अष्टाशीतिसहस्राणि गृहस्थाश्रमसेविनाम् ।
मुनीनामखिलान्धर्मान्संप्रवर्तयितुं भुवि ॥ २६१ ॥
अफलाकाङ्क्षिणां नित्यं ध्यायिनां परमं पदम् ।
आसीदत्रैव तुष्टस्य प्रसादात्परमेशितुः ॥ २६२ ॥
मुक्तिं क्रमेण च प्रापुर्भुक्तिसंस्थं ततः स्मृतम् ।
भगवन्भुवनत्राणसमर्थो भोगमोक्षदः ॥ २६३ ॥
लिङ्गाकृतिर्भरद्वाजमुनीन्द्रेण प्रतिष्ठितः ।
ज्येष्ठकृष्णचतुर्दश्यामचिरात्सर्वसिद्धिदः ॥ २६४ ॥
यत्र प्रचेता विदधे सत्रं द्वादशवार्षिकम् ।
तत्स्थानमत्र सत्राख्यव्याख्ययैव प्रसिध्यति ॥ २६५ ॥
श्रेष्ठा गङ्गेव सरसां शचीव मृगचक्षुषाम् ।
शब्दविद्येव विद्यानां पुण्यारण्यं भुवामसौ ॥ २६६ ॥

नानया स्पर्धते जातु कुरुक्षेत्रादि किंचन ।
अत्र स्वयं महादेवो देव्या सह दिवानिशम् ॥ २६७ ॥
क्रीडति स्वेच्छया तस्मान्नान्यत्र स्थानमीदृशम् ।
श्रीमद्विजयमाहात्म्यं य इमं पठति स्वयम् ॥ २६८ ॥
व्याख्यापयेद्वा स कृती प्राक्कर्मभ्यो विमुच्यते ।
रागो द्वेषस्तथा लोभो मोहः क्रोधाभिधस्तथा ॥ २६९ ॥
आलस्यं ममता दम्भश्चेति विघ्नाष्टकं स्मृतम् ।
तेनैतत्क्षेत्रमतुलं परिवारयुतेन तु ॥ २७० ॥
व्याप्तं न बाधते जन्तुं शिवभक्तिपरायणम् ।
येषां तु शाङ्करी भक्तिः सच्छास्त्रनिरतात्मनाम् ॥ २७१ ॥
सद्गुरूपासकानां च तेषां विघ्नभयं कुतः ।
ये सदाशिवसिद्धान्तभावनाः शुचिबुद्धयः ॥ २७२ ॥
योगाभ्यासप्रसक्ताश्च तेषां विघ्नभयं कुतः ।
नास्तिका दाम्भिकाः क्षुद्राः शिश्नोदरपरायणाः ॥ २७३ ॥
वञ्चकाः कुचरित्राश्च ते विघ्नैः परिपीडिताः ।
तस्माद्विघ्नान्विनिश्चित्य प्रार्थनीयो महेश्वरः ॥ २७४ ॥

इदमचलसुतापतेश्चरित्रं सपदि विलोक्य समग्रमत्र सन्तः ।
विदधतु दृढभक्तिवासनाभिर्घनतरघोर[भवोत्थ]तापशान्त्यै[1] ॥ २७५ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरिताचिन्तामणौ विजयेश्वरावतारो नाम दशमः प्रकाशः ॥ १० ॥

---

एकादशः प्रकाशः ।

ॐ नमः शिवाय ।

सोऽयं बोधहुताशनो विमलितानल्पस्वतेजोभरो
विच्छायत्वमुपैति मे शिव तवानुग्राहकस्याग्रतः ।
स्वं लिङ्गं तदुदञ्चयस्व भगवन्पूर्णाद्वयात्म स्वयं
येनायास्यति नाथ कारणगणावश्योपजीव्यां दशाम् ॥ १ ॥

---

१. 'शान्तिम्' ख.

जगद्दाहकमप्यग्नेस्तेजो म्लायति जातुचित् ।
अम्लानं पुनरेकस्य शंभोर्विश्वोपकारिणः ॥ २ ॥
कदाचिद्भृगुणा शप्तः परिक्षीणास्त्रसौष्ठवः ।
वह्निराराधयामास तपसा परमेश्वरम् ॥ ३ ॥
कृतस्नानो निराहारोऽनुध्यायन्मनसा शिवम् ।
संवत्सरसहस्रं स चकार विषमं तपः ॥ ४ ॥
अथ तत्तपसा तेन चिरकालप्रवर्तिना ।
त्रैलोक्यं दग्धुमारब्धं कल्पान्तभयदायिना ॥ ५ ॥
ब्रह्मविष्णुप्रभृतयो वीक्ष्य तस्योत्कटं तपः ।
त्रैलोक्यदाहसंत्रासाद्ध्यायति स्म महेश्वरम् ॥ ६ ॥
अस्मिन्नवसरे देवस्तं ज्ञात्वा स्थिरनिश्चयम् ।
पातालगर्भादुद्भूतं ज्वालामालाविभूषितम् ॥ ७ ॥
पिङ्गाख्यं पिङ्गकेशं च पिङ्गलं वीक्ष्य तं प्रभुम् ।
अथाप्तः परमां प्रीतिं प्रणनाम विभावसुः ॥ ८ ॥
अतो जगाद भगवान्करुणारसनिर्भरः ।
तव पावक तुष्टोऽहमभीष्टं प्रार्थ्यतामिति ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा प्रमोदान्वितमानसः ।
अब्रवीत्पावको भूमिं सुचिरं शिरसा स्पृशन् ॥ १० ॥
इयतां जगतामेकस्त्वं कारणमुमापतिः ।
त्वत्पादधूलिसंपर्काद्ब्रह्माद्याः प्रभवन्ति च ॥ ११ ॥
महादेव नमस्तेऽस्तु पञ्चकृत्यविधायिने ।
मुनिशापान्मया प्राप्तो नाथ तेजःपरिक्षयः ।
आराधयामि विधिना त्वामेव परमेश्वरम् ॥ १२ ॥
इत्युक्ते वह्निना देवो जगाद मधुरं वचः ।
दन्तांशुवीचिभिः शापकालुष्यं शमयन्निव ॥ १३ ॥
सर्वभक्षो भवेति त्वामशपद्यन्महामुनिः ।
तच्छापं विरमत्वद्य मामाश्रितवतस्तव ॥ १४ ॥

समग्रलोकपूज्यस्त्वं मद्वाक्याद्भव पावक ।
हुताशनत्वमाप्नोषि परां शुद्धिमुपागतः ॥ १५ ॥
अध्वरेषु भवद्वक्त्रे मन्त्रपूतं यदिज्यते ।
तद्ग्रहीष्यन्ति सर्वेऽपि देवाः पीयूषवत्सदा ॥ १६ ॥
श्रुतिस्मृत्युदितं यद्वा द्विजैः कर्म विधीयते ।
तत्सर्वं पूर्णतामेति न जातु भवता विना ॥ १७ ॥
एवं तीर्थं मया वह्ने त्वदर्थमवतारितम् ।
वितस्तायाः प्रदेशेऽस्मिन्नशेषदुरितापहम् ॥ १८ ॥
लभस्व संप्रति निजं तेजः प्राच्यातिशायि च ।
वरं कमन्यं दास्यामि वद वह्ने विशेषतः ॥ १९ ॥
इति देवस्य वचनं श्रुत्वा तेजोमयोऽभवत् ।
विरचय्याञ्जलिं मौलावभाषत हुताशनः ॥ २० ॥
नाथेनानुगृहीतोऽहं तपः फलितमद्य मे ।
तदिदानीं भवत्येव भक्तिमिच्छामि शाश्वतीम् ॥ २१ ॥
इह पिङ्गलरूपस्त्वमवतीर्णो महेश्वर ।
संनिधत्स्व तदत्रैव सर्वलोकानुकम्पया ॥ २२ ॥
त्वयैव देव कारुण्याद्यत्तीर्थमवतारितम् ।
नित्यं संनिहितं लोके मन्नाम्नैव प्रसिध्यतु ॥ २३ ॥
इति वह्नेर्वचस्तस्य प्रतिपद्य महेश्वरः ।
संनिधत्ते स सततं पूजयामास चानलः ॥ २४ ॥
अस्मिन्नवसरे देवाः पुरंदरपुरःसराः ।
अपूजयन्त तं गाढभक्तयः परमेश्वरम् ॥ २५ ॥
स्नात्वा पावकतीर्थे ते पूजयित्वा च तं प्रभुम् ।
अभ्यभाषन्त संतुष्टाः शिवभक्तं हुताशनम् ॥ २६ ॥
जगत्पवित्रितं वह्ने शिवभक्तिमता त्वया ।
येनावतारितं तीर्थं तोषितश्च महेश्वरः ॥ २७ ॥

स्नात्वा पावकतीर्थेऽस्मिन्यैः स्पृष्टः पिङ्गलेश्वरः ।
राजसूयस्य यज्ञस्य लभन्ते मानवाः फलम् ॥ २८ ॥
अत्र कृष्णचतुर्दश्यां नभस्ये मासि ये नराः ।
तीर्थे स्नात्वार्चयन्तीशं ते मृताः शिवभागिनः ॥ २९ ॥
त्रैलोक्ये यानि तीर्थानि निवसन्ति सहस्रशः ।
तान्यत्र संनिदधते दिनेऽस्मिन्निति निश्चयः ॥ ३० ॥
पितॄणामत्र यः श्राद्धं विध[त्ते[1] श्रद्धयान्वितः] ।
तस्य ते तृप्तिमासाद्य परितुष्यन्ति सर्वदा ॥ ३१ ॥
अत्र यः सर्वदा स्नात्वा पूजयेत्पिङ्गलेश्वरम् ।
स दुष्कर्माणि संत्यज्य लभते गतिमुत्तमाम् ॥ ३२ ॥
इत्युक्त्वा निर्जराः सर्वे नन्दन्तो वह्निना सह ।
अगमन्स्वपुराण्येव वन्दित्वा पिङ्गलेश्वरम् ॥ ३३ ॥
तस्मात्कालात्प्रभृत्येप स्वयमेव महेश्वरः ।
पिङ्गलेश्वररूपेण भक्तान्मोचयितुं स्थितः ॥ ३४ ॥
त्रिभुवनमनुगृह्णतो महेशा-
त्कथयत कोऽस्ति कृपापरः परोऽस्मिन् ।
सुबहुभिरवतीर्य विग्रहैर्यो
दलयति भक्तिमतां विमोहनिद्राम् ॥ ३५ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ पिङ्गलेश्वरावतारवर्णनामैकादशः प्रकाशः ॥

## द्वादशः प्रकाशः ।

ॐ नमः शिवाय ।

त्वामाश्रित्य मुनिर्महेश्वर चिरं यामर्थयत्यादरा-
द्व्यक्ताव्यक्ततया प्रकाशितवतो या स्वेच्छयावस्थितिम् ।

---

1. अयं पाठः ख-पुस्तके त्रुटितः.

कुर्वाणा मलहानिमद्वयरसस्यन्दिन्यसौ सर्वदा
　शक्तिस्ते स्वयमेव संविदसमां शुद्धिं विधत्तां मम ॥ १ ॥

यो यमर्थयते तस्य तद्दत्ते कल्पपादपः ।
एवं वरयति त्वीशे बहवः पूर्णवाञ्छिताः ॥ २ ॥

सतीदेशस्थिताञ्जन्तूनुद्धर्तुं जातु कश्यपः ।
आराधयामास चिरं महादेवं समाधिना ॥ ३ ॥

प्रसन्ने च महादेवे याचते स्म महामुनिः ।
अस्मिन्देशे नदी काचित्पवित्रोत्पाद्यतामिति ॥ ४ ॥

अङ्गीकृत्य वरं तस्य जगाद गिरिजां हरः ।
नदीरूपा सती देशं पुनीहि रभसादिति ॥ ५ ॥

सा शंभोर्वचसा कृत्वा नदीरूपं रसातले ।
न च तत्याज तद्देहं क्रमश्चित्रोऽयमैश्वरः ॥ ६ ॥

नदीरूपा चिरमसावभूत्पातालवर्तिनी ।
दैत्यानुद्धरता भूमिं मुच्यते स्म च विष्णुना ॥ ७ ॥

वितस्तिपरिमाणां तां दृष्ट्वा तत्र जनार्दनः ।
पापक्षयावहां देवीं जगाद विनयान्वितः ॥ ८ ॥

वितस्तिरूपा त्वं देवी वितस्तेति शुभावहा ।
समग्रदेवगन्धर्वसिद्धदानवपूजिता ॥ ९ ॥

तदेहि देवि भूलोकं पवित्रय चराचरम् ।
त्वत्स्पर्शान्मादृशस्यापि संपन्ना कृतकृत्यता ॥ १० ॥

इत्थं स्तुतापि न यदा सा जगाम रसातलात् ।
तदा विष्णुर्महेशस्य तद्वृत्तान्तं न्यवेदयत् ॥ ११ ॥

अस्मिन्नवसरे सोऽपि कश्यपो विदधे तपः ।
महादेव पवित्रा मे नदी निर्मीयतामिति ॥ १२ ॥

तपस्यन्तं मुनिं वीक्ष्य तदानीं परमेश्वरः ।
निशितेन त्रिशूलेन गिरेः शृङ्गं व्यदारयत् ॥ १३ ॥

सुरगन्धर्वमुक्तेषु प्रसवेषु नभस्तलात् ।
निपतत्स्वसकृद्भूमौ कम्पितायां च सर्वतः ॥ १४ ॥
सा तद्बिलपथेनाथ निर्जगामोत्तमा नदी ।
अम्भःकणैर्विभिन्दन्ती पापसंघं शरीरिणाम् ॥ १५ ॥
अनुजग्राह सा तत्र नीलाख्यं भुजगेश्वरम् ।
यत्र स्नात्वा भवेज्जन्तुर्हतनिःशेषपातकः ॥ १६ ॥
नीलकण्ठं वितस्ताख्यं शूलघातमिति त्रिभिः ।
अभिधानं प्रसिद्धं तदद्यापि बिलमुत्तमम् ॥ १७ ॥
परिशुद्धप्रभावोऽपि तत्रैवाद्यापि दृश्यते ।
यदशुद्धा उत्प्लवन्ते मज्जन्ति शुचयस्तथा ॥ १८ ॥
अथ तां पार्वतीं देवीं नदीत्वेन व्यवस्थिताम् ।
आसाद्य कश्यपमुनिस्तपः कृत्वा न्यवर्तत ॥ १९ ॥
पापिनोऽपि नराः सर्वे ययुस्तामभितो नदीम् ।
सा तान्वीक्ष्य वहन्ती च योजनार्धात्तिरोदधे ॥ २० ॥
रसातलप्रविष्टां च तां पश्यन्नथ कश्यपः ।
चिरमाराधयांचक्रे तपोभिः शिवभावितः ॥ २१ ॥
महर्षेस्तपसा तेन तदानीं परितुष्टया ।
पञ्चहस्तस्य भवनात्समुत्तस्थे वितस्तया ॥ २२ ॥
अत्र दुर्वारसंसारपञ्च(ङ्क)प्रक्षालनेच्छया ।
असेवत व्यासमुनिर्वितस्तां तपसा चिरात् ॥ २३ ॥
गोसहस्रप्रदानेन यत्फलं लभते नरः ।
आप्नोति तत्कोटिगुणं तत्र स्नानेन भावितः ॥ २४ ॥
ततो विनिर्गता क्रूरान्स्नातुकामान्विलोक्य सा ।
पुनरप्यगमद्देवी नदीमूर्तिरदृश्यताम् ॥ २५ ॥
आराध्यमाना भूयोऽपि कश्यपेन महात्मना ।
क्रोशमात्राद्विसुस्राव यत्र देशः स विस्रवः ॥ २६ ॥

वाजि(ज)पेयसहस्रस्य यत्फलं परिकीर्तितम् ।
तदेव तत्र स्नानेन लभते भावितो नरः ।
शरीरान्ते च लभते वैष्णवं पदमुत्तमम् ॥ २७ ॥
नरसिंहाश्रमाद्देशान्निर्गच्छन्ती शुभावहा ।
ब्रह्मघ्नैर्दारुणैर्दृष्टा भूयोऽप्यन्तरधीयत ॥ २८ ॥
तां विलोक्य नदीं तत्र प्रविशन्तीं रसातलम् ।
विषण्णः कश्यपमुनिः साभ्यर्थनमभाषत ॥ २९ ॥
नमो नमस्ते मातस्ते त्वां नौमि हिमवत्सुताम् ।
विधेहि करुणां देवि रुद्रसंपर्कपावने ॥ ३० ॥
यैर्यैरम्बु तव स्पृष्टं वितस्ते भावितात्मभिः ।
प्राप्नुवन्त्यचिरादेव सर्वाभिलषितानि ते ॥ ३१ ॥
पापिनामुपकाराय मया त्वमवतारिता ।
भूयो भूयोऽपि तन्मातर्विमुखी वर्तसे कथम् ॥ ३२ ॥
शक्तिस्त्रैतमलं छलात्कलयता ज्ञानत्रिशूलेन या
　　मूर्धं प्रापितवान्हठेन भगवानाकृष्य पातालतः ।
व्यक्ताव्यक्ततया प्रकाशितवती स्वातन्त्र्यलीलायितं
　　पूर्णानुग्रहसंपदे भवतु सा देवी वितस्ता मम ॥ ३३ ॥
इति तेन स्तुता देवी तदानीं सहसोद्यया ।
हरन्ती दर्शनेनापि दुरितानि शरीरिणाम् ॥ ३४ ॥
लक्ष्मीमपि ततो विष्णुर्नदीत्वेन व्यसर्जयत् ।
सा विशोका च संपन्ना वितस्तास्पर्शमात्रतः ॥ ३५ ॥
त्रिकीटा सा दितिस्तत्र चतुर्वेदीति सापगा ।
अन्वगात्पार्वतीं देवीं वितस्तारूपमाश्रिताम् ॥ ३६ ॥
राजसूयफलं तत्र स्नात्वा प्राप्नोति मानवः ।
एकत्रास्ति वितस्तायां तीर्थं पादप्लवाभिधम् ॥ ३७ ॥
पुण्यं श्रीविजयक्षेत्रे सर्वकिल्बिषनाशनम् ।
एकदेशे च तत्रैव खड्गं क्षालितवान्हरः ॥ ३८ ॥

अनेकराक्षसक्षोदप्रसरद्रुधिरारुणम्।
शब्देनैव महामोहं लुनीते भावितात्मनाम्॥ ३९॥
सिन्धुसंबन्धिनी यत्र वितस्ता वर्तते नदी।
नभस्यपूर्णिमाकाले तत्र तीर्थानि कोटिशः॥ ४०॥
तीर्थानां कोटयः षष्टिर्देव्यश्च ब्रह्मणा सह।
तत्रात्मानं पावयन्ति स्नात्वास्मिन्दिवसे सदा॥ ४१॥
एवमस्मिन्दिने पूज्या वितस्ता भावितात्मभिः।
स्यादाश्वयुजमासस्य प्रथमेऽह्नयप्ययं क्रमः॥ ४२॥
वराहक्षेत्रमासाद्य सा धुनीते शरीरिणः।
यस्तत्र स्नाति देहान्ते स विष्णुर्नात्र संशयः॥ ४३॥
कृष्णया संगतिं कृत्वा नदी भुवनपावनी।
मध्यदेशे चन्द्रभागा पवित्रयति वारिभिः॥ ४४॥
भोगप्रस्थमतिक्रम्य जाह्नवी सहवाहिनी।
बृहत्सिन्ध्वाख्यया लोकान्पवित्रयति सादरात्॥ ४५॥
विनिर्गता सिन्धुदेशाद्वितस्तेति प्रकीर्तिता।
प्रविष्टा जलधिं देवी रुद्रस्य दयिता नदी॥ ४६॥
नभस्यशुक्लपक्षे सा त्रयोदश्यां विनिर्ययौ।
अवतारदिने तस्मात्पूजनीया शुभावहः॥ ४७॥
अत्र तिष्ठन्ति तीर्थानि द्वादशाङ्गुलमात्रतः।
तस्माद्वितस्ता पूज्येयं निःशेषदुरितापहा॥ ४८॥
उत्तरां दिशमाश्रित्य गतेत्युत्तरजाह्नवी।
सा यत्र पूर्वाभिमुखी तत्र स्नातव्यमादरात्॥ ४९॥
प्राणप्रयाणकाले यैर्वैतस्तं पीयते पयः।
ते शक्रलोकमासाद्य भोगानासादयन्त्यलम्॥ ५०॥
यज्ञैर्न दक्षिणावद्भिस्तृप्यन्ति पितरस्तथा।
यथा वैतस्तसलिलप्रदानेन शुभात्मनाम्॥ ५१॥

वितस्ताशीकरार्द्रेण स्पृश्यते पवनेन यः ।
न कदाचित्स लभते यातना संगतिव्यथाम् ॥ ९२ ॥
नित्यमेव पवित्रेयं नदी यद्यपि कीर्तिता ।
शुक्लपक्षत्रयोदश्यां प्रतिमासं पुनर्भृशम् ॥ ९३ ॥
पापं दशसु मासेषु यद्यत्प्रकुरुते नरः ।
माघफाल्गुण(न)योः स्नानात्तत्तन्नाशयते हठात् ॥ ९४ ॥
मुनिना कश्यपेनेत्थं देवीयमवतारिता ।
करोति स्पर्शमात्रेण वितस्तानुग्रहं नृणाम् ॥ ९५ ॥

निखिलजगदनुग्रहाय शंभोः
　प्रसरति शक्तिरनश्वरस्वरूपा ।
इति सपदि चिरं विचारयन्तो
　विततधियो न ततः परं स्तुवन्ति ॥ ९६ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरिताचिन्तामणौ वितस्तावतारो नाम द्वादशः प्रकाशः ॥

---

त्रयोदशः प्रकाशः ।

ॐ नमो भैरवाय ।

एतद्वेदकवेद्यवेदनमयं दग्ध्वा पुराणां त्रयं
　पूर्णाद्वैतहुताशनेन शमयन्मायामयोपद्रवम् ।
ज्वालालिङ्गतया स्फुरज्जगदनुग्राही स्वयंभूरसौ
　देवः संप्रति भासतां मम परामुल्लासयन्निर्वृतिम् ॥ १ ॥
यः सेवते महादेवं तस्य सिद्धिः कराग्रगा ।
तदवज्ञापराणां च विपत्तिः पुरतः स्थिता ॥ २ ॥
अभूवन्नद्भुतारम्भास्त्रयः पूर्वं निशाचराः ।
विद्युन्माली तारकाख्यः कमलाख्यश्च दुर्जयाः ॥ ३ ॥
ते त्रयोऽपि त्रिजगतीं विजेतुं व्यवसायिनः ।
बहूनि युगलक्षाणि तपस्तीव्रं वितेनिरे ॥ ४ ॥

यथायथं तपो घोरं तेषु कुर्वत्सु संभ्रमात्।
आविर्भूय चतुर्वक्त्रः प्रसन्न इदमब्रवीत्॥ ५॥
अहं प्रसन्नो युष्माकं वरं प्रार्थे(संप्रार्थ्य)तां चिरम्।
निवर्ततां तपश्चर्यासिद्धिं वः साधयाम्यहम्॥ ६॥
इति तस्य वचः श्रुत्वा प्रसादं समुपेयुषः।
वरमभ्यर्थयामासुर्दानवाः स्थिरनिश्चयाः॥ ७॥
अशेषभुवनेशत्वं देहि नो जलजासन।
अजेया अमराश्चापि भूयास्म भवदाज्ञया॥ ८॥
इत्थमभ्यर्थयत्स्वेषु विश्वोपद्रवकाम्यया।
सान्त्वयन्मधुरैर्वाक्यैरुवाच कमलासनः॥ ९॥
एवंविधं वरं दातुं कः शक्नोति महासुराः।
जन्ममृत्युमयः कायो नामरत्वाय कल्पते॥ १०॥
गृह्णीत कारणं तस्मान्मरणं प्रति दानवाः।
भुवनाधिपतित्वं तु दातुं सामर्थ्यमस्ति मे॥ ११॥
इत्युक्ते ब्रह्मणा तेऽपि संमन्त्र्य कविना सह।
दानवाः प्रार्थयन्ते स्म तीव्रस्य तपसः फलम्॥ १२॥
पुराणि कामरूपाणि कामचारीणि देहि नः।
नानारूपविचित्राणि त्रीणि लोकेषु च त्रिषु॥ १३॥
दिव्यवर्षसहस्रेण मिलित्वैतत्पुरत्रयम्।
निमेषमात्रं पुरतः पृथग्वृत्ति करोतु च॥ १४॥
एतस्मिन्नेव समये यदैकेन शरेण च।
वेध्यामहे तदा लोको यदि तिष्ठेद्विशङ्करः॥ १५॥
उदेतु मृत्युरस्माकं बलात्पङ्केरुहासन।
अन्यथा विभवः प्रज्ञा बलमायुः प्रवर्धताम्॥ १६॥
इत्थं मनोरथं तेषां विरिञ्चिः प्रत्यपद्यत।
किं किं न तपसा साध्यं दृढनिश्चयचेतसा॥ १७॥

अथ प्राप्तवरान्वीक्ष्य शुक्रस्तान्समभाषत ।
किं किं न सिद्धं भवतामधुना कथयामि तत् ॥ १८ ॥
कृतं तपस्तीव्रतरं संपदासादिताप्यसौ ।
तामेव तु द्रढयितुं श्रूयतां वचनं मम ॥ १९ ॥
अमी ब्रह्मादयो लोके यन्नियत्यवलम्बिनः ।
स एव शंकरो देवः शरणं परिकल्प्यताम् ॥ २० ॥
तपसा विद्यया दानमहिम्ना स च नाप्यते ।
भक्तिमात्रेण लभ्यस्तु महाकारुणिकः शिवः ॥ २१ ॥
तत्सर्वदा पूजयध्वं शिवलिङ्गानि भाविताः ।
अन्यथा नाशमाप्नोति संपदित्यवधार्यताम् ॥ २२ ॥
अहो लिङ्गस्य माहात्म्यं यदभ्यर्च्य पितामहः ।
समस्ते पृथिवीतत्त्वे पतिभावमवाप्तवान् ॥ २३ ॥
पूजयित्वा महादेवलिङ्गं सततमच्युतः ।
अयं प्रभवति स्थित्यै लक्ष्मीं च लभते स्थिराम् ॥ २४ ॥
सामान्यदेहिनो लिङ्गं ध्यायन्तः पारमेश्वरम् ।
इन्द्राद्या लोकपालत्वं प्राप्य हृष्यन्ति सर्वतः ॥ २५ ॥
किमन्यदुच्यते तस्मान्न स्याल्लिङ्गार्चनाद्गतिः ।
अलभ्योऽपि महादेवस्तावता करगोचरे ॥ २६ ॥
इत्युक्त्वा बहुशस्तेषां शुक्रो मणिसमुद्गतः ।
एषा गतिर्मयापीति शिवलिङ्गमदर्शयत् ॥ २७ ॥
ते दानवेन्द्रास्तद्वाणीमगृह्णन्निजमूर्धनि ।
प्रणम्य शिवलिङ्गं च मयेन सममब्रुवन् ॥ २८ ॥
अद्यप्रभृति सर्वेषां गतिरस्माकमीश्वरः ।
यदिच्छामनुवर्तन्ते ब्रह्मविष्णवादयः सुराः ॥ २९ ॥
किं ब्रह्मणा प्रसन्नेन तपोभिः किं च तादृशैः ।
प्राप्तमद्यैव सर्वं नः शिवलिङ्गावलोकनात् ॥ ३० ॥

धन्यः स भगवान्ब्रह्मा यश्चतुर्भिर्मुखाम्बुजैः।
जपन्सदा महादेवलिङ्गं कारणतां गतः॥ ३१॥
श्लाघ्यः स केशवो येन चतुर्भिः पावनैः करैः।
नित्यं समर्च्यते लिङ्गं शिवभक्तिविधायिना॥ ३२॥
मान्यः सुरेन्द्रो यो नेत्रसहस्रेण दिवानिशम्।
ध्यायत्यनन्यहृदयो भगवल्लिङ्गमादरात्॥ ३३॥
बलीयसा हि मोहेन वयं नूनं विडम्बिताः।
यदद्यापि महादेवलिङ्गनामापि न श्रुतम्॥ ३४॥
गते तदनुबन्धः क इदानीं तु कदाचन।
मा भूयाद्भगवल्लिङ्गवैमुख्यं नः कदाचन॥ ३५॥
इत्युक्त्वा दानवेन्द्रास्ते मयश्च शिवभावितः।
भगवल्लिङ्गपूजायामभवन्गाढनिश्चयाः॥ ३६॥
तदा प्रभृति ते सर्वे लिङ्गार्चनपरायणाः।
मनसा कर्मणा वाचा तस्थुः शिवकथामयाः॥ ३७॥
एवं गते बहौ काले तानाक्रमणतत्परान्।
अवधार्य सुरा जग्मुः समस्ताः कमलासनम्॥ ३८॥
तस्मै निवेदयामासुः सुरा दानवजं भयम्।
ब्रह्मादयो महादेवं शरणं समुपस्थिताः॥ ३९॥
वाचा गद्गदया दृष्ट्या चास्रुनिर्झरपूर्णया।
ब्रह्मादत्त वरस्तेषां किं करोमीति विह्वलः॥ ४०॥
सुरैः सह ततो देवं तं स्तोत्रैस्तत्र तुष्टुवुः।
न्यवेदयन्त दैत्यांश्च लोकाक्रमणतत्परान्॥ ४१॥
तेषां मनोगतं ज्ञात्वा दानवेन्द्रवधार्थिनाम्।
किंचित्सहासस्तत्कालमब्रवीत्पार्वतीपतिः॥ ४२॥
दानवास्ते विजीयन्ते केन कुत्र कदा कथम्।
मल्लिङ्गार्चनमेवास्ति येषां कर्म दिने दिने॥ ४३॥

भवता विष्णुना वापि लोकपालादिभिः सुरैः ।
मल्लिङ्गपूजामाहात्म्याद्भुज्यते विमलं फलम् ॥ ४४ ॥
तदासां संपदां लोके मद्भक्तिर्मूलसाधनम् ।
यस्यास्ति सा कथं तस्य भवामि विमुखः स्वयम् ॥ ४५ ॥
इत्थं भगवता प्रोक्तो जगाद जलजासनः ।
आक्रान्ते तैस्त्रिभुवने क शक्तोऽस्त्वधिकारवान् ॥ ४६ ॥
देव त्वदाज्ञया सोऽहमधिकारी महेश्वर ।
प्रायच्छं च वरं तेषामनल्पमहसां तदा ॥ ४७ ॥
एकेनैवेषुणा वेधः संघटन्ते पुराणि च ।
त्रीणि द्विशंकरो लोको यदा मृत्युस्तदास्त्विति ॥ ४८ ॥
तदाकर्ण्य महादेवो बभाषे प्रकटं हसन् ।
मयि भक्तिर्दृढा तेषां हन्यन्ते तेन ते कथम् ॥ ४९ ॥
द्विशंकरस्तु लोकोऽय सर्वदैव हि वर्तते ।
अनेन नन्दिरुद्रेण मया च परमार्थतः ॥ ५० ॥
असाध्यं साधयाम्यन्यदन्यद्विघटयाम्यहम् ।
मल्लिङ्गार्चनभक्तस्तु न केनापि विहन्यते ॥ ५१ ॥
इत्युक्तवति चन्द्रार्धमुकुटे प्रणतप्रिये ।
उवाच प्रणमन्ब्रह्मा मुकुटे रचिताञ्जलिः ॥ ५२ ॥
लिङ्गार्चनपरो जन्तुस्त्वद्भक्तः केन हन्यते ।
अभक्तास्तु यदा ते स्युः सतैव्या वागियं तदा ॥ ५३ ॥
ब्रह्मणेत्युदितो देव एवमस्त्वित्यभाषत ।
निर्जरास्तु ततः सर्वे निर्गताः स्वपुरं ययुः ॥ ५४ ॥
अथ दृष्ट्वा निजं राज्यं निष्प्रतापं पुरंदरः ।
कदाचिन्मन्त्रयांचक्रे विजने गुरुणा सह ॥ ५५ ॥
प्रज्ञया निखिलं पश्यन्युक्तायुक्तं बृहस्पतिः ।
ततो जगाद जम्भारिं सुभगारम्भया गिरा ॥ ५६ ॥

अहो भगवतः शंभोः प्रणयिष्वनुकम्पनम् ।
तद्भक्तानां वराकः कश्छायामपि विलङ्घयेत् ॥ ५७ ॥
इत्थं वाचस्पतेर्वाणीमधिगम्य पुरंदरः ।
कम्पमानसमग्राङ्गो लोललोचनमब्रवीत् ॥ ५८ ॥
त्वदधिष्ठानतो राज्यं मम स्वर्गे व्यवस्थितम् ।
कथमेते विजीयन्ते दानवास्तन्निरूप्यताम् ॥ ५९ ॥
श्रुत्वेति वाक्यं शक्रस्य स प्रोवाच बृहस्पतिः ।
निरीक्ष्य निभृतं किंचित्प्रज्ञारूपेण चक्षुषा ॥ ६० ॥
रिपूणां भगवद्भक्तिर्विजये मूलकारणम् ।
सा शैथिल्यमवाप्नोति केन यत्नेन चिन्त्यताम् ॥ ६१ ॥
तत्राभ्युपायः प्रायेण कश्चित्संचिन्तितो मया ।
शुक्रस्य संनिधाने स कथंकारं प्रगल्भते ॥ ६२ ॥
तेषां हितं प्रार्थयितुं शुक्र एव दिने दिने ।
भगवद्भक्तिदार्ढ्याय प्रयत्नमधितिष्ठति ॥ ६३ ॥
स्वयं यद्यपि ये भक्तास्तथाप्यैश्वर्यगर्विताः ।
मितप्रज्ञाश्च योज्यन्ते हेलयैव विपर्यये ॥ ६४ ॥
इत्युक्तवान्महेन्द्रेण पृच्छते स स कौतुकात् ।
भगवन्ब्रूहि तां युक्तिं तेषां लिङ्गार्चनापहाम् ॥ ६५ ॥
श्रुत्वेति सोऽब्रवीत्पश्य प्रायः सर्वेऽपि सर्वदा ।
उत्तरोत्तरमुत्कर्षं ज्ञात्वा रज्यन्ति जन्तवः ॥ ६६ ॥
तदीश्वरादृते कोऽत्र सर्वेषां मूर्धनि स्थितः ।
स्वविकल्पेन तस्यापि कश्चिदूर्ध्वस्थ उच्यते ॥ ६७ ॥
एवं मायामयं तेषां वर्ण्यते स्वोपकल्पितम् ।
शास्त्रं च दर्श्यते किंचिल्लिखित्वा निजया धिया ॥ ६८ ॥
ध्यानानि देवतानां च लिख्यन्ते तानि कैतवात् ।
यासां महेश्वरोऽप्येष न्यग्भावेन न्यवेश्यते ॥ ६९ ॥

एवं महेश्वरादन्य उत्कृष्ट इति कथ्यते ।
तेषां यतो भवेल्लिङ्गपूजाशैथिल्यतः क्षतिः ॥ ७० ॥
शुक्रस्य संनिधाने तु प्रथन्ते न कदुक्तयः ।
सप्रतीपोपपत्त्या च परमार्थविशारदः ॥ ७१ ॥
इत्युक्तवाना(गा)ङ्गिरसो वासवेन सगौरवम् ।
अभ्यर्थ्यते स सा युक्तिरखण्डा कथ्यतामिति ॥ ७२ ॥
उवाच स ततः शुक्रमाकलय्य बृहस्पतिः ।
भवतो भगवल्लिङ्गवैमुख्ये नौचिती क्वचित् ॥ ७३ ॥
एषामुपप्लावयितुं सत्यमेष मम क्रमः ।
बुद्धेरागतमित्येतद्दर्शनं बौद्धमुच्यते ॥ ७४ ॥
बुद्धः प्रसिद्धस्तत्रैकः संकल्पेत सुरेश्वरः ।
ध्याने यच्छत्रधर्तृत्वे लिख्यन्ते कारणान्यपि ॥ ७५ ॥
गणपत्यादयो ये च शैवा अत्युत्तमाः स्थिताः ।
तेषां मूर्धनि लिख्यन्ते देवा बौद्धा अमीति च ॥ ७६ ॥
मिथ्योपकल्पितान्येवं ध्यानान्यालोक्य दानवाः ।
शिवादुत्कर्षवन्तोऽमी इति मुह्यन्त्यसंशयम् ॥ ७७ ॥
एवं ध्यानेषु सिद्धेषु प्रसिद्धिं लम्भितेषु च ।
शैवतन्त्रानुवादेन मन्त्रानपि नियोजये ॥ ७८ ॥
उद्धृत्य शिवशास्त्रेभ्यः खण्डान्खण्डान्नियोजये ।
मन्त्रतन्त्रादिकं कृत्यं यत्किंचिच्चोपकल्पितम् ॥ ७९ ॥
बन्धमोक्षव्यवस्थायां शास्त्रं यच्च विरच्यते ।
तत्र तीव्रतरप्रज्ञाप्रकर्षः परितोषकः ॥ ८० ॥
लिङ्गार्चनादिकस्तत्र बन्धस्तावन्निगद्यते ।
मुक्तिस्तु शून्यतैव स्यादितिकर्तव्यहारिणी ॥ ८१ ॥
यज्ञादिका क्रिया सेयं सा तत्र परिहन्यते ।
आत्मा नास्तीति संचिन्त्य दूष्यते परमेश्वरः ॥ ८२ ॥

एवंविधं मया शास्त्रं विरचय्य पुरंदर ।
हृदि प्रविश्य भगवद्भक्तिस्तेषां विहन्यते ॥ ८३ ॥
अचिरेणैव सर्वं ते साधयामि प्रयोगतः ।
शुक्रस्य संनिधानं तु तत्र सिद्ध्यै प्रतीक्षते ॥ ८४ ॥
उपदिष्टे मया मायातन्त्रे नूनं प्रयोगतः ।
शुक्रोऽपि तेषां व्यामोहं न निवारयितुं क्षमः ॥ ८५ ॥
ऊर्ध्वारोहे महान्यत्नो नाधःपाते पुनः क्वचित् ।
कथमारुह्यते शैलः कथं वास्मान्निपत्यते ॥ ८६ ॥
आकर्ण्येति गिरं तस्य जगाद स शचीपतिः ।
हसन्विस्मयसंरम्भफुल्लनेत्रसरोरुहः ॥ ८७ ॥
विचित्रेयमहो प्रज्ञा भगवन्वर्तते तव ।
अन्यथा कथमीदृशि सूक्ष्मवस्तूनि पश्यसि ॥ ८८ ॥
बुद्ध इत्युच्यते योऽसावेतेन वपुषा हरिः ।
ईशेच्छयावतरति प्रायः प्रतिचतुर्युगम् ॥ ८९ ॥
इत्युक्तवति देवेशे बृहस्पतिरभाषत ।
एतदद्यापि न ज्ञातं भवता तद्विचिन्त्यताम् ॥ ९० ॥
लोकानुपप्लावयितुं हन्तुं यज्ञादिकाः क्रियाः ।
घोरं कलिं प्रथयितुं बुद्धत्वं याति केशवः ॥ ९१ ॥
बुद्धरूपं न चेदेष गृह्णाति कमलापतिः ।
कलिकाले भवेत्तर्हि कथं घोरा व्यवस्थितिः ॥ ९२ ॥
स एव बुद्धस्तत्रान्या देवता कल्पिता मया ।
यदालोकनतस्तेषां भक्तिः शैथिल्यमेष्यति ॥ ९३ ॥
तद्गत्वा भगवद्भक्तिं तेषां निर्मूलयाम्यहम् ।
इत्युक्त्वा प्रतिमुच्येन्द्रं जगामाथ बृहस्पतिः ॥ ९४ ॥
सदाभिलषिता सिद्धिः सुरारीणां यथा तथा ।
शुक्रस्यासंनिधानं स चकाङ्क्ष धिषणाधिपः ॥ ९५ ॥

अस्मिन्नवसरे शुक्रो दैत्येन्द्रान्प्रतिमुच्य सः ।
जगाम यज्ञमाधातुं वर्षनिवर्त्यमादरात् ॥ ९६ ॥
अथासंनिहितं शुक्रमधिगम्य बृहस्पतिः ।
संपन्नमेव देवानां हितं कार्यममन्यत ॥ ९७ ॥
विधाय शुक्रवेशं स कपटेन बृहस्पतिः ।
तारकाक्षपुरं प्राप विचित्रविभवोज्ज्वलम् ॥ ९८ ॥
तत्रामुं शुक्रबुद्ध्या स प्रणनामाथ दानवः ।
विस्तीर्यासनमभ्यर्च्य पप्रच्छ विनयान्वितः ॥ ९९ ॥
भगवन्भवतास्माकमादिष्टमभवद्गुरो ।
यज्ञं कर्तुं प्रयामीति तदद्यैवागमः कुतः ॥ १०० ॥
इति श्रुत्वा वचस्तस्य बृहस्पतिरभाषत ।
शुक्रत्वमात्मनो व्यञ्जन्वचनैरुचितक्रमैः ॥ १०१ ॥
मम युष्मत्कुलश्रेयश्चिन्तनेन दिने दिने ।
विसृष्टा देवतोपासाप्रभृतिर्भवति क्रिया ॥ १०२ ॥
तदद्य भवतां किंचिद्विजने चिन्तितं मया ।
जिज्ञासा यदि तत्रास्ति श्रूयतामवधानतः ॥ १०३ ॥
इहोत्तरोत्तरोत्कर्षालोकनात्परिकल्प्यते ।
प्रभुत्वं यस्य स त्रातुं समर्थ इति निश्चयः ॥ १०४ ॥
तन्मया पूज्यते कश्चित्प्रभुर्नित्यं विशेषतः ।
यस्य धारयति छत्रं सोऽपि चन्द्रशिखामणिः ॥ १०५ ॥
अद्यापि भवतां नायमुपदिष्टो मया क्रमः ।
अधुना मय्यनासन्ने स एव परिकल्प्यताम् ॥ १०६ ॥
इत्युक्त्वा गुरुणा तस्य तदेव प्रतिपादितम् ।
दूषते स महादेव भक्तिचर्चा पुनः पुनः ॥ १०७ ॥
भगवन्निन्दया किंचित्क्षोभं प्राप्येव दानवः ।
अभाषत ततो गाढविस्मयाक्रान्तमानसः ॥ १०८ ॥

किमेतदुच्यते लिङ्गं माहेशं मुच्यतामिति ।
अहो चिरेण दुःखाय सूच्या विद्धेव मे श्रुतिः ॥ १०९ ॥
स एव जयतां पूज्यो ध्येयश्च जगतामपि ।
सृष्टिसंहारकर्ता च तदेतदसमञ्जसम् ॥ ११० ॥
तस्मिन्वैमुख्यमभ्येति यः कदाचन मानवः ।
किमन्यदचिरेणैव स नश्यति न संशयः ॥ १११ ॥
अहमल्पमतिः कोऽत्र गुरुणैव विचार्यताम् ।
कोऽन्यः प्रजाहितकरो विधाय वपुरष्टधा ॥ ११२ ॥
इत्युक्तवन्तं तं वीक्ष्य तारकाख्यं बृहस्पतिः ।
बहलं विस्मयं प्राप्य तदानीं समचिन्तयत् ॥ ११३ ॥
अहो स्थिरतरा भक्तिरमुष्य परमेश्वरे ।
अन्यथा न प्रवर्तेरन्नीदृश्यः संपदः स्वयम् ॥ ११४ ॥
ईदृशीं भगवद्भक्तिमस्य व्याहन्तुमिच्छता ।
मयापि सत्यमधुना दुरितं भूरि संचितम् ॥ ११५ ॥
किं किं न क्रियते हन्त मया शक्रवशात्मना ।
दूषयित्वा महेशं यदसमञ्जसमुच्यते ॥ ११६ ॥
मिथ्योपदिश्यते यत्तदहो स्वार्थान्धता मम ।
विडम्ब्यते यद्विश्वात्मा सोऽपि देवो महेश्वरः ॥ ११७ ॥
अथवा विरचय्येदं कुकर्म नरकावहम् ।
तं पापहारिणं देवं चिरं ध्यायामि धूर्जटिम् ॥ ११८ ॥
इत्याकलय्य प्रोवाच बृहस्पतिरथ क्षणात् ।
वाचा हृदयहारिण्या सान्त्वयन्दानवेश्वरम् ॥ ११९ ॥
स्वार्थप्रवृत्तिः केयं स्यान्मा गृह्णीत वचो मम ।
मया पुनरिदं वाच्यं शिष्येषु परमार्थतः ॥ १२० ॥
गतानुगतिको मुञ्चत्युपपत्तिं पृथग्जनः ।
भवादृशास्तु निर्मुद्रप्रभावप्रतिभाजुषः ॥ १२१ ॥

यस्येश्वरोऽपि भगवाँश्छत्रं धारयति स्वयम् ।
उत्कृष्टो यदि नायं स्याद्बुद्धः सर्वार्थसाधकः ॥ १२२ ॥
महेश्वरोऽपि तच्छत्रं किमुद्दिश्य स धारयेत् ।
अहं यदि गुरुर्यूयं यदि शिष्याः सुभाविताः ॥ १२३ ॥
उत्सृज्य तन्महादेवलिङ्गं बुद्धोऽयमर्च्यताम् ।
अभिधायेति भूयोऽपि बह्वीभिरुपपत्तिभिः ॥ १२४ ॥
स तस्य भगवद्भक्तिं बभञ्ज प्रतिभाबलात् ।
अनेनैव क्रमेणायं विद्युन्मालिनि दानवे ॥ १२५ ॥
कमलाख्येऽपि तद्बौद्धं प्रथयामास दर्शनम् ।
अथापहृत्य भगवद्भक्तिं तेभ्यो बृहस्पतिः ॥ १२६ ॥
सानन्दमगमद्द्रुजन्पुरंदरपुरीं जवात् ।
तदाप्रभृति ते दैत्याः शिवभक्तिपराङ्मुखाः ॥ १२७ ॥
असहन्त न लिङ्गस्य नामापि किमुतार्चनम् ।
अबाधन्त समस्तानि भुवनान्यथ दानवाः ॥ १२८ ॥
यद्यन्मनोरमं वस्तु तत्तत्स्वीचक्रुरेव च ।
अथोद्विग्नाः सुराः सर्वे दानवेन्द्रैरुपद्रुताः ॥ १२९ ॥
ब्रह्मविष्णू पुरस्कृत्य जग्मुः शरणमीश्वरम् ।
स्तुत्वा तत्र महादेवमूचुः प्राञ्जलयः सुराः ॥ १३० ॥
भगवन्नभयं देहि बाधन्ते दानवा इति ।
अभक्तत्वं परिज्ञाय दानवानां महेश्वरः ॥ १३१ ॥
क्षयमङ्गीकरोति स देवोपद्रवशान्तये ।
पुनः पुनरथामर्त्यैः कृतस्तोत्रो महेश्वरः ॥ १३२ ॥
पुराणि त्रीणि निर्दग्धुं क्रीडासंरम्भमग्रहीत् ।
रथो बभूव पृथिवी वेदास्तुरगतां ययुः ॥ १३३ ॥
अधत्त ध्वजतां मेरुश्चन्द्रार्कौ चक्रतां गतौ ।
मन्दराद्रिरभूत्तुङ्गं तस्य देवस्य कार्मुकम् ॥ १३४ ॥

गुणत्वं वासुकिर्लेभे ब्रह्मा सारथितां गतः।
विष्णुः शरत्वमवहत्पुङ्खभावं च मारुतः॥ १३५॥
फलाग्रवृत्तिर्जगृहे दुःसहेन च वह्निना।
अथ तं रथमारुह्य पार्वत्या सह शंकरः॥ १३६॥
अभूत्परिवृतो नन्दिप्रमुखैर्बलिभिर्गणैः।
नन्दिना सिंहमारुह्य छगलध्वजशालिना॥ १३७॥
द्विशंकरत्वं जनितं विचित्रबलधारिणा।
इत्थं शंकरमुद्युक्तमधिगम्याथ दानवाः॥ १३८॥
नाविदन्क्षपमासन्नं व्यामोहविवशीकृताः।
अस्मिन्क्षणे दैत्यगुरुर्यज्ञं निष्पाद्य चागतः॥ १३९॥
अपश्यद्दानवाधीशाँल्लिङ्गाद्वैमुख्यभागिनः।
अब्रवीच्च विषादीव केयं कापथवर्तिता॥ १४०॥
अयं त्रिभुवनत्राता पूज्यते यत्र शंकरः।
तेऽप्यब्रुवन्गुरो पूर्वमुपदिष्टं त्वयैव नः॥ १४१॥
रहस्यरूपं यद्वस्तु तदर्घ्यं सोपपत्तिकम्।
उक्तिप्रत्युक्तिभिस्तेषामधिगम्याथ निश्चयम्॥ १४२॥
एवंविधाभिरज्ञासीच्छक्रो मायां बृहस्पतेः।
भूयोऽपि भगवद्भक्तिं विधत्तेति गुरोर्गिरः॥ १४३॥
तेषां न हृदये रूढा व्यामूढानां कुकर्मणा।
अथाब्रवीन्मयो नाम दैत्यः क्वचन दानवान्॥ १४४॥
धिषणाधिपमायाभिरस्पृष्टः शिवभावितः।
अहो विमोहो भवतां विनाशाय विजृम्भते॥ १४५॥
अपास्य यन्महादेवलिङ्गमन्यत्रभावना[1]।
विमुच्य भगवल्लिङ्गपूजां योऽन्यत्र रज्यति॥ १४६॥
स खलः संपदं त्यक्त्वा दुर्गतिं बहु मन्यते।
तथा हि यूयं भगवद्भक्त्या संपत्तिभागिनः॥ १४७॥

---

१. 'भासना'.

तामुज्झतामिदानीं वः किं भावीति पुरःस्थितम् ।
अद्य स्वप्ने मया दृष्टः क्रुद्धः साक्षात्पिनाकभृत् ॥ १४८ ॥
अस्मत्पुराण्येव हठान्निगिरन्घोरहुंकृतिः ।
रक्तवस्त्रावृतात्मानो दानवेन्द्रा विलोकिताः ॥ १४९ ॥
चरमप्रहरे रात्रौ नृत्यन्तः स्वपता मया ।
दिने दिनेऽपि दृश्यन्ते भीषणाः प्रेतयोषितः ॥ १५० ॥
इत्यरिष्टं विजानीत शिववैमुख्यकल्पितम् ।
इत्युक्तवन्तमालोक्य मयं ते तत्र दानवाः ॥ १५१ ॥
क्रोधहुंकारिणः शुक्रमभाषन्त मदोत्कटाः ।
पश्यासुरगुरो सोऽयमस्माकमसुहृन्मयः ॥ १५२ ॥
यो देवपक्षपातेन विडम्बयति दानवान् ।
यस्य वेश्मनि माहेशं लिङ्गं संनिहितं सदा ॥ १५३ ॥
तेन साकं च वैरं नस्तदयं ताड्यते मयः ।
इदानीं शांकरं लिङ्गं नाशयामोऽस्य मन्दिरे ॥ १५४ ॥
निबद्धोऽनुभवत्वेष फलं लिङ्गार्चनोचितम् ।
श्रुत्वेति वचनं तेषां शिवनिन्दाविधायिनाम् ॥ १५५ ॥
अथ दैत्यगुरुस्तत्र संतप्तस्तानभाषत ।
मा मा भवन्तो निन्दन्तु लिङ्गं माहेश्वरं क्वचित् ॥ १५६ ॥
सर्वकामप्रदां पूजां तस्मिन्को न करोति वा ।
ये प्रत्यहं महादेवलिङ्गं ध्यायन्ति भाविताः ॥ १५७ ॥
तेषां त्रिभुवनैश्वर्यं शाश्वतं करगोचरे ।
स एव धन्यः श्लाघ्यः स स च सेव्यो महाजनैः ॥ १५८ ॥
यो लिङ्गपूजाविध्वस्तघोरसंसारबन्धनः ।
यस्मिन्देशे सदा लिङ्गं पूज्यते भक्तिशालिभिः ॥ १५९ ॥
न तत्रोपद्रवः कश्चित्कदाचन विलोक्यते ।
अर्चितं शांकरं लिङ्गं भुक्तिमुक्ती प्रयच्छति ॥ १६० ॥

इत्युक्तं ब्रह्मविश्वाद्यैर्भगवद्भक्तिभावितैः।
पूजोपकरणं यद्वा पुष्पमूलफलादिकम् ॥ १६१ ॥
तत्सर्वं लिङ्गमाहात्म्याद्भजते परमं पदम्।
ज्ञात्वेत्थमचलां भक्तिं भगवद्भक्तिशालिनाम् ॥ १६२ ॥
मा मा मयं न्यक्कुरुत व्यामोहेनैव दानवाः।
इति शुक्रगिरं मोहादवज्ञायैव दानवाः ॥ १६३ ॥
अबध्नन्नुत्कटैर्नागपाशैर्मयमनर्गलाः।
मयार्चितं च तल्लिङ्गमानीय क्वचन स्थले ॥ १६४ ॥
अक्षिपन्क्रूरकर्माणः शिववैमुख्यशंसिनः।
अद्यापि मयलिङ्गाख्यं तत्प्रसिद्धं स्थलेश्वरे ॥ १६५ ॥
त्रिःसप्तकुलसंयुक्तो मुच्यते तस्य दर्शनात्।
अथास्मिन्समये देवः प्रजा लेढुं समास्थितः ॥ १६६ ॥
मन्दराद्रिधनुष्कोटौ वासकिज्यां न्यवेशयत्।
आधिज्यधन्वनस्तस्य दक्षिणादीक्षणात्प्रभोः ॥ १६७ ॥
बाष्पाम्बुबिन्दुरगलत्प्रमोदेन महीतले।
स एव रुद्राक्षतरुः फलवान्समपद्यत ॥ १६८ ॥
तत्तज्जन्मान्तरोपात्तपातकप्रतिबन्धकः।
महापातकयुक्तानामपि रुद्राक्षधारिणाम् ॥ १६९ ॥
यज्ञलक्षैरलभ्यापि देहान्ते गतिरुत्तमा।
द्वितीयादीशितुर्वामनेत्राच्चास्तु विनिर्ययौ ॥ १७० ॥
रजतं तद्भूल्लोके पित्र्ये कर्मणि शंसितम्।
यद्यद्रजतसंस्पृष्टं पितॄणां श्राद्धकर्मणि ॥ १७१ ॥
तत्सर्वमक्षयं तेषां परितोषाय कल्पते।
अस्मिन्नवसरे देवः क्रीडन्भगवदिच्छया ॥ १७२ ॥
ननर्त करमुत्क्षिप्य गर्जितैः कुञ्जराननः।
तमालोकयितुं सर्वे कौतुकात्स्वयमाययुः ॥ १७३ ॥

नानाविधेभ्यः स्थानेभ्यस्तदानीमेव देहिनः।
तद्दर्शनेच्छयैवाथ मिलितं तत्पुरत्रयम् ॥ १७४ ॥
विहसन्परमेशश्च नन्दिरुद्रमभाषत।
नन्दिन्गच्छ मयं रक्ष बद्धं मोहेन दानवैः ॥ १७५ ॥
मद्भक्तिपूतमनसः कुतस्तस्य भयं भवेत्।
येनाहं चेतसा ध्यातस्तस्य दुःखं कथं भवेत्।
नित्यं लिङ्गार्चनव्यग्रं तन्मयं रक्ष मद्गिरा ॥ १७६ ॥
एवं महादेववचो मूर्ध्नि नन्दी विधाय सः।
जगाम वेगेन मयं रक्षितुं दैत्यपीडितम् ॥ १७७ ॥
अवलोक्य मयं नन्दी दैत्यपाशविवेष्टितम्।
दैत्यलोकमनादृत्य बभाषे चतुरं वचः ॥ १७८ ॥
भो भो मय महादेवस्त्वयि सत्यं प्रसीदति।
अहं तदाज्ञया प्राप्तो हन्तुं पीडामिमां तव ॥ १७९ ॥
धन्योऽसि येन भगवल्लिङ्गभावितचेतसा।
आश्रितः शरणं देवः समस्तभुवनेश्वरः ॥ १८० ॥
दीनानां शरणं लोकेष्वन्योऽस्ति यदि कश्चन।
तदद्यैव महात्मानो ज्ञास्यन्ति पुरतः स्थितम् ॥ १८१ ॥
यो यो लिङ्गार्चनव्यग्रः कृती जगति जायते।
तस्य तस्य महादेवस्त्रातैवेति न संशयः ॥ १८२ ॥
व्यामूढो यः पुनर्लोको भक्तिं निन्दति शांकरीम्।
स नाशमचिरादेति लोकद्वयविडम्बकः ॥ १८३ ॥
उदुत्तिष्ठ दुराचारैर्दानवैस्त्वं कदर्थितः।
भगवद्भक्तिमाहात्म्याद्विशोको भव संप्रति ॥ १८४ ॥
इत्युक्त्वा मयमुत्थाप्य स यावन्नयति स्वयम्।
तावदेवाखिला दैत्याः सायुधास्तमवेष्टयन् ॥ १८५ ॥
ब्रह्मविष्णुप्रभृतयो येषां नाम्नैव कम्पिताः।

---

१. 'शोक' ख.

नामन्यत तृणं वापि नन्दी तान्दानवेश्वरान् ॥ १८६ ॥
किमन्यद्बलवान्हत्वा नन्दी रुद्रोऽथ दानवान् ।
आनिनाय मयं हृष्टं निकटं पार्वतीपतेः ॥ १८७ ॥
मयस्तत्र महादेवं विनिश्चित्य कृपापरम् ।
लिङ्गभावितमात्मानं कृतकृत्यममन्यत ॥ १८८ ॥
ततस्तन्मीलितं ज्ञात्वा महादेवः पुरत्रयम् ।
मुमोच त्रिशिखं बाणं ज्वलन्तं जातवेदसा ॥ १८९ ॥
अथ तद्भगवान्बाणहुताशनविवेष्टितम् ।
पुरत्रयं तदा प्राप भस्मशेषदशां क्षणात् ॥ १९० ॥
त्रयोऽपि दानवेन्द्रास्ते दह्यमानाः शिखाभरैः ।
इहैव जन्मनि प्रापुः शिवनिन्दोद्भवं फलम् ॥ १९१ ॥
ते दानवाः सपुतना भस्मीभूता इतस्ततः ।
भगवल्लिङ्गनिन्दाया दुःखमन्वभवन्घनम् ॥ १९२ ॥
संहृतं त्रिपुरं दृष्ट्वा रौद्ररूपं महेश्वरम् ।
अथ ब्रह्मादयो देवा अवदन्भक्तिनिर्भराः ॥ १९३ ॥
नमो नमो भगवते सर्वसिद्धिविधायिने ।
त्वत्प्रसादाद्वयं सद्यः संपन्ना निरुपद्रवाः ॥ १९४ ॥
तदिदानीं महादेव दासेषु करुणापर ।
रौद्रं तेजः परित्यज्य भव त्वं सौम्यदर्शनः ॥ १९५ ॥
त्वत्तेजसा हता दृष्टिरस्माकं भक्तिवत्सल ।
अधुना सौम्यमाधेहि रूपं देव प्रसीद नः ॥ १९६ ॥
इत्युक्तवत्सु देवेषु भगवान्निजयेच्छया ।
जग्राह सौम्यमाकारं सुधाकरशतोपमम् ॥ १९७ ॥
ततस्तमीश्वरं वीक्ष्य सौम्यभावमुपागतम् ।
प्रणम्य ब्रह्मा प्रोवाच विनीतः शिवभावितः ॥ १९८ ॥
इहैव भगवन्सद्यो लोकानुग्रहवाञ्छया ।

१. 'ग्रहणेच्छया' ख.

संनिधेहि महादेव [[1]मम नाथ कृपां कुरु ॥ १९९ ॥
प्रभो श्रीबिन्दुनादेश तथा श्रीत्रिपुरेश्वर ।
सन्निधेहि महादेव] लोकानुग्रहणेच्छया ॥ २०० ॥
एवमस्त्विति देवेशस्तद्वचः प्रतिपद्य च ।
पातालात्प्रभृति व्यक्तं तेजोलिङ्गत्वमाददे ॥ २०१ ॥
अथ ब्रह्मादिविज्ञप्त्या चोदितः परमेश्वरः ।
तदैव वरयामास महादेवो दयानिधिः ॥ २०२ ॥
यत्तदस्तु महाक्षेत्रं लोकानां दुरितापहम् ।
अत्र म्रियन्ते ये भक्तास्ते लभन्ते पदं मम ॥ २०३ ॥
कृमिकीटादयोऽप्यत्र म्रियन्ते यदि पापिनः ।
तेऽपि पापं विधूयान्ते व्रजन्ति च शुभां गतिम् ॥ २०४ ॥
यः पितॄँस्तर्पयत्यत्र देवान्वा गाढभावनः ।
निखिलं कुलमुद्धृत्य सोऽनन्तं लभते फलम् ॥ २०५ ॥
ये त्यजन्ति हठात्प्राणान्दुराचारा नराधमाः ।
तेभ्यः पलायते क्षेत्रं ते ज्ञेया आत्मघातिनः ॥ २०६ ॥
ततस्तु तैजसं लिङ्गं स्वयंभूः प्रागपूजयत् ।
अतः स्वयंभूनाथाख्यं जगाम भुवनत्रये ॥ २०७ ॥
ब्रह्मादयोऽपि ते सर्वे तद्ध्यानेन गलन्मलाः ।
महादेवस्य कारुण्यं माहात्म्यं च विचिन्तयन् ॥ २०८ ॥
तस्मात्कालात्प्रभृत्येतत्स्वयंभूस्थानमुत्तमम् ।
काशीक्षेत्राधिकत्वेन सर्वशास्त्रेषु गीयते ॥ २०९ ॥
अत्रैवापापिनः सिद्धा योगिनश्च दिने दिने ।
निर्विकल्पं परं रूपं विमृशन्ति पदे पदे ॥ २१० ॥
अत्र शंकरभूतिः स स्वकर्मक्षयमाददे ।
शिवभक्त्यासवक्षीबो निश्चेष्ट इव सर्वतः ॥ २११ ॥
विदधे स्थितिरत्रैव तेन धर्मतपस्विना ।

---

१. धनुश्चिह्नान्तरगतो नास्ति पाठः ख–पुस्तके.

परमार्थोपदेशेन योऽनुजग्राह भाविताम् ॥ २१२ ॥
अद्यात्रैव स्थितः क्षेत्रे स राजानकहिग्गकः ।
अखण्डं भगवद्रूपं विमृशन्सर्वजन्तुषु ॥ २१३ ॥

ध्यायत्यौन्मनसं पदं परमिति प्रायेण सर्वो जन-
स्तद्धर्माय यदागमेषु निरतावच्छेदचर्चार्चितम् ।
बाह्यं नश्वरमन्यशास्त्रसरणौ यद्वस्तु तत्तत्त्वत-
श्चिद्रूपत्वमुपैति यस्य स जयत्येकः स्वयंभूरसौ ॥ २१४ ॥

यस्यैकस्य परप्रकाशवपुषः शक्तिर्विमर्शात्मिका
सा नानाविधवाच्यवाचकतया द्वैरूपमालम्बते ।
सोऽयं संप्रति वेद्यवेदकमयद्वैतविमोहस्फुर-
त्स्वातन्त्र्यप्रतिपत्तिरुल्लसतु मे देवः स्वयंभूर्यदि ॥ २१५ ॥

तदस्मिन्यो महाक्षेत्रे वर्तते शिवभावितः ।
ब्रह्मादीनप्यधः कृत्य स प्रयात्युत्तमां गतिम् ॥ २१६ ॥
अस्मिन्द्रि(न्म्रि)यन्ते ये क्षेत्रे शक्तिपातपवित्रिताः ।
सदाशिवपुरं प्राप्य ते यान्ति परमं पदम् ॥ २१७ ॥
ये व्रतेनात्र मुञ्चन्ति देहं तेषां व्रतात्फलम् ।
न पुनः क्षेत्रजनितं शास्त्रेष्विति निरूपितम् ॥ २१८ ॥

इति निरुपममीश्वरस्वरूपं
किमपि विचार्य विशुद्धया स्वबुद्ध्या ।
अपि दधतु सचेतनाः समस्ताः
शिवशिवशब्दमहेशमोहशान्त्यै ॥ २१९ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ त्रिपुरदाहे स्वयंभूनाथावतारो नाम त्रयोदशः प्रकाशः ॥

---

## चतुर्दशः प्रकाशः ।

ॐ नमः श्रीकपटेश्वराय ।

संसाराध्वनि घोरघोरबलवन्मायाप्रमेयाकुले
व्यामुह्यामि किमाचरामि कतरं वाञ्छामि वा सेवितुम् ।

सद्यस्त्वेष भवन्तमेककपटेनात्र स्वरूपान्तरं
ज्ञात्वा कामपि निर्वृतिं विचिनुयां दारुण्यरि त्वन्मये ॥ १ ॥
इह किंचित्करैरन्यैर्जीवद्भिः स्थावरायितम् ।
स्थावरत्वेऽपि विश्वात्मा जन्तूनुद्धरति प्रभुः ॥ २ ॥
अभूत्कृतयुगे पूर्वं पुलोमा नाम दानवः ।
जितेन्द्रियः सत्यवादी शरण्यो ब्रह्मवित्तथा ॥ ३ ॥
कन्याद्वयमभूत्तस्य रमणीयं जगत्त्रये ।
तयोर्ज्येष्ठामुषां सोऽदाद्भृगवे दक्षिणां मखे ॥ ४ ॥
कनीयसीं कश्यपाय शच्याख्यां प्रत्यपादयत् ।
कश्यपेन च सा दत्ता तदानीमेव वज्रिणे ॥ ५ ॥
पुलोम्नः सूनवोऽप्यन्ये दानवत्वात्पुनः पुनः ।
अयुध्यन्त सुरैर्नित्यं सर्वलोकजयोन्मुखाः ॥ ६ ॥
देवैर्युधि हतान्दृष्ट्वा भ्रातॄनथ रुंदत्युषा[1] ।
भृगुमभ्यर्थयामास तत्प्रत्युज्जीवनाशया ॥ ७ ॥
विद्यां भगवता दत्तां भृगुः संजीवनीं स्मरन् ।
निहतानपि गीर्वाणैः प्रत्युज्जीवयति स्म तान् ॥ ८ ॥
अथ दृष्ट्वा सुराः शत्रून्मृतानपि सजीवितान् ।
जग्मुः शरणमम्भोधिशायिनं पुरुषोत्तमम् ॥ ९ ॥
प्रणिपत्य सुरास्तस्य स्तुतीः कृत्वा सहस्रशः ।
अभाषन्त परिक्षीणसौष्ठवा मधुसूदनम् ॥ १० ॥
ईश्वरः सर्वभूतानामुपर्येव व्यवस्थितः ।
तदाज्ञया भवान्कृष्ण स्थितिकृत्ये प्रवर्तितः ॥ ११ ॥
तदद्य सैव चास्माकं स्थितिर्विपरिवर्तते ।
षड्भृगुर्युद्धनिहतान्संजीवयति दानवान् ॥ १२ ॥
दानवानां भृगुवधूर्भगिनी ज्ञायतामुषा ।
तस्या एव शिरश्छिन्धि नान्यत्कर्तव्यमस्ति नः ॥ १३ ॥

१. 'रुदन्त्युषा' क-ख.

इति तेषां वचः श्रुत्वा तदानीमेव केशवः ।
देवानामुपकारार्थमुषामूर्धानमच्छिनत् ॥ १४ ॥
सा छिन्नशीर्षा मेदिन्यामुषाविगतजीविता ।
पपात रुधिरस्यन्दनिर्भरीकृतदिक्कु(क्त)टा ॥ १५ ॥
तदुदन्ताधिगमनादथ सत्वरमागतः ।
भृगुः पत्नीं तथाभूतां शीर्षेण समयोजयत् ॥ १६ ॥
स्मरन्विद्यां महादेवदत्तां संजीवनीं भृगुः ।
प्रत्युज्जीवितवान्पत्नीमाश्चर्यावहया दृशा ॥ १७ ॥
तदा सुप्तोत्थितेवाथ रूपं प्राप्तवतो निजम् ।
किमेतदिति पप्रच्छ भर्तारं सा पुनः पुनः ।
भर्ता विदितवृत्तां च तां चक्रे स ततश्चिरात् ॥ १८ ॥
[1]अथ कोपाद्वमन्त्युल्कामिव पाटलया दृशा ।
जगाद परुषं भूमिं ताडयन्ती चिराय सा ॥ १९ ॥
अहं साध्वी स गोविन्दो बालिशः प्रेरितः सुरैः ।
अवज्ञया महापापो मामबाधत दुर्मतिः ॥ २० ॥
तदिदानीं मम गिरा सतीद्वेशे दिवौकसः ।
अश्मकाष्ठतृणत्वेन जायन्तामविवेकिनः ॥ २१ ॥
केशवो नाम यः सोऽपि क्षयमाप्नोतु दुर्मतिः ।
भूयो भूयः पृथिव्यां च जायतामजतां त्यजन् ॥ २२ ॥
एवमुक्ते तया साध्व्या सत्यवाचा तदा भृगुः ।
जगाद सान्त्वयन्नग्रकरेण मधुराक्षरम् ॥ २३ ॥
अश्मकाष्ठतृणत्वेन देवाः शप्तास्त्वया प्रिये ।
ईशाज्ञया स्थितिं कुर्वञ्छप्तः किमिति केशवः ॥ २४ ॥
अस्माकमपि सर्वेषां शरणं परमेश्वरः ।
एष केशवशापेन प्रिये कुप्यति [2]शंकरः ॥ २५ ॥
इति भर्तुर्वचः श्रुत्वा बाष्पाविलविलोचना ।

---

१. इतः प्राक् 'सा च जटा' इति चतुरक्षरीतः परं रिक्ततामेकपङ्क्तेः पश्यामः पुस्तकद्वये. २. 'हन्त नौ' क.

अधिकं कोपमासाद्य सा जगाद भयंकरम् ॥ २६ ॥
किं भाषसे महादेवस्याज्ञया कुरुते स्थितिम्।
केशवो मम वक्त्रात्तु वागसत्या न जायते ॥ २७ ॥
अथ वा स महादेवो भगवानपि मद्गिरा।
काष्ठत्वेन सतीदेशे स्थितिं गृह्णातु संप्रति ॥ २८ ॥
यदि नावतरत्येष काष्ठत्वेन महेश्वरः।
अनर्थं सत्यवादित्वं तन्मे देव्याः समर्पितम् ॥ २९ ॥
एवमुक्ते तया तत्र भृगौ हाहेति कुर्वति।
उच्चचार तदा वाणी पुनन्ती निखिलं जगत् ॥ ३० ॥
अहं च देवी चेत्येकं रूपं तद्भ्रान्तिमुत्सृज।
त्वं सत्यवादिनीत्येषा गीतिर्न परिवर्तते ॥ ३१ ॥
देवाः सर्वे केशवश्च नातिक्रामन्ति ते गिरम्।
उषेऽहमपि काष्ठात्मावता(त)राम्युमया सह ॥ ३२ ॥
एवं वाणीं समाकर्ण्य तदानीमशरीरिणीम्।
उषा दृढतरां मेने भक्तिं भगवतीं प्रति ॥ ३३ ॥
ततः प्रभृति देवेशः कपटेनात्तविग्रहः।
कपटेश्वरनाम्नैव काष्ठरूपः प्रसिध्यति ॥ ३४ ॥
देवीकुमारविघ्नेशास्तथा नन्द्यादयो गणाः।
काष्ठरूपाः सतीदेशे सर्वे तं पर्यवारयन् ॥ ३५ ॥
संकर्षणेन सेवार्थं गृहीता तत्र नागताः।
पापसूदननाम्ना यः प्रसिद्धो भुवनत्रये ॥ ३६ ॥
चतुर्मुखः काष्ठरूपं प्राप सेवितुमीश्वरम्।
भक्तः परिजनो नित्यं प्रभुमेवानुवर्तते ॥ ३७ ॥
अथावतरतः शंभोस्तदा भक्तानुरोधतः।
उषाभृगू दृढतरां भक्तिं किमपि चक्रतुः ॥ ३८ ॥
अस्मिन्नवसरे केचित्तपस्यन्तो महर्षयः।

पुण्ये दृषद्वतीतीरे स्वप्ने ददृशुरीश्वरम् ॥ ३९ ॥
प्रणमन्तस्ततः सर्वे मेदिनीन्यस्तजानवः ।
एवं विज्ञापयामासुः प्रसन्नेनान्तरात्मना ॥ ४० ॥
भगवन्करुणाराशे भक्तिमात्रैकसाधन ।
इदानीं भव नस्त्राणं घोरघोरं तपस्यताम् ॥ ४१ ॥
इति तेषां वचः श्रुत्वा बभाषे वृषकेतनः ।
काष्ठरूपोऽवतीर्णोऽहं लोकानुग्रहकाम्यया ॥ ४२ ॥
हयशीर्षे महातीर्थे हस्तिकर्णे च निर्मले ।
दास्यामि दर्शनं तत्र युष्माकं चिरसेवितः ॥ ४३ ॥
इत्युक्त्वान्तर्हिते शंभौ प्राबुध्यन्त महर्षयः ।
ततः परस्परं स्वप्नं वर्णयित्वा तपोधनाः ॥ ४४ ॥
अमन्यन्त गिरं सत्यां प्रसन्नस्य महेशितुः ।
ततः समेत्य सर्वे ते जग्मुः कश्मीरमण्डलम् ॥ ४५ ॥
तत्र तीर्थवरे देवं काष्ठरूपं व्यलोकयन्[1] ।
एषां स्नानाय तत्राम्बु नाविद्यत मनागपि ॥ ४६ ॥
ततः संदिग्धमनसः केचित्कष्टान्यचालयन् ।
तत्स्पर्शमात्राद्बुद्बुदत्वं प्राप्य चान्तर्हितास्तदा ॥ ४७ ॥
केचित्तीर्थवरे तत्र नागस्य भवने शुभे ।
नापश्यन्धूर्जटिं देवं संशयं च प्रपेदिरे ॥ ४८ ॥
जम्बुकं जरठं केचिदपश्यञ्जम्बुकावृतम् ।
उत्तराभिमुखं भीमं रूक्षफूत्कारकारिणम् ॥ ४९ ॥
केऽप्युत्तराशाभिमुखं ह्रस्वाङ्गं तिमिरोपमम् ।
अपश्यञ्जम्बुकं तत्र क्रीडन्तं न विदुः स्थितम् ॥ ५० ॥
पाषाणखण्डाश्च ततस्तीर्थादुत्थाय काष्ठवत् ।
अर्यमण्युदिते प्रापुः स्थलमार्गं मुहुर्मुहुः ॥ ५१ ॥
आदित्यस्यास्तसमये पुनस्तत्रैव चापतन् ।

---

1. 'अपूजयन्'. २. निबिडं.

तत्स्पर्शेन तदा केचिद्रुद्रत्वं प्राप्य निर्वृताः ॥ ९२ ॥
एतदाश्चर्यमालोक्य वशिष्ठो धीमता वरः ।
अकरोच्च तदा स्पर्शं काष्ठरूपस्य धूर्जटेः ॥ ९३ ॥
उल्लसद्भक्तिरोमाञ्चस्तीरे तीर्थस्य संस्थितः ।
परमेश्वरमुद्दिश्य निदधे दुष्करं तपः ॥ ९४ ॥
तस्याथ तपसा प्रीतः स्वप्ने धूर्जटिरब्रवीत् ।
किमर्थं पुत्र कुरुषे घोरघोरतरं तपः ॥ ९५ ॥
तीर्थेऽत्र बहुभिः स्पृष्ट्वा दारुण्यासैव रुद्रता ।
तदिदानीं त्वयाप्येवमेष मार्गोऽभिलष्यताम् ॥ ९६ ॥
एवं भगवतो वाणीमाकर्ण्य मुनिपुंगवः ।
हर्षगद्गदया वाचा जगाद रचिताञ्जलिः ॥ ९७॥
किमद्भुतं तद्रुद्रत्वं प्राप्तैरालोक्यसे प्रभो ।
चार्मणेनैव नेत्रेण मम त्वां द्रष्टुमेषणा ॥ ९८ ॥
तन्मे यदि महादेव तपसा प्रीयसेऽमुना ।
तदनेनैव देहेन त्वां पश्येयं पुनः पुनः ॥ ९९ ॥
इति तस्य मुनेर्वाणीमाकर्ण्य करुणापरः ।
प्रबुद्धस्य महादेवो दर्शनं सहसा दधौ ॥ ६० ॥
देव्या सह वृषारूढः शूलाङ्कः शशिशेखरः ।
नन्दिनानुगतः शंभुर्मुनिना ददृशे पुरः ॥ ६१ ॥
भक्त्या नमन्तं तं दृष्ट्वा वशिष्ठमथ धूर्जटिः ।
उवाच शशिनः कान्तिं जयन्सह मरीचिभिः ॥ ६२ ॥
प्रीतोऽहं भवतः पुत्र तपसा पश्य संप्रति ।
रुद्रलोकं मया नीतास्तव सब्रह्मचारिणः ॥ ६३ ॥
यैरहं मुनिभिः स्पृष्टः काष्ठरूपोऽत्र जातुचित् ।
ते सर्वे रुद्रतां प्राप्य परमां यान्ति निर्वृतिम् ॥ ६४ ॥
तवानेनैव देहेन दिव्यं चक्षुरुदेत्वतः ।
अतीतानागतज्ञानं यत्प्रसादात्प्रवर्तते ॥ ६५ ॥

अधुना पश्य मां पुत्र सर्वतो वर्तिनं शिवम्।
इयमेकात्मभावेन देवी मे संव्यवस्थिता ॥ ६६ ॥
नन्दिरुद्रो महाकालो दिण्डिलम्बोदरस्तथा।
अमी गणाश्च सर्वे मे स्वात्मैवेति न संशयः ॥ ६७ ॥
पश्यात्र जम्बुकाख्यं मां विष्णुं कपटवासनम्।
यक्षं वैश्रवणं नारी मातरं च ममाज्ञया ॥ ६८ ॥
वसिष्ठोऽथाखिलं ज्ञात्वा भक्तिनम्रो महेश्वरम्।
उवाच मुकुटे बध्नन्नञ्जलिं पुलकाङ्कितः ॥ ६९ ॥
भवन्तं पश्यता देव प्राप्तं ज्ञानं मयाखिलम्।
इदानीमत्र सर्वेषामनुग्रहपरो भव ॥ ७० ॥
वसिष्ठस्य गिरं श्रुत्वा ततश्चन्द्रशिखामणिः।
एवमस्त्विति जल्पित्वा पुनः प्रोवाच सस्मितम् ॥ ७१ ॥
वैशाखमासे जानीहि ममागमनलक्षणम्।
बाहुल्यात्पयसो भूरिवर्षणाच्च पयोमुचाम् ॥ ७२ ॥
तत्स्पर्शनात्कृतयुगे तदैवोदेति रुद्रता।
युगान्तरेषु देहान्ते देहिनामिति निश्चयः ॥ ७३ ॥
गणोऽयं मषकत्वेन नन्दी तिष्ठति मद्गिरा।
अनुगृह्णाति लोकांश्च स्पर्शमात्रेण सर्वदा।
एवमुक्त्वा महादेवो देव्या सह तिरोदधे ॥ ७४ ॥
ततः प्रभृति सोऽप्यासीन्मुनिः शिवपरायणः।
सनत्कुमारो व्यासेन विज्ञप्तः पावनात्मना ॥ ७५ ॥
इत्थं श्रीकपटेशस्य माहात्म्यं निरवर्तयत्।
सतीदेशे महातीर्थे पापसूदननामनि ॥ ७६ ॥
नित्यं संनिहितो देवः सदेवीको गणान्वितः।
काष्ठरूपाः स्थिता रुद्रा लोकानुग्रहकारिणः ॥ ७७ ॥
अस्मिन्कलौ पावयन्ते स्पर्शमात्रेण मानवान्।
गणेश्वरस्तत्र नित्यं निवसत्यचलाख्यया ॥ ७८ ॥

स्वयमागच्छति त्र्यक्षः कदाचिन्निजयेच्छया ।
वर्षद्भिर्जलदैर्भूरिप्रोद्भवद्भिस्तथा जलैः ॥ ७९ ॥
आगमः परमेशस्य सूच्यते नात्र संशयः ।
ज्योतीरूपो महादेवस्तत्र सत्वानुकम्पया ॥ ८० ॥
शिवा दूती भगवतीत्यपूर्वोऽयं कथानकः ।
शिलोच्चयस्तत्र रम्यो रुद्रपादाख्यया श्रुतः ॥ ८१ ॥
नानारत्नशताकीर्णो नानाधातुविचित्रितः ।
कदम्बपुष्पैर्बहुलैर्भ्रमरैः क्वचिदावृतः ॥ ८२ ॥
सुवर्णपद्मैर्वैदूर्यनालैः क्वचन शोभितः ।
गन्धर्वैः किन्नरैर्यक्षैः क्रीडद्भिः क्वचिदाश्रितः ॥ ८३ ॥
अस्ति तत्र महादेवस्योद्याने वरपर्वतः ।
दीप्यमानो महापुष्पैस्तरुणादित्यसन्निभैः ॥ ८४ ॥
तत्राम्बुजानि वापीषु विकसन्ति दिवानिशम् ।
नीलोत्पलानि चोत्कृष्टसौरभाणि यतस्ततः ॥ ८५ ॥
नानाविधैस्तरुवरैः फलद्भिरमृतात्मकम् ।
अत्र दिव्यैश्च भौमैश्च शोभा कापि विधीयते ॥ ८६ ॥
कुरङ्गाः केकिनश्चात्र क्रीडन्ति स्वेच्छया क्वचित् ।
क्वचिन्मधुरशब्दाश्च हंसास्तिष्ठन्ति भास्वराः ॥ ८७ ॥
गायन्तीभिः क्वचित्तत्र किन्नरीभिर्व्यवस्थितम् ।
नृत्यन्तीभिश्च गन्धर्ववनिताभिरितस्ततः ॥ ८८ ॥
केतकीकुसुमस्पर्शकोमलस्तत्र मारुतः ।
आह्लादयति सर्वाङ्गं वापीजलकणोक्षितः ॥ ८९ ॥
भूमिदेवा ब्रह्मसमाः सामगानपरायणाः ।
ऋषयो बहवो देवदेवसेवारसोत्सुकाः ॥ ९० ॥
मौनव्रतपराः केचित्सांख्ययोगपराः परे ।
काणादा औपनिषदास्तत्र तिष्ठन्ति सर्वतः ॥ ९१ ॥

तत्र तीर्थे महादेवो दृश्यते भक्तिभावितैः ।
सदागमाद्भुतोद्भूतभक्तिश्रद्धाचमत्कृतैः ॥ ९२ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा जन्मान्तराणि च ।
यदत्र तीर्थे ददते तद्विचित्रफलं भवेत् ॥ ९३ ॥
दैवं पित्र्यं च यः कश्चिद्विदध्यादत्र भावितः ।
तदक्षयं भवत्येव सिद्धिर्विघ्नविवर्जिता ॥ ९४ ॥
ये केचिद्दम्भरहिताः पापेन परिवर्जिताः ।
तेषां तीर्थवरो दत्ते शाश्वतीं गतिमुत्तमाम् ॥ ९५ ॥
संत्यज्य शठतां तत्र पूजनीयो महेश्वरः ।
धर्मार्जितेन वित्तेन निष्पापेन च चेतसा ॥ ९६ ॥
परस्य पीडामुत्पाद्य यो वित्तं परिकल्पयेत् ।
न तस्य पूजां गृह्णाति महादेवः कदाचन ॥ ९७ ॥
ये लब्धाः पापिनः क्रूराः परबाधाय दाम्भिकाः ।
अवीचौ पातयत्येव तानत्र परमेश्वरः ॥ ९८ ॥
अत्रैव कार्तिकेयोऽस्ति दर्शनीयश्च मानवैः ।
आग्नेय्यां दिशि विस्तीर्णकदलीद्वाररक्षकः ॥ ९९ ॥
कार्तिकेयप्रसादेन प्राप्यते द्वारमीशितुः ।
तत्रापि देवदेवेन तीर्थमुत्पादितं पुरा ॥ १०० ॥
शतह्रदायास्तत्रापि नलिन्याश्च समागमः ।
अत्र स्नानेन भक्तानां किल्बिषं क्षीयतेतराम् ॥ १०१ ॥
चतुर्दश्यां पौर्णमास्यां पात्रमादाय काञ्चनम् ।
पद्मेनाच्छादितं दद्यात्तत्र भक्ताय धूर्जटेः ॥ १०२ ॥
एकायनेन चित्तेन स्नात्वा पापनिसूदने ।
धनेश्वरं मूर्तिमन्तं तत्र पश्यन्ति भाविताः ॥ १०३ ॥
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
पापसूदनतीर्थेऽत्र तानि तिष्ठन्ति तत्त्वतः ॥ १०४ ॥

व्योममध्यं रवौ प्राप्ते यः स्पृशेत्पापसूदनम् ।
समग्रपृथ्वीदानस्य फलं स समवाप्नुयात् ॥ १०५ ॥
कपिलानां शतं दत्वा यत्फलं प्राप्यते जनैः ।
सति प्रभाते स्पृशतां पापसूदनमेव तत् ॥ १०६ ॥
पृथिवीं शस्यसंपूर्णां राहुग्रस्ते दिवाकरे ।
संक्रान्तौ च कुरुक्षेत्रे यो दद्यात्पुण्यकर्मणे ॥ १०७ ॥
कृष्णपक्षे चतुर्दश्यां पापसूदनवारिणा ।
कृतस्नानस्य शान्तस्य तत्फलं नात्र संशयः ॥ १०८ ॥
चतुर्थ्यामथ वा षष्ठ्यामत्र स्नात्वा समाहितैः ।
पूजनीयश्च यत्नेन देवः श्रीकपटेश्वरः ॥ १०९ ॥
अत्र स्थाने सोदराख्यं तीर्थं वसति सर्वदा ।
ब्रह्मविष्णुप्रभृतिभिर्देवैः सिद्धैश्च सेवितम् ॥ ११० ॥
कपालमोचनं तीर्थं सौमाख्यं पुष्करं तथा ।
शतह्रदं प्रभासं च तत्र सन्निहितं सदा ॥ १११ ॥
ब्रह्मा विष्णुः कुमारश्च रविर्वायुश्च सेवितुम् ।
कपटेश्वरमत्रैव तीर्थत्वेन व्यवस्थितः ॥ ११२ ॥
कपिलाचक्रतीर्थाभ्यामत्रैव स्थीयते सदा ।
किमन्यत्सर्वदेवानामेतदेव निकेतनम् ॥ ११३ ॥
अत्र भक्त्या सदा स्नातो यः कश्चिद्धौतकिल्बिषः ।
स देहान्ते शिवं याति नास्ति स्वप्नेऽपि संशयः ॥ ११४ ॥
सितच्छदगणाकीर्णं मुक्ताहारविभूषितम् ।
अप्सरोवर्गरुचिरं सिद्धविद्याधरावृतम् ॥ ११५ ॥
नानाविधान्नपानादिरुच्यवस्तुसुखावहम् ।
क्वणद्घण्टाशतं गायत्किन्नरीगणसेवितम् ॥ ११६ ॥
आदित्यमण्डलमिव प्रदीप्तं रत्नराशिभिः ।
विमानं तस्य देहान्ते स्वयमेव पुरो भवेत् ॥ ११७ ॥

तत्रान्नेन विदध्याद्यः श्राद्धं मूलैः फलैरथ ।
परितृप्यन्ति पितरस्तस्य शंभुप्रसादतः ॥ ११८ ॥
चान्द्रायणसहस्रेण या शुद्धिः स्याद्विजन्मनः ।
वारिस्पर्शनमात्रेण सा स्यादत्र न संशयः ॥ ११९ ॥
तिलप्रमाणं यो दद्यादन्नमत्रार्थिने नरः ।
मेरुप्रमाणं लभते स तीर्थस्य प्रसादतः ॥ १२० ॥
पापसूदनतीर्थस्य यः करोति प्रदक्षिणम् ।
अग्निष्टोमफलं प्राप्य मोदते स नरो दिवि ॥ १२१ ॥
वैशाखमासप्रतिपद्दिवसे तत्र मानवः ।
पर्वतारोहणं कृत्वा वाजपेयफलं लभेत् ॥ १२२ ॥
नश्यत्यलक्ष्मीरेतस्य तेजश्च परिवर्धते ।
संवत्सरसुखी स स्यादारु(रो)हेद्योऽत्र तं गिरिम् ॥ १२३ ॥
अत्र स्नात्वा धनाध्यक्षमर्चयेद्यः समाहितः ।
धनानि निर्विरामाणि लभते नात्र संशयः ॥ १२४ ॥
स्नात्वा तीर्थेऽत्र विधिवत्पूज्यः स[1] जम्बुकेश्वरः ।
क्षीरादिभिः शुभैर्द्रव्यैः पुष्पैश्च शुभचेतसा ॥ १२५ ॥
अत्र जम्बुकरूपेण गणनाथो व्यधाद्रुतम् ।
शिवारुतमिति ख्यातं दृक्प्रसादावहं ततः ॥ १२६ ॥
तपस्यतो वालखिल्याननुजग्राह धूर्जटिः ।
अत्रैव सौरं स्थानं च कारुण्येन व्यसर्जयत् ॥ १२७ ॥
एवं ब्रह्मसुताद्व्यासः श्रुत्वा शिवकथामृतम् ।
पापसूदनमेवागाद्भक्तियुक्तेन चेतसा ॥ १२८ ॥
तत्र स्नात्वा महादेवं कपटेश्वरभावितम् ।
पूजयित्वा च तनयं लेभे ब्रह्मविदं शुकम् ॥ १२९ ॥
आगच्छतो गच्छतश्च तीर्थे तत्र महेशितुः ।
काष्ठरूपस्य साश्चर्यं चरितं कैर्न चर्च्यते ॥ १३० ॥

---

१. 'श्रीजम्बुकेश्वरः'.

कदाचिद्बहुभिर्वर्षैरागच्छन्कपटेश्वरः ।
करोति चिरमुत्कण्ठां श्रद्धापावनचेतसाम् ॥ १३१ ॥
प्रतिसंवत्सरं चैष आगच्छज्जातुचित्प्रभुः ।
दर्शनेनैव कुरुते जन्तून्विगतकिल्बिषान् ॥ १३२ ॥
पञ्चामृतादिभिर्देवं स्नापयेत्कपटेश्वरम् ।
कुङ्कुमेन प्रसूनैश्च पूजयित्वा समाहितः ॥ १३३ ॥
रुच्यैर्नैवेद्यसङ्घैश्च नृत्तगीतादिभिस्तथा ।
यो यः परिचरेदीशं स स रुद्रो न संशयः ॥ १३४ ॥
अत्र काष्ठमयो देवो वालखिल्यैस्तपोधनैः ।
अनेन स्तोत्रराजेन स्तूयते स्म दिवानिशम् ॥ १३५ ॥
ॐ वृक्षैरावृतकायाय पराय परमात्मने ।
नानारूपाय देवाय नमस्तुभ्यं स्वयंभुवे ॥ १३६ ॥
शिवाय शितिकण्ठाय सोमसूर्याग्निचक्षुषे ।
भीमाय भीमरूपाय भीषणायामृताय च ॥ १३७ ॥
चण्डाय चण्डरुद्राय चण्डशूलाग्रपाणये ।
योगिने ब्रह्मनिष्ठाय सर्वायुधधराय च ॥ १३८ ॥
उमायाः स्वामिने तुभ्यं पशूनां पतये नमः ।
ऋग्यजुःसाममन्त्राणां त्रैलोक्यपतये नमः ॥ १३९ ॥
चन्द्रसूर्याग्निमरुतामम्भसां पतये नमः ।
सिताय कृष्णवर्णाय पीताय कर्बुराय च ॥ १४० ॥
अरुणाय पिशङ्गाय सर्वोद्भवभवाय च ।
सवृषायोग्रकायाय सोमाय सगुहाय च ॥ १४१ ॥
सगणाय नमस्तुभ्यं नमस्तेऽस्तु सनन्दिने ।
गजेन्द्रवक्त्रसहितसभृङ्गिरिटये नमः ॥ १४२ ॥
विश्वैः साध्यैः सुतस्त्वं हि ब्रह्मणा केशवेन च ।
सततं स्तूयसे देवैर्ऋषिभिर्भावितात्मभिः ॥ १४३ ॥

स्तुत्यानां गुणसङ्घानां नान्तोऽस्ति तव शंकर ।
देवान्पितॄंश्च देवेश मुनीन्सिद्धान्प्रजापतीन् ॥ १४४ ॥
नियुनक्षि सदा देव स्वेषु स्वेष्वेव कर्मसु ।
योगिनां योगयोनिस्त्वं योगकर्ता च शंकर ॥ १४५ ॥
ध्रुवोऽव्ययो ह्यजो नित्यः संहर्ता भूतभावनः ।
विश्वरूपो ह्यनन्तश्च स्वनित्यो वृषवाहनः ॥ १४६ ॥
अजितो ह्यप्रमेयश्च लोकालोकप्रकाशकः ।
प्रभुर्वरेण्यो भगवान्वर्णाश्रमविभागवित् ॥ १४७ ॥
सुसूक्ष्मो ह्यव्ययो व्यापी भवार्णवतरिर्विभुः ।
त्वां न जानन्ति ये मूढा नैते यान्ति परां गतिम् ॥ १४८ ॥
जायन्ते च म्रियन्ते च कर्मभिर्विवशीकृताः ।
जितकामा जितक्रोधा जितद्वन्द्वा जितेन्द्रियाः ॥ १४९ ॥
त्वां ज्ञात्वा देहिनो नित्यं गच्छन्ति परमां गतिम् ।
त्र्यम्बकस्त्रिपुरेशानस्त्रिपुरघ्नो महीधरः ॥ १५० ॥
त्रिलोकपाता पर्जन्यः कालकामाङ्गनाशनः ।
ब्रह्मविष्ण्विन्द्ररुद्राणामन्येषां चैव देहिनाम् ॥ १५१ ॥
संहारकाले देवेश स्मृतिमाक्षिप्य तिष्ठसि ।
ध्येयस्त्वं योगनिष्ठानां मुनीनां भावितात्मनाम् ॥ १५२ ॥
स्तुतवन्तश्च ते सर्वे सर्वदुःखविनाशनम् ।
योगिनां योगसिद्धिस्त्वं योगस्योत्पत्तिकारकः ॥ १५३ ॥
तिष्ठ मे हृदये नित्यं वीर्यात्मा सुरसत्तमः ।
चक्षुषोर्हृदये चैव भ्रुवोर्मध्यगतस्तथा ॥ १५४ ॥
निष्कलं[1] ध्यायिनस्त्वां हि प्रपश्यन्ति सदाशिवम् ।
पञ्चधा त्वं शरीरेषु देहिनां संप्रतिष्ठसि ॥ १५५ ॥
प्राणायामैः क्षपयसे कल्मषं विश्वसंभवम् ।
ब्रह्मादीनां च देवानामन्येषां चैव देहिनाम् ॥ १५६ ॥

---

१. 'निष्फलं.'

सुखस्य दाता नान्योऽस्ति इति मे निश्चिता मतिः ।
अस्माकमपि देवेश कर्मण्युद्विग्नचेतसाम् ।
शरणं भव भीतानां संसाराध्वनि वर्तताम् ॥ १५७ ॥
नान्या गतिर्महादेव विद्यते शरणार्थिनाम् ।
मुक्त्वा तद्भक्तिमीशान शशाङ्ककृतशेखर ॥ १५८ ॥
[illegible]नुभिर्धारयस्येव जगत्स्थावरजङ्गमम् ।
नान्यं पश्यामि देवेश व्यापिनं सचराचरम् ॥ १५९ ॥
अङ्गुष्ठपर्वमात्राणां जातानां ब्रह्मतेजसा ।
तपसा च महादेवाद्वाञ्छितमुत्तमं वरम् ॥ १६० ॥
संसारार्णवमग्नानामिच्छतां विपुलं यशः ।
अस्माकं देवदेवेश प्रसादं कर्तुमर्हसि ॥ १६१ ॥
न ज्ञानं न च वा ध्यानं न तपो न च वै क्रतुः ।
सर्वभावविहीनानां शरणं त्वं महेश्वर ॥ १६२ ॥
ब्रह्मविष्णिवन्द्रगोप्ता त्वं ब्रह्मण्यो ब्रह्मवित्तमः ।
ब्रह्मचारी परं पात्रं नीलग्रीवो गुहाशयः ॥ १६३ ॥
एवं स्तुतो महादेवो वालखिल्यैरहर्निशम् ।
प्रीयते स महादेवः कपटेश्वरविग्रहः ॥ १६४ ॥
इदं पौराणिकस्तोत्रं वालखिल्यैर्विनिर्मितम् ।
कपटेश्वरदेवस्य प्रत्यहं यः पठेन्नरः ॥ १६५ ॥
तस्य रोगा विनश्यन्ति धनधान्यादि वर्धते ।
आयुश्च दीर्घतां याति संततिश्च प्रवर्धते ॥ १६६ ॥
भुक्तिमुक्तित्वमभ्येति संसारश्च विनश्यति ।
शृण्वतामपि सर्वेषामेतदेव फलं भवेत् ॥ १६७ ॥
यः कश्चित्पथि वा गच्छन्स्तोत्रमेतत्पठेन्नरः ।
स सर्वसिद्धिमाप्नोतीत्याज्ञा सत्या महेशितुः ॥ १६८ ॥
इदं पवित्रं दातव्यं पापिष्ठाय न जातुचित् ।
श्रद्धाभक्तिमनोज्ञाय दातव्यं सर्वथा पुनः ॥ १६९ ॥

---

१. अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमाश्रित्येदम्.

अहह भगवतश्चरित्रमेत-
त्किमपि विचित्रतमं महेश्वरस्य ।
कपटवपुरपि क्षणेन लोका-
न्रचयति यो विरमद्भवोपतापान् ॥ १७० ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ कपटेश्वरावतारवर्णनो नाम चतुर्दशः प्रकाशः ।

---

पञ्चदशः प्रकाशः ।

ओं श्री चण्डेशाय नमः ।

हेयाहेयमपद्वयप्रथनतश्चण्डेन रुद्र त्वया
वाह्यं यत्समधिष्ठितं मम मतिस्तत्स्पर्शतः पावनी ।
अद्वैतप्रथनादि घोरवपुषं त्वामेव देवाधुना
ध्यात्वैवं परिशुद्धिमेतु किमपि स्वातन्त्र्यशक्त्या तव ॥ १ ॥
न यत्प्रार्थयितुं शक्यं तद्ददाति महेश्वरः ।
अन्यः कारुणिकः कोऽस्ति सर्वशक्तिश्च तत्त्वतः ॥ २ ॥
कदाचित्स्वेच्छया देवो विहरन्गगनाध्वना ।
साश्चर्यया महादेव्या साभ्यर्थनमभाषत ॥ ३ ॥
भगवन्करुणाराशे विश्वोद्धरणतत्पर ।
मर्त्यानां क्रूररोगित्वं कर्मणा केन निर्मितम् ॥ ४ ॥
क्वचिदेते कुष्ठवन्तः क्वचिद्विकलदृष्टयः ।
क्वचिच्च शूलविवशाः क्वचिन्निश्चेष्टतां गताः ॥ ५ ॥
अन्येऽपि प्राणिनो भूम्ना क्रिमिपर्यन्तमीश्वर ।
भजन्ति वेदनां तीव्रां कुत्सितेष्वपि जन्मसु ॥ ६ ॥
इत्युक्ते परमेश्वर्या प्रत्युवाच महेश्वरः ।
सरोमाञ्चं गणैः सर्वैः प्रणमद्भिर्निरीक्षितः ॥ ७ ॥
जडत्वात्कर्म फलितुं न समर्थं क्वचिद्भवेत् ।
मन्नियत्या पुनः सर्वां विचित्रयति संसृतिम् ॥ ८ ॥

शरीरिणः स्वतस्तावत्प्राक्पिपासादिपीडिताः ।
तत्रापि रोगवैवश्ये कारणं शृणु दुःसहम् ॥ ९ ॥
पूर्वजन्मनि ये केचिदवलेपेन मानवाः ।
उल्लङ्घयन्ति निर्माल्यं शैवं तेषामसौ गतिः ॥ १० ॥
पुण्यं यत्किंचिदस्त्येषां जन्मान्तरशतार्जितम् ।
तन्निष्फलत्वं भजति निर्माल्योल्लङ्घनात्प्रिये ॥ ११ ॥
मन्त्रयोगज्ञानमूलाः सिद्धयो विविधाश्च याः ।
ता अपि ग्लानिमायान्ति मद्वाक्यान्नात्र संशयः ॥ १२ ॥
अथ शंभोर्गिरं श्रुत्वा प्राणिनामनुकम्पया ।
अभाषत महादेवी प्रणम्य रचिताञ्जलिः ॥ १३ ॥
भगवन्नखिलस्यापि भक्तलोकस्य संप्रति ।
उपदेशाय भाषस्व शैवनिर्माल्यचेष्टितम् ॥ १४ ॥
आकर्ण्येति महादेवो जगाद मधुराक्षरम् ।
दृष्ट्या प्रसादामलया ह्लादयन्नमृताभया ॥ १५ ॥
पुरा विप्रसुतः कश्चित्सुमत्याख्यो महीतले ।
पितुर्गाः पालयन्नासीद्बहुकालमितस्ततः ॥ १६ ॥
एकदा सिकतालिङ्गं कृत्वा भक्तिवशादसौ ।
पयोभिः स्नापयामास गवां तासां घटाहृतैः ॥ १७ ॥
यथायथं वर्धमानभक्तिः प्रत्यहमेव सः ।
लिङ्गस्नानाय निखिलं तत्पयः पर्यकल्पयत् ॥ १८ ॥
एवं समग्रे तद्दुग्धे तेन लिङ्गाय कल्पिते ।
अलब्धदुग्धप्रसरस्तत्पिता शोचति स्म सः ॥ १९ ॥
अथ गोपगणाद्बुद्ध्वा सुतवृत्तान्तमाकुलः ।
क तद्दुग्धमिति क्षोभं पिता तस्य समाययौ ॥ २० ॥
लिङ्गं विलोक्य स्नपितं पयसा स ततो द्विजः ।
लोभेन विह्वलो दूरात्सभ्रूभङ्गमभाषत ॥ २१ ॥

सिकतां पयसा सिञ्चन्मूढ किं नाम मन्यसे।
अवजानीहि मां गर्वात्समग्रपथवर्त्तिनम् ॥ २२ ॥
अरे बाल तवात्यर्थमस्थाने कोऽयमुद्यमः।
विचारयसि नास्माकमतिवाहमयं पयः ॥ २३ ॥
उक्त्वेति सिकता लिङ्गं क्रोधान्नाशयति स्म सः।
इतस्ततो विनिक्षिप्य पयोभाण्डानि चाभिनत् ॥ २४ ॥
अथ क्षीरं तथा लिङ्गं परिक्षिप्तवतः पितुः।
क्रोधान्धः सुमतिर्यष्ट्या जङ्घायां प्रजहार सः ॥ २५ ॥
सा यष्टिस्तत्करस्पर्शात्परशोर्भावमागता।
अवलेपेन तज्जङ्घामच्छिनद्बिसकन्दवत् ॥ २६ ॥
पितरि च्छिन्नजङ्घेऽथ पतिते नष्टचेतने।
पूजालिङ्गे प्रणष्टे च पश्चात्तापमवाप सः ॥ २७ ॥
अथासौ सुमतिस्तीव्रं तपः कर्तुं समुत्सुकः।
निराहारतया निन्ये बहुकालं स्थिराशयः ॥ २८ ॥
अथ व्यतीते बहुले काले सदृढनिश्चयः।
मामुद्दिश्य निजं वह्नावङ्गमङ्गं जुहाव च ॥ २९ ॥
स्वाङ्गानि जुह्वतस्तस्य तदानीं क्रूरकर्मणः।
मा मा चण्डेति कथयन्नहं वपुरदर्शयम् ॥ ३० ॥
मद्दर्शनवशात्तेन तदानीं फुल्लचक्षुषा।
दग्धान्यङ्गानि लब्धानि भक्तिपावनचेतसा ॥ ३१ ॥
तथाहं तस्य संचिन्त्य भक्तिं सर्वातिशायिनीम्।
स्थापयित्वा करं मूर्ध्नि वरमित्थमकल्पयम् ॥ ३२ ॥
शिवपूजोपकरणं रक्षता पुत्रक त्वया।
स्थिरनिश्चयचित्तेन सत्यमावर्जितं मनः ॥ ३३ ॥
तन्मदीयाज्ञया वत्स चण्डरुद्रगणो भव।
उच्छिष्टं शिवलिङ्गस्य भोजनाय तवास्तु च ॥ ३४ ॥
परं पवित्रं निर्माल्यं देवानामपि दुर्लभम्।

भक्ताय ते मया दत्तं भावनापूतचेतसे ॥ ३५ ॥
त्वदर्पितं परो भुङ्क्ते लोभलौल्यवशीकृतः ।
ब्रह्महत्यासमं पापमस्तु तस्य मदाज्ञया ॥ ३६ ॥
मल्लिङ्गोच्छिष्टमन्येषां देवानामपि दुर्जरम् ।
तस्मात्तदजरं दत्तं मया ते स्वेच्छया सुत ॥ ३७ ॥
स्पर्शनं लङ्घनं भोगो विक्रि(क्र)याद्यमथापि वा ।
मदाश्रयस्य यः कुर्यान्नरके स चिरं वसेत् ॥ ३८ ॥
यः कश्चिदवलेपेन निक्षिपेद्यत्र कुत्रचित् ।
वह्नावप्यवधानेन दहेत्स नरकं व्रजेत् ॥ ३९ ॥
नरके घोरघोराश्च लब्ध्वासंख्याः कदर्थनाः ।
जन्मान्तरं प्राप्नुवतो यदिहास्त्यस्य तच्छृणु ॥ ४० ॥
दौर्गत्यं स्पर्शनवशादधिवासेन च श्वता ।
चण्डालता भक्षणाच्च कुष्ठित्वं लङ्घनेन च ॥ ४१ ॥
उपेक्षणात्पादपत्वं दानात्क्रव्यादता भवेत् ।
श्वविष्ठायां क्रिमित्वं च हरणेन किरातता ॥ ४२ ॥
विक्रि(क्र)यादविधानेन दाहान्निक्षेपणादपि ।
श्वपाकत्वं फणित्वं च भवतीति न संशयः ॥ ४३ ॥
पूजाकाले प्रणमने भक्त्या संदर्शनादिषु ।
अधिवासो न दोषाय स्पर्शोऽप्यर्चाविसर्जने ॥ ४४ ॥
ग्रामो हट्टं धनं धान्यं वस्त्रमाभरणानि च ।
यद्यदन्यन्मदीयं च तत्त्वं तत्रासि रक्षिता ॥ ४५ ॥
यः कश्चित्तत्र कुरुते भक्षणाद्यं सुपातकम् ।
मृतो नरकमायाति लभते यातनास्तथा ॥ ४६ ॥
इहापि जन्म संप्राप्य तिर्यक्त्वादि प्रपश्य सः ।
रोगपीडितसर्वाङ्गो वैवश्यमवलम्बते ॥ ४७ ॥
यः प्रसादान्महादेवनिर्माल्यं जातु संस्पृशेत् ।

अघोरसेवां कुर्यात्स ततः शुद्धत्वमेष्यति ॥ ४८ ॥
तपोदर्शनसंतोषादित्युक्त्वा विरते मयि ।
सुमतिश्चण्डरुद्रत्वमाससाद स सादरः ॥ ४९ ॥
नमः स्वातन्त्र्यरूपेण पञ्चकृत्यविधायिने ।
भवते सततं कृत्स्नचेतसां चेतनात्मने ॥ ५० ॥
परस्परं व्यवच्छिन्नाः सर्वे भावा जडाजडाः ।
लभन्ते विपुलां सत्तां भवता संविदात्मना ॥ ५१ ॥
वाच्यवाचकरूपोऽपि वाच्यवाचकवर्जितः ।
भवानेव महादेव वैचित्रीमियतीं श्रितः ॥ ५२ ॥
स्तुवन्निति सभारब्धताण्डवः स तदा प्रिये ।
आलिङ्गितो नन्दिरुद्रप्रामुखैः प्रमथैश्चिरम् ॥ ५३ ॥
ततः प्रभृति निर्माल्यरक्षितास्ति ममाज्ञया ।
तस्माद्रक्ष्यं प्रयत्नेन तदुल्लङ्घनपातकम् ॥ ५४ ॥
दीक्षितस्यापि निर्माल्यलङ्घनात्पापमस्ति यत् ।
पुनर्दीक्षाप्रसादेन तन्नाशमुपगच्छति ॥ ५५ ॥
इत्थमुक्तवति त्र्यक्षे निर्माल्यविधिमद्भुतम् ।
देवी प्रसन्नवदना परितोषमुपागता ॥ ५६ ॥
नानाविधेषु शास्त्रेषु सर्वज्ञः करुणावशात् ।
अवर्णयत निर्माल्यं देवानामपि दुःसहम् ॥ ५७ ॥
पूर्वाम्नाये प्रसिद्धस्य विश्वानुग्रहकारिणः ।
श्रीहाटकेशभवनं प्रविष्टस्य प्रभावतः ॥ ५८ ॥
तन्निर्माल्यं स्वर्णपद्माधिवासेन गलत्स्वयम् ।
समस्तमेवमज्ञानं ब्रह्मविष्णुदुरासदम् ॥ ५९ ॥

इति निरवधिशास्त्रवर्णनेन
त्रिनयनलिङ्गमभग्नभक्तिसारः ।

य इह परिचरेत्स्वयं क एव
क्षि(क्ष)पयति संसृतिमुत्कटां क्षणेन ॥ ६० ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ चण्डरुद्रावतारो नाम पञ्चदशः प्रकाशः ।

---

षोडशः प्रकाशः ।

ॐ श्रीशिवाय नमः ।

विश्वाभासविधायिनी तव परा शक्तिः क्रियात्मा विभो
नक्षत्रग्रहमासतिथ्यृतुमयः कालोऽयमाभासते ।
संप्राप्ताभवदिच्छया प्रकटयन्त्येषां स्थितिं पञ्चधा
बंहीयःफलतां ममाद्य नयतु स्नानार्चनाद्याः क्रियाः ॥ १ ॥
कः किंनामोपकुरुते दुस्तरायां भवापदि ।
हेलया त्वनुगृह्णासि बहून्मत्वा महेश्वरः ॥ २ ॥
समेत्य मुनयः सर्वे नारदाद्यास्तपोधनाः ।
द्वादशीं द्वादशीं निन्युर्विष्णोरायतने शुभे ॥ ३ ॥
तैर्भक्तैर्मुनिभिर्दत्तां पूजां जग्राह केशवः ।
तुतोष च विशेषेण लक्ष्म्या सह मुहुर्मुहुः ॥ ४ ॥
अथ भाद्रपदे मासि द्वादश्यां ते कदाचन ।
पुष्पाण्यादाय पूजार्हमगच्छन्केशवालयम् ॥ ५ ॥
तैस्तत्र भक्तिविवशैर्लभ्यते स न केशवः ।
पूजोपकरणाम्लानिकातरैश्च व्यचिन्त्यत ॥ ६ ॥
प्रतिद्वादशि पूजां योऽन्वगृह्णच्च कृपापरः ।
अधुना स कथं विष्णुरस्माकं दूरतां गतः ॥ ७ ॥
एवं विचिन्तयत्स्वेषु कालेन बहुना हरिः ।
आजगाम चमत्कारविचित्रीकृतविग्रहः ॥ ८ ॥
दृष्ट्वा गोविन्दमायान्तं ते प्रणम्य पुनः पुनः ।
पूजां निवेदयामासुः प्रहृष्टेनान्तरात्मना ॥ ९ ॥

पूजयत्सु समस्तेषु कौतुकाक्षिप्तलोचनः ।
जगाद नारदो विष्णुं ललाटघटिताञ्जलिः ॥ १० ॥
प्रभो गोविन्द पूज्योऽसि प्रतिद्वादशि मादृशाम् ।
चिरेण दर्शनं दत्त्वा कथमद्य तु नेक्ष्यसे ॥ ११ ॥
अत्यर्थविनयादायिन्येवं पृच्छति नारदे ।
जगाद विष्णुः पीयूषमधुराक्षरया गिरा ॥ १२ ॥
विदितं सर्वलोकेषु महर्षे चेतनावताम् ।
यथा स्वार्थानुसंधानाद्भवन्त्येव प्रवृत्तयः ॥ १३ ॥
परार्थमुत्सृज्य जडः स्वार्थं हि बहु मन्यते ।
तस्मात्स्वार्थः परार्थश्चेत्येकार्थो वाग्विपश्चितः ॥ १४ ॥
शब्दवैचित्र्यमार्गेण वक्ता जातु न रुष्यति ।
अद्याहमीदृक्संसारविलोकनविशृङ्खलः ॥ १५ ॥
अनन्तशक्तिमीशानं द्रष्टुं कैलासमभ्यगाम् ।
पूजयित्वा महादेवं सदेवीकं पुनः पुनः ॥ १६ ॥
इह प्राप्तो मुनीन्द्राहं चिरेण निजमालयम् ।
प्रतिद्वादशि युष्माकं सन्निधाता भवाम्यहम् ॥ १७ ॥
श्रवणद्वादशि त्वद्य तदहं शंकरं श्रितः ।
इत्युक्तो विष्णुना तूर्णीं स्थितेष्वन्येषु चर्षिषु ॥ १८ ॥
पादावादाय शिरसा नारदो धीरमब्रवीत् ।
भगवन्मादृशां बुद्धिरणुमात्रं निरीक्ष्यते ॥ १९ ॥
लोकद्वयालोकनया त्वत्प्रज्ञा त्वतिरिच्यते ।
तस्मात्कृपां कुरु ब्रूहि श्रवणद्वादशीति का ॥ २० ॥
शंकरश्चैष को यस्य सेवकः स भवानपि ।
इति पृष्टो मुनीन्द्रेण जगाद गरुडध्वजः ॥ २१ ॥
शिवस्मरणहर्षास्तु गद्गदाक्षरया गिरा ।
प्रतिवर्षं भवन्त्येव द्वादश्यो द्वादशोत्तमाः ॥ २२ ॥

पक्षे सितेऽसिते श्रेष्ठाः श्रवणद्वादशी त्वियम् ॥ २३ ॥
अस्या भाद्रपदो मास ऋतुर्वर्षा बुधो ग्रहः ।
नक्षत्रं श्रवणं तस्मादियमुत्कर्षमर्हति ॥ २४ ॥
यदा यदेत्थं पञ्चानां भवेत्संघट्टना शुभा ।
तदा संनिहितः स्यात्स पञ्चशक्त्यात्मकः शिवः ॥ २५ ॥
नातः परतरो मासो नातः परतरा तिथिः ।
ऋतुर्नान्यो ग्रहो नान्यो नक्षत्रं नान्यदुत्तमम् ॥ २६ ॥
एवं मुनीन्द्र श्रवणद्वादशी संघटेत चेत् ।
पञ्चभिः शक्तिभिर्देवस्तत्प्रसीदति सेवितः ॥ २७ ॥
मयापि पूर्वं नाज्ञायि मुने संघटिताप्यसौ ।
अनुत्पन्नविवेकानां प्रसादः शंकरात्कुतः ॥ २८ ॥
एकदा भगवल्लिङ्गपूजैकाग्रमना अहम् ।
अत्यर्थमधुरं शब्दमारादश्रृणवं मुने ॥ २९ ॥
तच्छब्दश्रवणादन्तश्चमत्कारेण निर्भरः ।
पुरःस्थस्यापि लिङ्गस्य व्यस्मरं पूजनक्रियाम् ॥ ३० ॥
चिरेण स्मृतिमासाद्य शिवलिङ्गं प्रपूज्य च ।
तच्छब्दश्रवणश्रद्धापरतन्त्रस्तपो व्यधाम् ॥ ३१ ॥
महादेवमयं वाक्यं महादेवमयी स्मृतिः ।
आसीन्ममोपकरणं चिरकालं तपस्यतः ॥ ३२ ॥
अथापश्यं वृषारूढं देव्या सह महेश्वरम् ।
सिञ्चतममृतेनेव मां तपोवशतः कृशम् ॥ ३३ ॥
तद्दर्शनक्षणेनाद्य चास्मरं बत किंचन ।
अनुभूतचरः शब्दः स एव पुनरुद्ययौ ॥ ३४ ॥
तात्कालिकचमत्कारपरिपूरितलोचनः ।
अपश्यं च महादेवीं केवलामेव भावितः ॥ ३५ ॥
प्रीतास्मि कृष्ण भवतो वरमभ्यर्थयेप्सितम् ।
वदन्तीमिति तां स्मेरमपृच्छमहमानतः ॥ ३६ ॥

मातस्त्वद्दर्शनेनैव किं तत्प्राप्तं न यन्मया ।
किंत्वपूर्वो ध्वनिः कोऽयमिति सूनृतमुच्यताम् ॥ ३७ ॥
अथ तत्प्रार्थिता देवी कर्णपूरीकृतेक्षणा ।
आप्याययन्ती दृष्ट्यैव वक्तुमेवं प्रचक्रमे ॥ ३८ ॥
मासग्रहर्तुनक्षत्रतिथयः पञ्च पावनाः ।
यदा यदा संघटन्ते सन्निधानं तदा तदा ॥ ३९ ॥
मासो भाद्रपदस्तत्र बुधाख्यो ग्रहपुंगवः ।
ऋतुर्वर्षाश्च नक्षत्रं श्रवणं द्वादशी तिथिः ॥ ४० ॥
एते यदा संघटन्ते तदा देवो महेश्वरः ।
पञ्चमन्त्रतनुः सम्यक्सन्निधत्ते मया सह ॥ ४१ ॥
सर्वेषां दर्शनानां च तदेकं पावनं चिरम् ।
स्नानार्चनप्रदानादि तत्राधिकफलं भवेत् ॥ ४२ ॥
श्रवणद्वादशीत्येषा प्रसिद्धिमुपगच्छति ।
शिवरात्रिदिनस्यायमनुकल्पोऽधिगम्यताम् ॥ ४३ ॥
अमुष्मिन्दिवसे कृष्ण नरीनृत्यन्ति देवताः ।
तन्नूपुरध्वनिं भक्ताः शृण्वन्ति च मनोरमम् ॥ ४४ ॥
तत्त्वया शिवभक्तेन श्रवणद्वादशीदिने ।
श्रुतश्चमत्कारकरो देवतानूपुरध्वनिः ॥ ४५ ॥
अहं देवश्च देव्याश्चेत्यभिन्नं कृष्ण शासनम् (?) ।
विमोहितस्तु भेदेन जानते नैव किंचन ॥ ४६ ॥
श्रवणद्वादशीत्येषा सर्वेप्सितविधायिनी ।
देवतानां समग्राणां जीवितेनातिरिच्यते ॥ ४७ ॥
न क्वचित्पञ्चरहितं पञ्चपञ्चात्मकं दिनम् ।
इति ज्ञात्वा तदा शैवैः स्वमन्त्रः पूज्यतेतराम् ॥ ४८ ॥
कुमार्यः पूजनीयाश्च यथाशक्ति शुभार्थिभिः ।
स्वयं सन्निहितस्तासु देवदेवो मया सह ॥ ४९ ॥
तपस्विनश्च संपूज्यास्तद्रूपेण महेश्वरः ।

गृहस्थाननुगृह्णाति भिक्षामादाय भावितान् ॥ ९० ॥
क्रीडयैव हि देवेशो रूपैस्तैस्तैरितस्ततः ।
अनुगृह्णाति गोविन्द केवलं वा मया सह ॥ ९१ ॥
शिवस्येदं व्रतमिति ज्ञात्वा पूज्यास्तपस्विनः ।
नानाविधाभिश्चर्याभिः शिव एव तु तादृशः ॥ ९२ ॥
एकायनेन चित्तेन यः शैवं मार्गमाश्रितः ।
स शिवो ब्राह्मणो ज्ञेयः स च पूज्यः प्रयत्नतः ॥ ९३ ॥
गौः क्षीरपूर्णा छत्रं च पादुके हेमभाजनम् ।
धनं धान्यं च दातव्यं वित्तशाठ्यविवर्जितैः ॥ ९४ ॥
ददाति यद्यदेतस्मिन्दिवसे शुद्धमानसः ।
तस्य तस्य फलं लक्षगुणं प्राप्नोति मानवः ॥ ९५ ॥
तदेषा श्रवणद्वादश्याख्याता ते मया स्वयम् ।
भोगमोक्षार्थिभिश्चैव यज्य(?)मस्यां स्वदर्शनम् ॥ ९६ ॥
अयं भाद्रपदो मासस्तद्वशात्पावनोऽभवत् ।
आश्विनस्याप्याद्यपक्षे पितॄणां तत्र सन्निधिः ॥ ९७ ॥
जातुविज्जातुचित्तत्र श्रवणद्वादशीदिनम् ।
पक्षस्त्वाश्वयुजस्याद्यः पितृसन्निधिकृत्सदा ॥ ९८ ॥
आश्विनी शुक्लनवमी पूजनीया जगत्त्रये ।
देवीनां सन्निधिवशान्महत्पूर्वा प्रकीर्तिता ॥ ९९ ॥
सदैव साधकादीनामभीष्टफलदायिनी ।
अस्यां नक्षत्रवेलादिनियमो नैव विद्यते ॥ ६० ॥
भक्तानां सिद्धिकामानां मातेव परिरक्षिणी ।
तस्मात्पूज्या विशेषेण सा महानवमी सताम् ॥ ६१ ॥
इदानीं कृष्ण किमपि प्रार्थयस्व गिरा मम ।
देव्येत्थमुक्ते देवेशमपि तत्र व्यलोकयम् ॥ ६२ ॥
देवेशं देवदेवीं च पुनः पुनरथानमम् ।

लिङ्गस्य भक्तौ दार्ढ्यं च प्रार्थये स कृताञ्जलिः ॥ ६३ ॥
अभिलाषमिमं श्रुत्वा महादेवो मया ययौ ।
प्रसादमाप्तवन्तौ तावेवमस्त्विति मद्गिरा ॥ ६४ ॥
येषामन्तरहं लिङ्गाकृति तिष्ठामि केशव ।
देवीं च पीठरूपेण त्वद्भक्तिपरितोषिता ॥ ६५ ॥
इत्युक्त्वा भगवान्देव्या सह तत्र तिरोदधे ।
अहमप्यग्रकरगाण्यपश्यं कुसुमान्यथ ॥ ६६ ॥
तेषामन्तर्महादेवलिङ्गं पीठोपरिस्थितम् ।
निरीक्ष्य तपसः पूर्णफलमज्ञासिषं तदा ॥ ६७ ॥
ततः प्रभृत्यहं रुद्र श्रवणद्वादशीदिने ।
भगवत्पादसेवार्थं गच्छामि स्फटिकाचलम् ॥ ६८ ॥
अद्य प्रभुं चन्द्रमौलिं सेवितुं मयि गच्छति ।
मुनीन्द्र भवतस्तस्माद्विलम्ब इति निश्चयः ॥ ६९ ॥
सदा पञ्चविधं कृत्यमक्रमेण करोति यः ।
स शंकरः समग्राणां सेव्यः सर्वत्र मादृशाम् ॥ ७० ॥
इत्युक्ते विष्णुना तत्र भगवच्चरिताद्भुते ।
नारदः सादरतया भक्तिं पप्रच्छ शांकरीम् ॥ ७१ ॥
उपदेशात्ततो विष्णोर्नारदाद्यैस्तपोधनैः ।
भगवद्भक्तिरेवाप्ता लोकद्वयविशोधिनी ॥ ७२ ॥
नारदो जगतामीशस्ततःप्रभृति सेवते ।
अन्येऽपि मुनयो गाढपरभक्तिपवित्रता ॥ ७३ ॥
इति चरितमकृत्रिमाभिरामं
किमपि विचार्य सदा महेश्वरस्य ।
परिचरति दुराशयो परं यो
भजति स एव भवाम्बुराशिमग्नः ॥ ७४ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ श्रवणद्वादशीवर्णनो नाम षोडशः प्रकाशः ।

सप्तदशः प्रकाशः ।

ॐ नमः श्रीशिवाय भक्तानुग्रहतत्पराय ।

देहप्राणमनोमयेन भगवन्रक्षस्त्रयेणामुना
सर्वे पङ्करुहासनप्रभृतयो न्यग्भावमापादिताः ।
स्वामिन्योजय तद्बलेन सहजेनाद्यैव मां यद्वशा-
द्विश्वस्याभयमावहामि तदधःकारेण तार्क्ष्यो यथा ॥ १ ॥

मायाविनां भवेत्प्रज्ञा परबाधाय केवलम् ।
मायोज्झितः पुनः शंभुः परित्राणाय देहिनाम् ॥ २ ॥
सुराणामसुराणां च पुरा सङ्ग्रामकर्मणि ।
परस्परजयामर्षात्प्ररूढिमुपगच्छति ॥ ३ ॥
मायाशम्बरिको[1] नाम्ना हेरुकाख्यश्च दारुणः ।
आदिबुद्धाभिधानश्चेत्यसुरास्त्रय आसते ॥ ४ ॥
अष्टौ शिरांसि चत्वारः पादाः षोडश बाहवः ।
नैरात्म्यालिङ्गितस्यासँस्तस्य हेरुकरक्षसः ॥ ५ ॥
एकैकपात्रसंनद्धहस्ताः षोडश राक्षसीः ।
अभितः संदधौ पात्रं तस्य हेरुकरक्षसः ॥ ६ ॥
केचिन्मध्यमनामानाः केचिन्मन्त्रनयात्मकाः ।
भ्रममोहात्मकाः केचिन्मिथ्याज्ञानात्मकाः परे ॥ ७ ॥
केचन श्रावकात्मानो बुद्धाः स्त्रीसंयुताः परे ।
लोकानुपप्लावयितुं हेरुकं पर्यवारयन् ॥ ८ ॥
वज्रडाकाविति ख्यातौ तदा हेरुकशम्बरौ ।
आदिबुद्धेन सहितौ सुराणां चक्रतुर्भयम् ॥ ९ ॥
निर्जित्य देवानखिलान्सहसा ते निशाचराः ।
स्वर्गं विनाश्य निःशेषं तस्थुर्हेमाद्रिमूर्धनि ॥ १० ॥
अनाथास्तत्क्षणं सर्वे दीनदीनाः शरीरिणः ।
तानेव शरणं जग्मुरपास्यन्तश्च रक्षकान् ॥ ११ ॥

---

१. 'शंभरिको' ख.

निशाचरास्तदायातेष्वमरेषु यतस्ततः ।
सर्वे प्रविष्टाः शरणं वीक्ष्य गर्वमवाप्नुवन् ॥ १२ ॥
न्यवारयन्क्रियां धर्म्यां निनिन्दुः सुरपुंगवान् ।
स्वचेष्टां प्रथयामासुर्मोहोपहतचेतसः ॥ १३ ॥
अथ सर्वासु नष्टासु क्रियासु चतुराननः ।
देवैः सह महादेवं प्रभुं शरणमग्रहीत् ॥ १४ ॥
स्तुतीश्चक्रुर्महेशस्य सुपर्वाणः सहस्रशः ।
वक्त्रैश्चतुर्भिः प्रणमन्नुवाच जलजासनः ॥ १५ ॥
भगवन्पूर्णशक्तिस्त्वं कथं विज्ञायसे मया ।
स्वेच्छयैव समग्राणामभयं दातुमर्हसि ॥ १६ ॥
इति श्रुत्वा वचस्तस्य तदानीमुदितस्मितः ।
अखण्डशक्तिर्भगवानभयं प्रत्यपद्यत ॥ १७ ॥
अस्मिन्नवसरे विष्णोर्भगवन्निकटस्पृशः ।
अनुगामी वैनतेयोऽप्याह दानवजं भयम् ॥ १८ ॥
भगवान्गरुडं दृष्ट्वा तद्भयक्षामकन्धरम् ।
हसन्नुवाच निःशेषसुराभयमयीं गिरम् ॥ १९ ॥
वैनतेय भवान्गच्छत्वधुनैव ममाज्ञया ।
विजित्य राक्षसबलं स्वस्थानं प्रापयामरान् ॥ २० ॥
तां श्रुत्वा परमेशस्य वाणीं विहगपुङ्गवः ।
दुर्बलोऽहं कथं शक्तो जेतुमित्यब्रवीन्नमन् ॥ २१ ॥
अथ देवः कराग्रेण गरुत्मानं परिस्पृशन् ।
बलेन योजयामास स जगाद कृपापरः ॥ २२ ॥
इदानीं गरुड त्वं हि क्षमोऽसि वचसा मम ।
विजयस्व महापापान्बलेन रजनीचरान् ॥ २३ ॥
ततः संपूर्णसामर्थ्यो गरुडः समपद्यत ।
महादेवस्य कर्तृत्वमहो सर्वत्र जृम्भते ॥ २४ ॥
गरुत्मानमरैः साकं विसृष्टोऽथ महात्मना ।

रासभीरूपमाश्रित्य मेरुं विपरिवर्तयन् ॥ २५ ॥
त्रिर्वेष्टितेन पुच्छेन कृतरावस्तदूर्ध्वगान् ।
त्रीन्राक्षसान्सकटकान्प्रेतलोके न्यपातयत् ॥ २६ ॥
स्वे स्वे स्थाने सुरान्सर्वान्संस्थाप्य विनतासुतः ।
प्रणन्तुमगमद्देवमर्धचन्द्रशिखामणिम् ॥ २७ ॥
भक्तस्य वैनतेयस्य भगवान्दर्शनं ददौ ।
प्रवर्तते नावलेपः श्रद्दधानेषु धूर्जटेः ॥ २८ ॥
पप्रच्छाथ महेशानं गरुडो भक्तिनिर्भरः ।
निशाचराः कीदृशास्ते यैरिदं मोहितं जगत् ॥ २९ ॥
इत्याकर्ण्य महादेवो गरुडं वीक्ष्य चादृतम् ।
यथास्थितं वर्णयितुं प्रारेभे भक्तवत्सलः ॥ ३० ॥
कर्तव्यः सर्वदा धर्मो लोकद्वयहितैषिभिः ।
ततो भवेच्छुभफलं प्राप्नोत्यात्मा शरीरिणाम् ॥ ३१ ॥
आत्मैव नास्तीति जडैरुक्त्वा तैरसुराधमैः ।
उन्मूलितः समस्तोऽयं धर्मः शून्यालयैर्हठात् ॥ ३२ ॥
मन्निन्दामेव कुर्वन्ति परलोकं न मन्यते ।
कापथेन नयन्त्यन्यानपि चित्तप्रवेशतः ॥ ३३ ॥
यो मां निन्दति मोहेन वचसा हृदयेन वा ।
स निमज्जति पापीयान्दुस्तरे नरकार्णवे ॥ ३४ ॥
स्तौति मां यो विशेषेण पावनात्मा जगत्त्रयम् ।
तस्याभयं प्रयच्छामि विधेयो नात्र संशयः ॥ ३५ ॥
मां स्तुवन्नपि यः कश्चिदन्यदर्शनभावितः ।
स निर्विवेको लभते प्रसादं नैव मामकम् ॥ ३६ ॥
तस्मादेकायनं चित्तं विधायैव यथाविधि ।
यो मामर्चयते भक्त्या तस्य तुष्यामि धीमतः ॥ ३७ ॥
यस्यास्ति चपलं चित्तं स कुत्रापि न युज्यते ।
तस्मात्स्थिरेण भावेन श्रद्धेयां कृतिनामहम् ॥ ३८ ॥

चतुर्वेदीपरिज्ञाता प्रियो मम न जातुचित्।
यः श्वपाकोऽपि मद्भक्तः स मत्तो नावशिष्यते॥ ३९॥
विपश्चितां मते जातिर्नास्त्येव परमार्थतः।
तन्मात्रजीवितानां तु ब्राह्मणानां शिवं कुतः॥ ४०॥
ब्राह्मण्यं कौशिकस्यास्ते प्रकृष्टेनैव कर्मणा।
कुकर्माणश्च बहवो जातिमात्रादपावनाः॥ ४१॥
ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणो जातिपावनः।
चापलाच्चेतसस्तस्य बीजशुद्ध्या च कीदृशः॥ ४२॥
उत्कृष्टश्च द्विजः श्राद्धं प्रसिद्धस्यावहन्पितुः।
'यन्मे माता प्रलुलुभे' इत्याद्यां हि पठेदृचम्॥ ४३॥
तस्मादेवंविधा जातिः कर्म जानीहि सर्वथा।
शुभाशुभफलं येन विशिष्यन्ते शरीरिणः॥ ४४॥
उत्पत्तिर्ब्रह्मणो वक्त्राद्ब्राह्मणानामिति श्रुतिः।
ब्रह्मा मे चरणाज्जातो भक्तः स्वात्मैव नापरः॥ ४५॥
ब्राह्मणेभ्यः प्रकृष्यन्ते मद्भक्ता इति निश्चयः।
यदेषां यज्ञलक्षेण तदेषां मद्विलोकनात्॥ ४६॥
मद्भक्तो ब्रह्मवेदित्वाद्ब्राह्मणः परिकीर्तितः।
एवं पात्रं न दानस्य न जातिब्राह्मणः पुनः॥ ४७॥
तपस्विनोऽपि मद्भक्ताः पूजनीयाः शिवद्विजाः।
मय्यभक्ताः पुनर्जातिद्विजा एवेति निश्चयः॥ ४८॥
दर्शनान्तरमुत्सृज्य ब्राह्मणो मयि भावितः।
शिवब्राह्मण एवोक्तस्तस्मै ज्ञेयं[1] च मद्गिरा॥ ४९॥
अदर्शनमनुष्ठाय मामभ्यर्चेति यो द्विजः।
उभयभ्रष्टतामेत्य स न क्वचन भावितः॥ ५०॥
तन्मामाराधयति यो देयं तस्मै शिवार्थिभिः।
विप्रो भवतु वा मा वा नेयं शैवत्वखण्डना॥ ५१॥

---

१. 'देयं' इति भवेत्.

अदीक्षितोऽपि मन्नाम स्मरन्ननिशमेव यः ।
तस्य सर्वातिशायित्वं विभूतिर्भवति स्वयम् ॥ ९२ ॥
वेदाद्यपि मयैवोक्तं ब्रह्मादीनां हितावहम् ।
अनन्तरं शिवज्ञानमपि लोकोत्तमं स्वयम् ॥ ९३ ॥
इत्युक्ते परमेशेन भूमिक्षिप्तशिरास्ततः ।
रोमाञ्चविवशीभूतपक्षतिर्गरुडोऽब्रवीत् ॥ ९४ ॥
भगवन्निदमाश्चर्यमुपदिष्टं त्वयैव चेत् ।
वेदादिकमदः सर्वं विशेषस्तर्हि किं कृतः ॥ ९५ ॥
विश्वानुग्रहकारी त्वमेक एव महेश्वरः ।
उत्कृष्टमपकृष्टं च तत्किमित्युपदिश्यते ॥ ९६ ॥
तव सर्वे कृपाक्षेपं ब्रह्मविष्ण्वादयः सुराः ।
उपदेशः किमित्येष भिन्नभिन्नः प्रकल्पितः ॥ ९७ ॥
इति मे कथ्यतां नाथ संशयो बलवान्स्थितः ।
त्वमेक एव सर्वज्ञस्त्राणं तत्करुणां कुरु ॥ ९८ ॥
श्रुत्वैव वैनतेयस्य वाचं कारुणिकः शिवः ।
उवाच दन्तप्रभया संहरन्मोहशर्वरीम् ॥ ९९ ॥
साधु प्रोक्तं त्वया पुत्र विष्णौ ब्रह्मणि वा परे ।
निर्विशेषैव मे दृष्टिरिति सत्यतमं वचः ॥ ६० ॥
किंत्वाधारानुसारेण समग्रमुपदिश्यते ।
श्रोता च गृह्यते तस्माद्योग्यतैव विचार्यते ॥ ६१ ॥
संसारः स्थितिमूलोऽयं स्थितिर्वेदसमाश्रया ।
वेदा मयोपदिष्टास्तु प्रथमं पद्मजन्मने ॥ ६२ ॥
पद्मजन्मा तथैवायं सृष्टिभावेन योजितः ।
स सृजन्नेव संसारं प्रवर्तयति सर्वतः ॥ ६३ ॥
नारायणोऽपि स्थितिकृत्संसारस्य मदिच्छया ।
वेदोक्तमेव पन्थानं समग्रं प्रतिपद्यते ॥ ६४ ॥

ब्रह्मणा प्रथमं सृष्टाः प्रजापतय उत्तमाः ।
तेषां च वैदिको मार्गो निखिलः प्रकटीकृतः ॥ ६५ ॥
ततोऽपि मुनयस्ते ते सृष्टाः संसारमण्डले ।
वेदा एव परं तेषां करणीयं दिवानिशम् ॥ ६६ ॥
क्रमश्चतुर्दशविधः सर्गो निष्पत्तिमागतः ।
मदिच्छया पद्मयोनेः स्थितौ जागर्ति चाच्युतः ॥ ६७ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इत्यपि वेधसा ।
चत्वारः कल्पिता वर्णाः परस्परविभेदिनः ॥ ६८ ॥
परस्परं संकरतस्तेषां वर्णान्तरोदयः ।
इति संक्षेपतः पुत्र विद्धि संसारमण्डलम् ॥ ६९ ॥
संसारमण्डलस्यास्य स्वरूपं वैदिकी क्रिया ।
तदुक्तेनैव मार्गेण प्रवृत्तिः सर्वदेहिनाम् ॥ ७० ॥
यज्ञाः क्रियन्ते विविधास्तैः स्वर्गादिकमाप्यते ।
क्रमात्ततश्च पतनं गतिश्चान्येन कर्मणा ॥ ७१ ॥
निवर्तयन्ति निःशेषं जन्म संसारमण्डले ।
पशुवद्भोगमात्रोत्काः सर्व एव शरीरिणः ॥ ७२ ॥
कदाचित्कश्चिदायाति खेदं तत्र सचेतनः ।
अनेकजन्ममरणभ्रमणेन मुहुर्मुहुः ॥ ७३ ॥
तस्य क्षणे क्षणे चैव वासनोदेति काचन ।
या जन्ममृत्युरूपस्य संसारस्य निकृन्तिनी ॥ ७४ ॥
तस्य चेतः सविस्तीर्णं संसारोन्मूलनक्षमम् ।
उत्कृष्टस्योपदेशस्य योग्य आधार उच्यते ॥ ७५ ॥
रोहन्ति तत्र सद्वाक्यान्युत्कृष्टानीति निश्चयः ।
अनाधारे तु नश्यन्ति मरुप्रत्युप्तबीजवत् ॥ ७६ ॥
प्रथमं वैदिको मार्गो मत्तः प्राप्तो निरन्तरः ।
ब्रह्मविष्णुप्रभृतिभिरनेकैरेव देहिभिः ॥ ७७ ॥

संसारनिर्वेदवशात्क्रमशः साधुवासनैः ।
शिवज्ञानामृतप्राप्तावभिलाषः प्रकल्प्यते ॥ ७८ ॥
अन्यत्समग्रं संचित्य शिवज्ञानाभिलाषिणाम् ।
तेषां प्रदर्शितो मार्गः क्रमशोऽपि मया द्विज ॥ ७९ ॥
तस्मान्न रागद्वेषाभ्यां प्रवृत्तिर्मम जातुचित् ।
आधारं वीक्ष्य सर्वस्य भिन्नभिन्नोपदेशतः ॥ ८० ॥
वेदं सांख्यं योगशास्त्रं शैवं शाक्तमतं त्रिकम् ।
उपदेशमतोऽप्यन्यदहमेव निजेच्छया ॥ ८१ ॥
स सर्व एव स्वातन्त्र्यशक्त्या संकल्पितो मया ।
यो यो मार्गोऽस्ति मायीयो मायी यो वा विमृश्यताम् ॥ ८२ ॥
सर्वैर्यज्ञसहस्रेण यत्स्थानं प्राप्यते चिरात् ।
तत्क्षणेनैव शैवैस्तन्मयि पुष्पसमर्पणात् ॥ ८३ ॥
गोसहस्रप्रदानेन लभते वैदिकेन यत् ।
संमार्जनप्रदानेन तद्भक्तस्य मदालये ॥ ८४ ॥
समग्रतीर्थस्नानेन यत्फलं श्रुतिवादिनः ।
तल्लक्षगुणमाप्नोति भक्तो धूपेन मां यजन् ॥ ८५ ॥
व्रतानि कुर्वन्सर्वाणि वैदिकं यत्फलं श्रयेत् ।
तत्कोटिगुणमाप्नोति यजन्नर्घ्येण मां नरः ॥ ८६ ॥
पाठावबोधौ कुर्वाते चातुर्वेदद्विजस्य यत् ।
तदर्बुदगुणं जन्तोर्यजतश्चन्दनेन माम् ॥ ८७ ॥
हेमरत्नावृतां भूमिं दाता श्रोता च यत्फलम् ।
तत्पराध्यर्गुणं दीपदानात्स लभते नरः ॥ ८८ ॥
यो मां पूजयते भक्त्या पूजितं यश्च पश्यति ।
प्रशंसिता तयोर्यश्च ते त्रयोऽपि गणा मम ॥ ८९ ॥
मायया यो व्यवहरत्यसत्यं तेन कथ्यते ।
मद्भारती तु सत्यैवेत्युक्तं प्रत्यागमं मया ॥ ९० ॥

केषांचिद्दूषिता बुद्धिरर्थवादादिशङ्कया ।
येऽपि श्रयन्ति वेदोक्ता मदुक्तीर्मन्दबुद्धयः ॥ ९१ ॥
शुभाशुभत्वं मद्वाक्यात्कर्तव्येषु व्यवस्थितम् ।
अकिंचित्कर एवास्तामर्थवादविमोहितः ॥ ९२ ॥
यथा ममेच्छा प्रसरेत्तथा विश्वं प्रवर्तते ।
तन्ममेच्छोदिता वाणी कथं याति विपर्ययम् ॥ ९३ ॥
असत्यवादिनं मां यो मन्यते दुष्टचेतनः ।
अर्चयत्येव मिथ्या स तत्फले तस्य का प्रथा ॥ ९४ ॥
मदर्चकोऽपि मद्वाक्यमसत्यं कथयेत यः ।
तिरोहितः स विज्ञेयस्तत्स्पर्शात्पातकं भवेत् ॥ ९५ ॥
दर्शनानि समग्राणि मयोक्तानि निजेच्छया ।
असत्यं मन्यमानैस्तु कष्टमात्मैव वञ्चितः ॥ ९६ ॥
मयि पुष्पार्पणाद्यज्ञसहस्रफलमुच्यते ।
इच्छयैव तदा चेन्न कर्तृत्वे कर्हि कः क्रमः ॥ ९७ ॥
स्वातन्त्र्यं मम कर्तृत्वं यदिच्छामि करोमि तत् ।
उपादानं न चेद्भिन्नं न तदस्तीति निश्चयः ॥ ९८ ॥
लोकोत्तीर्णेषु सर्वेषु दर्शनेषु मयोदितम् ।
नामस्मरणमात्रेण मुक्तिरित्यत्र नान्यथा ॥ ९९ ॥
तस्माद्विधेयो मद्वाक्ये समाश्वासो विपश्च(श्चि)ता ।
तदुक्तं च फलं प्राप्तं पूजा कार्या यथाविधि ॥ १०० ॥
फलाभिसंधिमुत्सृज्य यैः पूजा क्रियते मयि ।
तैर्मद्वाक्यसमाश्वस्तैः प्राप्यमत्युत्तमं पदम् ॥ १०१ ॥
नानाविधानि शास्त्राणि मयैवोक्तानि तत्त्वतः ।
तत्र ब्राह्मणभावेन नापरस्य प्रकल्पना ॥ १०२ ॥
तस्य वृत्तिर्मयैवोक्ता श्रुतिस्मृतिमये पथि ।
अन्यथा वर्तते यस्तु ब्राह्मणो न स कथ्यते ॥ १०३ ॥

शूद्रान्नं यो द्विजो भुङ्क्ते स शूद्रो न पुनर्द्विजः ।
इत्यादिभिरुक्तिशतैः[1] कृतं ब्राह्मणलक्षणम् ॥ १०४ ॥
इत्युक्त्वा भगवान्दृष्टिं मुमोच विनतासुते ।
ततः शिवशिवालापक्षीणनिःशेषकल्मषे ॥ १०५ ॥
भगवन्दृष्टिपातेन सुपर्णमनुगृह्य सः ।
अन्तर्दधे महादेवः स्मितसिक्ताधरः प्रभुः ॥ १०६ ॥
किमपि किमपि जैत्रमेकमेव
त्रिषु भुवनेषु विलोक्य चन्द्रमौलिम् ।
अभिलषति परं न जातु बुद्धिः
क्वचन विवेकवतामिति प्रतिज्ञा ॥ १०७ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ गरुडानुग्रहो नाम सप्तदशः प्रकाशः ॥

---

अष्टादशः प्रकाशः ।

ॐ नमो विघ्नहर्त्रे श्रीशिवाय ।

बिभ्रत्पञ्च मुखानि योऽयमुदितः स्वातन्त्र्यमत्रात्मनः
शक्तेर्वैभवतः परप्रतिहतद्वैताख्यविघ्नव्ययः ।
एकीभूतसुखः स कारणगुणानुग्राहिणा तेजसा
देवः संप्रति भासतां मयि यथा तत्त्वं गुणाधीश्वरः ॥ १ ॥
सर्वत्र सर्वदा विघ्नैः किं किं यन्न तिरस्कृतम् ।
तन्निराकुर्वतः शंभोर्दयालुत्वं प्रकल्पता ॥ २ ॥
कैलासशैले विलसन्कदाचित्परमेश्वरः ।
चन्द्रप्रभाभिधानायां पुर्यां देव्या सहावसन् ॥ ३ ॥
मन्दारकुसुमाक्रान्ते वैदूर्यमणिमण्डले ।
देव्या सह रहः क्रीडां तत्र चक्रे महेश्वरः ॥ ४ ॥
रतश्रान्ता ततो गौरी लीलावापीमुपासरत् ।
सर्वाङ्गोद्वर्तनं तत्र निचिक्षेप च वारिणि ॥ ५ ॥

---

१. 'ग्रन्थशतैः' ख.

तदुद्वर्तनमादाय दीर्घिकाजलमाशु च।
पूर्णार्णवे विनिक्षिप्तं दासीभिर्गगनाध्वना॥ ६॥
तत्पयो निपतत्तत्र गङ्गासागरसङ्गमे।
मालिनीति पपौ गौरीशापाद्गजमुखी स्थिता॥ ७॥
तदुद्वर्तनपानेन सूत्वा हस्तिमुखं सुतम्।
अवाप सापि शापान्तं पार्वत्या पूर्वकल्पितम्॥ ८॥
अथ सा मालिनी दृष्ट्वा स्वपुत्रं कुञ्जराननम्।
जातं शुक्लचतुर्दश्यां वैशाखे मुमुदेतराम्॥ ९॥
सर्वभूतपतिर्भूया इत्युक्त्वा सा निजात्मजम्।
न्यवेदयत पार्वत्यै सर्वं कैलासभूभृति॥ १०॥
अथ पञ्चमुखं तीक्ष्णपरशुं वह्नितेजसम्।
व्यलोकयत सा तत्र जाह्नवी कुञ्जराननम्॥ ११॥
मम पुत्रोऽयमित्युक्त्वा तं जग्राह सुरापगा।
स्नेहाच्च वर्धयामास पयःपूर्णपयोधरा॥ १२॥
गृहीतं गङ्गया दृष्ट्वा समुद्रस्तमभूषयत्।
मणिमालाशतैर्मुक्ताहारैरपि निरन्तरैः॥ १३॥
अस्मिन्नवसरे देवी मालिनीवचनेन सा।
आजगाम महादेवसहिता प्रमथान्विता॥ १४॥
ततोऽब्रवीन्महादेवः सुतोऽयं तव सुन्दरि।
यदुद्वर्तनचूर्णत्वे वीर्यमास्तावयोरिति॥ १५॥
मर्त्यानां वाञ्छितं दातुं सर्वकार्येष्वथेश्वरः।
तमञ्जनगिरौ हस्तिवक्त्रं राज्येऽभिषेचयत्॥ १६॥
ततः करिमुखं कश्चिदुवाचादृष्टविग्रहः।
अनर्चितस्त्वं कस्यापि सिद्धीर्मा साधयेरिति॥ १७॥
एवमस्त्विति तद्वाक्यमङ्गीचक्रे गजाननः।
पूजितः कामदो भूया इत्युवाच च जाह्नवी॥ १८॥

अथ सर्वे सुरास्तत्र पूजयित्वा गजाननम् ।
ब्रह्मविष्णुप्रभृतयो भाषन्ते स नताः पुरः ॥ १९ ॥
भगवन्राक्षसा यक्षा दैत्या दुष्टाश्च ये नराः ।
तेऽस्मान्सदैव बाधन्ते त्वं तेषां विघ्नदो भव ॥ २० ॥
प्रत्यपद्यत तेषां स वचनं तद्गजाननः ।
ततो मुमुदिरे देवाः कार्यसिद्धिनिरूपणात् ॥ २१ ॥
इत्थं यः पूजयेद्भक्त्या शिवपुत्रं गणाधिपम् ।
स सिद्धीर्लभते विघ्नास्तं बाधन्ते न जातुचित् ॥ २२ ॥
क्रीडन्भगवतोरग्रे गुहेन सह जातुचित् ।
क्षोणीं प्रदक्षिणयितुं पणं चक्रे गजाननः ।
दन्ताकर्षणमाचख्यावात्मनो गणनायकः ॥ २३ ॥
गौरीं प्रदक्षिणीचक्रे निमिषेण षडाननः ।
जग्राह दक्षिणे पाणौ महामुसलसन्निभम् ॥ २४ ॥
अभाषत ततो गङ्गा साधु साधु गणाधिप ।
सत्यव्रतस्त्वं विश्वस्मिन्पूज्यभावमवाप्स्यसि ॥ २५ ॥
माता हि पृथिवी स्वर्गः पिता ते परिकीर्तितः ।
जानाति पृथिवीमेव तत्कुमारः स्वमातरम् ॥ २६ ॥
एवं तच्चरितं दृष्ट्वा प्रजहर्ष महेश्वरः ।
अभाषत च पीयूषसुकुमारमिदं वचः ॥ २७ ॥
दर्शनेषु समग्रेषु यस्त्वां नार्चयति क्वचित् ।
स तत्फलं न लभते विघ्नकोटिकदर्थितः ॥ २८ ॥
यस्त्वामर्चयते भक्त्या यत्र यत्रोपयाचितैः ।
तस्य सिध्यन्ति कार्याणि तत्र तत्र न संशयः ॥ २९ ॥
इति शंभोर्वरं प्राप्य जहर्ष गणनायकः ।
ब्रह्मविष्णुप्रभृतिभिर्निहितप्रसवाञ्जलिः ॥ ३० ॥
ततस्तं पञ्चवक्त्रत्वादुत्कटं वीक्ष्य शंकरः ।

अभाषत हिताकाङ्क्षी सर्वेषामेव देहिनाम् ॥ ३१ ॥
पुत्रैकवक्त्रो वर्तस्व चतुर्बाहुश्च मद्गिरा ।
ईदृशस्योत्कटं तेजः सहन्ते देहिनो न ते ॥ ३२ ॥
एवं शंभोर्गिरा सोऽथ हेरम्बः प्रत्यपद्यत ।
दंष्ट्राक्षसूत्रपरशून्मोदकं च करैर्वहन् ॥ ३३ ॥
एष विश्वस्य निःशेषप्रार्थनीयप्रदः प्रभुः ।
गणाधिपतिरस्त्युग्रविघ्नसंहरणोद्यतः ॥ ३४ ॥
सर्वेषु दर्शनेष्वेव पूजनीयः प्रयत्नतः ।
अन्यथा भूरयो विघ्ना मोहयन्ति मुहुर्मुहुः ॥ ३५ ॥

बहुसुकृतफलं महेशभक्ति
दलयति विघ्नतमो ददाति सिद्धीः ।
इति किमपि चिरं विचारयन्तो
विषमतमं भवसागरं तरन्ति ॥ ३६ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ श्रीगणपत्यवतारो नामाष्टादशः प्रकाशः ॥

---

एकोनविंशः प्रकाशः ।

ॐ श्रीशंकरक्षीरसिन्धुर्जयति ।

अस्मिन्वस्तुनि कृत्रिमेऽपि बहुशो निर्दिश्य तत्वात्मता-
मज्ञोऽहं सुचिरप्रवृत्तिविपदामात्राचिरं मोहितः।
शंभो बोधपयोनिधिं तव पुरस्त्वां तत्त्वतः प्रार्थये
येन स्यामभिनन्दनीयमहिमा मान्यैर्मुनीन्द्रैरपि ॥ १ ॥
अस्मिन्विशाले संसारे दाता नान्यो महेश्वरात् ।
येनादायि पयोराशिर्बालायाप्युपमन्यवे ॥ २ ॥
अभूत्कृतयुगे पूर्वं व्याघ्रपाद इति श्रुतः ।
अशेषवेदवेदाङ्गपारगो मुनिपुंगवः ॥ ३ ॥
उपमन्युश्च धौम्यश्च तस्याभूतामुभौ सुतौ ।
गाढस्नेहवशान्मातुः प्राणेभ्योऽप्यविशेषिणौ ॥ ४ ॥

सदैव बालयोर्मुग्धभावादज्ञाततत्त्वयोः।
आलोड्य पिष्टं जननी क्षीरमित्यनयोरदात् ॥ ५ ॥
कदाचित्क्षीरमपिबत्तदा कालेन भूयसा।
उपमन्युर्गतो यज्ञसमये ज्ञातिमन्दिरम् ॥ ६ ॥
तत्र साधु पयः पीत्वा रसायनरसोपमम्।
असौ पिष्टरसं मेने माधुर्यपरिवर्जितम् ॥ ७ ॥
ज्ञातक्षीररसास्वादो जननीमब्रवीत्ततः।
परमार्थपयो मातर्देहीति स पुनः पुनः ॥ ८ ॥
उपमन्योरथ वचः श्रुत्वा क्षीररसार्थिनः।
जगाद माता दुःखेन पुत्रस्नेहविशृङ्खला ॥ ९ ॥
कन्दमूलफलाहारैः प्राणवृत्तिविधायिनाम्।
वने निवसतां पुत्र कुतोऽस्माकं पयोरसः ॥ १० ॥
नदीनां पावनं वारि धीयते मुनिभिर्वने।
अरण्येषु कुतो गावस्तत्किं मिथ्यैव खिद्यसे ॥ ११ ॥
सर्वकामप्रदो यावत्प्रसन्नो न महेश्वरः।
यथारुचि भवेत्तत्र कथं तावदवस्थितिः ॥ १२ ॥
इति तस्या वचः श्रुत्वा ह्युपमन्युरभाषत।
महेश्वरः कः कुत्रास्ते कथं तुष्यति मे वद ॥ १३ ॥
इत्याकर्ण्याब्रवीन्माता वाष्पाकुलविलोचना।
पुनः पुनः परिष्वज्य मूर्धन्याघ्राय चात्मजम् ॥ १४ ॥
चराचरस्य जगतः सर्गस्थितिलयावहः।
अनेकरूपो विश्वात्मा जयत्येको महेश्वरः ॥ १५ ॥
अंशोऽपि विद्यते नात्र पुत्र स्थावरजङ्गमे।
न यत्रास्ते महादेवो विख्यातः कारणैरपि ॥ १६ ॥
ब्रह्माद्यैरप्यविज्ञेयो विभुरेको महेश्वरः।
अनर्घभक्तिभाजां तु प्रसीदति न संशयः ॥ १७ ॥

मातुर्गिरमिति श्रुत्वा तदानीमुपमन्युना ।
अकस्मादेव पापघ्नी भगवद्भक्तिराश्रिता ॥ १८ ॥
तदाप्रभृति मेने स प्राणांश्चैव तृणोपमान् ।
अन्तरेण महादेवं शरीरं हि शिलाविभम् ॥ १९ ॥
अथ तीव्रं तपश्चक्रे शंकराराधनाय सः ।
दिनाद्दिनं प्रयत्नेन वर्धयन्भक्तिवासनाम् ॥ २० ॥
फलाहारः शीर्णपर्णभोजनः सलिलाशनः ।
शतानि त्रीणि वर्षाणां स चकार महत्तपः ॥ २१ ॥
उपमन्युमुनिश्चक्रे ततस्तीव्रतरं तपः ।
शतानि सप्त वर्षाणां यदासीत्पवनाशनः ॥ २२ ॥
दिव्यं वर्षसहस्रं तु यावदेवमवर्तत ।
इन्द्राकारधरस्तावदाययौ परमेश्वरः ॥ २३ ॥
सहस्रनयनो वज्रपाणिरैरावणस्थितः ।
हारकेयूररुचिरस्मितश्चात्र विराजितः ॥ २४ ॥
गन्धर्वैरप्सरोभिश्च देवैश्च परिवारितः ।
तमाहेन्द्रः प्रसन्नोऽहं वरमभ्यर्थयेति सः ॥ २५ ॥
तं शक्रमिति विज्ञाय स जगाद निरादरः ।
देवराज वराकाङ्क्षा मम त्वत्तो न वर्तते ॥ २६ ॥
अन्ये च देवा ये केचिद्ब्रह्मविष्णुपुरःसराः ।
प्रार्थ्यन्ते न मया तेऽपि कदाचन मनोगतम् ॥ २७ ॥
योऽयं विश्वप्रभुर्देवो भवतामुपरिस्थितः ।
अनन्यमानसस्तस्य प्रसादाय यते पुनः ॥ २८ ॥
विरसादपि संसारान्मा निवर्तय जातुचित् ।
अमहेश्वरवद्धा चेत्कथापि श्रुतिमेष्यति ॥ २९ ॥
महेश्वरगिरा भूयां पशुरथ क्रिमिर्द्रुमः ।
मा भूवमन्यवाचा तु जातु त्रिभुवनेश्वरः ॥ ३० ॥

शिवभक्तस्य जन्मास्तु श्वपाकसदनेऽपि मे ।
अमहेश्वरभक्तः स्यां पुरंदरपुरेऽपि मा ॥ ३१ ॥
पवनाहारमात्रेण कुतस्तावत्क्षमं नृणाम् ।
न यावद्भगवद्भक्तिपीयूषरसचर्वणम् ॥ ३२ ॥
धर्मार्थकामसहिता अपि ता वितताः कथाः ।
न यत्र मोक्षजननी भगवद्भक्तिवासना ॥ ३३ ॥
दिने दिनार्धे प्रहरे नालिकायां क्षणेऽपि वा ।
कस्यालब्धप्रसादस्य भक्तिः स्यात्परमेश्वरे ॥ ३४ ॥
इन्द्रोपेन्द्रादिलोकेषु साम्राज्यं मे न रोचते ।
ईश्वरस्यैव दातृत्वमर्थयामि पुनः पुनः ॥ ३५ ॥
तावत्कथं निवर्तेत संसारे जन्ममृत्यवः ।
यावन्नासादिता शुद्धा भगवद्वासनासुधा ॥ ३६ ॥
उपमन्योरिति श्रुत्वा वचनं भक्तिपावनम् ।
अभाषत स विस्तार्य सहस्रमपि चक्षुषाम् ॥ ३७ ॥
किमत्र कारणं येन नान्यस्माद्वरमिच्छसि ।
तपोभिराराधयसे तमेव च महेश्वरम् ॥ ३८ ॥
एवमाकर्ण्य तद्वाणिमुपमन्युर्महामुनिः ।
अथोवाच महादेवभक्तिदार्ढ्यावहं वचः ॥ ३९ ॥
स एव शक्तो भगवान्स्वतन्त्रः परमेश्वरः ।
अन्ये प्रादेशिकाः केऽपि तदाज्ञामात्रकारिणः ॥ ४० ॥
अनादिमध्यनिधनं यत्परं धाम तद्विभुः ।
स एव विश्वमाकारैः पृथिव्यादिभिरष्टभिः ॥ ४१ ॥
अस्ति तेन विना कोऽन्यः सर्वैः सर्वत्र चिन्त्यताम् ।
महेश्वराद्भगवतो वरं तस्माद्वृणोम्यहम् ॥ ४२ ॥
बहुभिर्हेतुवादैर्वा किमन्यैः परिशीलितैः ।
पुरंदर त्वयापीदं स्वयमेवावधार्यताम् ॥ ४३ ॥

अपरां गतिमिच्छन्ति यदि ब्रह्मादयः सुराः।
असुरैर्बाध्यमानास्तु शिवमेवाश्रयन्ति हि ॥ ४४ ॥
स्वकार्यमात्रसज्जेषु ब्रह्मादिष्वपि दृश्यताम्।
एकैकलोकाधिपतीन्नियुङ्क्ते हि महेश्वरः ॥ ४५ ॥
दिग्वाससं तं सेवन्ते समस्तभुवनेश्वराः।
अर्धनारीश्वरो देवः कथ्यते स्म स्मरान्तकः ॥ ४६ ॥
स श्मशाने विहरते भक्तिभाजश्च रक्षति।
अपरिच्छिन्नमेतस्य महिमानं ब्रवीति कः ॥ ४७ ॥
निचिक्षेप मुखे वह्नेरन्यः को वीर्यमुत्कटम्।
संपन्नो यत्प्रसादेन सर्वतः स हिरण्मयः ॥ ४८ ॥
भगलिङ्गाङ्कितं विश्वमिति शक्तिशिवात्मकम्।
चक्रवज्राङ्कितं तत्रेत्यहो माहेश्वरं जगत् ॥ ४९ ॥
यथा महेशितुर्लिङ्गं समग्रैरर्च्यते सुरैः।
तथा ब्रूहि यदीशेन लिङ्गमन्यस्य पूज्यते ॥ ५० ॥
ब्रह्मणा पद्मनाभेन भवता च सुरैः सह।
लिङ्गं यस्यार्चितं नित्यं कस्तस्मादुत्तमः परः ॥ ५१ ॥
तस्माच्छापोऽपि मे श्लाघ्यो विश्वमूर्तेर्महेश्वरात्।
अन्यस्मान्न पुनर्देवात्सर्वकामफलान्यपि ॥ ५२ ॥
तत्किमन्यदुपादेयं न किंचिन्मे भवादृशात्।
गच्छ स्वभवनं भद्र तिष्ठ वा किमनेन वा ॥ ५३ ॥
एवमुक्त्वोपमन्युस्तं शिवैकायनमानसः।
न प्रसीदति मे शंभुरद्यापीति शुचं दधे ॥ ५४ ॥
अथ तस्य तदा दृष्ट्वा रूढामीश्वरभावनाम्।
वासवत्वं परित्यज्य रूपं शंभुरदर्शयत् ॥ ५५ ॥
देव्या सह वृषारूढो दृश्यते सोपमन्युना।
अष्टादशभुजः शंभुर्भासितव्योममण्डलः ॥ ५६ ॥

जाज्वल्यमानान्यस्त्राणि मूर्तिमन्त्युपमन्युना।
अदृश्यन्त त्रिनेत्रस्य सेवासन्निहितान्यपि ॥ ५७ ॥
अद्वितीयं महादंष्ट्रमेकपादं भयावहम्।
ज्वालामयं सहस्रेण शिरोभिरुदरैस्तथा ॥ ५८ ॥
सहस्रभुजजिह्वाक्षे तेषां मध्ये व्यराजत।
अस्त्रं महापाशुपतं कल्पान्तज्वलनोपमम् ॥ ५९ ॥
तदस्त्रं च त्रिशूलं च परस्परतुलाशया।
अभूतां परितोषाय तस्याशेषतमःक्षयात् ॥ ६० ॥
प्रभोरनुचरास्तेन ब्रह्मविष्णुपुरंदराः।
दृष्टाः समस्तदेवाश्च भूताश्च विविधात्मकाः ॥ ६१ ॥
अथ दृष्ट्वा महादेवं तेजोराशिमनश्वरम्।
कृताञ्जलिपुटो मूर्धन्युपमन्युरभाषत ॥ ६२ ॥
नमो विश्वात्मने तुभ्यमलभ्याय स्वयंभुवा।
स्वयमेव तु भक्तानां प्रकटीकृतमूर्तये ॥ ६३ ॥
अवेद्यस्त्वं कथं नाम प्रथसे मादृशामपि।
परापरतयैवायमनुग्राही तव क्रमः ॥ ६४ ॥
न तदस्तीह यत्तत्वं परमात्ममयः प्रभुः।
अभेदोऽपि स्वतन्त्रेण भेदोऽयं कल्पितस्त्वया ॥ ६५ ॥
तत्प्रसीद महादेव परं रूपं प्रकाशय।
निवर्ततामियं माया द्वयदुःखानुबन्धिनी ॥ ६६ ॥
अभून्मम चिरं क्लेशः स्वसंवेद्यो महेश्वर।
निवर्तते सोऽद्य विभो त्वामासाद्य परां गतिम् ॥ ६७ ॥
विमोहितोऽहं प्राग्देव त्वया रूपविपर्ययात्।
क्षमस्वाविनयं तन्मे शक्तोऽयमिति जानतः ॥ ६८ ॥
इत्युक्त्वा स मुनिः शंभोः पादपूजामकल्पयत्।
पपात मूर्ध्नि चामुष्य पुष्पवृष्टिर्नभस्तलात् ॥ ६९ ॥

उपमन्युशिरःप्राप्तप्रसूनसुरभीकृतः ।
वाति स्म पुण्यः पवनो देवदुन्दुभिरध्वनत् ॥ ७० ॥
पुरःस्थितं मुनिं वीक्ष्य जगाद त्रिपुरान्तकः ।
सर्वे पश्यत मद्भक्तिममुष्य त्रिदशा इति ॥ ७१ ॥
अभाषन्त ततो देवाः प्रणम्य परमेश्वरम् ।
श्लाघ्योऽयं भगवन्यस्य त्वयि भक्तिः प्रशस्यते ॥ ७२ ॥
एको भक्तानुकम्पी त्वं तदस्मै देहि वाञ्छितम् ।
ईदृशेन चरित्रेण देवानामेष मूर्धनि ॥ ७३ ॥
इत्युक्तवत्सु देवेषु कृपासरलमानसः ।
अब्रवीत्पार्वतीकान्तः किंचित्स्मेरमुखाम्बुजः ॥ ७४ ॥
वत्सोपमन्यो प्रीतोऽस्मि गाढभावनयानया ।
अभीष्टमभ्यर्थय तत्तवाहं सर्वकामदः ॥ ७५ ॥
इत्युक्तः प्रभुणा हृष्यन्नस्रुदन्तुरलोचनः ।
मूर्धानमवनौ क्षिप्त्वा जगाद मुनिपुंगवः ॥ ७६ ॥
जातोऽहमद्य भगवन्नद्य मे सफलं तपः ।
स्वयमेव प्रसन्नो यत्परमेशः पुरः स्थितः ॥ ७७ ॥
यं पश्यन्ति प्रयत्नेन देवागारे कदाचन ।
तं विलोकयता देवं मया किं किं न यत्कृतम् ॥ ७८ ॥
वरमभ्यर्थयाम्येवं प्रसीद परमेश्वर ।
अभङ्गुरा भवद्भक्तिरुत्कृष्टा मम वर्तताम् ॥ ७९ ॥
विज्ञानप्रतिभेदं हि यत्प्रसादान्निरूपये ।
अतीतं वर्तमानं च भविष्यं च यथा स्थितम् ॥ ८० ॥
शुभं क्षीरं वितर मे तत्राहमधिकादरः ।
बान्धवैः सह यद्भक्त्या सुखं प्राप्नोमि शंकर ॥ ८१ ॥
अमुष्मिन्नाश्रमे नित्यं सन्निधानं कुरु प्रभो ।
देव्या सह महादेव तेजोरूपत्वमाश्रितः ॥ ८२ ॥

इति वाचं मुनेः श्रुत्वा जगाद गिरिजापतिः ।
कारुण्यातिशयं दृष्ट्वा स्तुतः सेवागतैः सुरैः ॥ ८३ ॥
मद्भक्तिर्भवतो नित्यं वर्ततां पुत्र निर्मला ।
ज्ञानं लभस्व च परं प्रातिभं तदहंमयम् ॥ ८४ ॥
यत्र यत्र पयोवाञ्छा जायते हृदये तव ।
तत्र तत्रैव क्षीराब्धिः सन्निधत्तां मदाज्ञया ॥ ८५ ॥
सामृतं तत्पयः पीत्वा कल्पं बन्धुसमन्वितः ।
समावेक्ष्यसि धामैव परं मम न संशयः ॥ ८६ ॥
सन्निधानं करोम्यत्र तेजोमूर्तिरहं सदा ।
त्वच्चिन्तितश्च प्राप्स्यामि व्यक्तमूर्तिस्तपोवनम् ॥ ८७ ॥
असाधारणरूपस्त्वमजरामरतां भज ।
निवृत्तसर्वदुःखस्य कुलमक्षयमस्तु ते ॥ ८८ ॥
इति तस्य महादेवः प्रतिपद्य तिरोदधे ।
उपमन्युमुनेर्भक्तिं स्तुवद्भिरमरैः सह ॥ ८९ ॥
ततः प्रभृति निर्धूतनिःशेषक्लेशबन्धनः ।
मूर्धन्यः सर्वभक्तानामुपमन्युर्महामुनिः ॥ ९० ॥

वितरति न किमेष भक्तिमद्भ्यो
　निखिलसुरासुरसेव्यमानपादः ।
इति चिरतरमाकलय्य लोकः
　शरणमुपैतु शशाङ्कमौलिमेव ॥ ९१ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणावुपमन्युवरप्रदानं नामैकोनविंशः प्रकाशः ॥

---

विंशः प्रकाशः ।

ॐ नमः श्रीशिवाय भक्तवरप्रदाय ।

कृष्णोऽहं शिवमुग्धया निजधिया रागाकुलः स्वीकृतो
　निर्माय प्रसवप्रसक्तिमनया मुह्यामि मायापथे ।

तद्बोधात्मवपुः प्रकाशय विभो स्वातन्त्र्यशक्त्यान्वितं
येन स्यां परिपूर्णतत्तदखिलाभीष्टो भृशं निर्वृतः ॥ १ ॥
कर्तृत्वं शोभते शंभोरेकस्यैवाविनश्वरम् ।
क्रीडया पूरिता येन विष्णोरपि मनोरथाः ॥ २ ॥
कृष्णावतारं वैकुण्ठं वसुदेवद्विजात्मजम् ।
जाम्बवत्याभिधा पत्नी भाषते स्म कदाचन ॥ ३ ॥
आराध्य भवता शंभुं चारुधिष्ण्यादयः सुताः ।
उत्पाद्यन्ते स्म रुक्मिण्यामात्मतुल्यपराक्रमाः ॥ ४ ॥
स्वतुल्यमधुना कान्तं देहि पुत्रं ममापि तत् ।
अस्मिञ्जगति तन्नास्ति यन्न साध्यं भवादृशाम् ॥ ५ ॥
शुष्यन्द्वादशवर्षाणि पवनाहारतत्परः ।
शंभुं पर्यचरः पूर्वं रुक्मिण्याः पुत्रकाम्यया ॥ ६ ॥
ममापि नाथ त्वं भर्ता वाञ्छितं परिपूरय ।
अन्यथा किं शरीरेण तृणेनेवामुना विभो ॥ ७ ॥
इति श्रुत्वा वचः पत्न्यास्तदानीं मधुसूदनः ।
निर्जगाम सुताकाङ्क्षी तपः कर्तुं महेशितुः ॥ ८ ॥
तपो विधातुं वैकुण्ठे निर्गच्छति सुतेच्छया ।
जाम्बवत्यपि सिद्ध्यर्थं चक्रे स्वस्त्ययनानि सा ॥ ९ ॥
अथ निःसंशयां सिद्धिं मन्यमानो जनार्दनः ।
ध्यायन्हृदि महादेवं प्रापद्बदरिकाश्रमम् ॥ १० ॥
अर्चितं देवगन्धर्वैः सुगन्धिविविधद्रुमम् ।
उपमन्युमुनेः पश्यन्नाश्रमं मुमुदे हरिः ॥ ११ ॥
जाह्नवीशीकराक्रान्तपवनक्षपितक्लमः ।
नानाविधव्रतपरान्मुनीन्विष्णुर्व्यलोकयत् ॥ १२ ॥
अथ तत्र मनोहारिपदार्थशतसुन्दरे ।
परस्परगलद्वैरैस्तिर्यग्भिरपि सेविते ॥ १३ ॥

रचिताञ्जलिभिर्गाढविनयैर्दृढभावनैः ।
महर्षिभिः सेव्यमानं ज्वलितैरिव पावकैः ॥ १४ ॥
जटाचीरधरं सौम्यं युवानं शशिसुन्दरम् ।
उपमन्युमपश्यत्स विमलज्ञानपावनम् ॥ १५ ॥
उपमन्युमुनिं दृष्ट्वा केशवो रचिताञ्जलिः ।
मूर्तिमन्तमिव त्र्यक्षं पुनः पुनरवन्दत ॥ १६ ॥
आलोक्य प्रणतं विष्णुमुपमन्युरभाषत ।
गिरा मधुरया वर्षन्सुधां श्रवणयोरिव ॥ १७ ॥
गोविन्द स्वागतं सद्यस्तपांसि फलितानि नः ।
समस्तलोकद्रष्टव्यो यद्भवान्द्रष्टुमिच्छसि ॥ १८ ॥
यो यदिच्छति तत्तस्मै ददाति परमेश्वरः ।
भक्तिभाजामनर्घोऽयं चिन्तामणिरिव स्थितः ॥ १९ ॥
ये केचिदिन्द्रप्रमुखास्ते सर्वेऽपि यदिच्छया ।
लोकाधिपत्यं कुर्वन्ति धारयन्त्यायुधानि च ॥ २० ॥
विशीर्णान्यपि शस्त्राणि ग्रहस्याङ्गे दिवौकसः ।
पुनः प्रजहुर्निःशङ्कं भगवद्वाक्यमात्रतः ॥ २१ ॥
महेश्वरप्रसादेन लोकाधिपतितां भजन् ।
विद्युत्प्रभो वर्षलक्षं गणमध्ये स्थितिं व्यधात् ॥ २२ ॥
अनन्यहृदयः शंभुं ध्यात्वा वर्षशतत्रयम् ।
सहस्रं तनयान्प्राप क्रतुः स्वायंभुवः पुरा ॥ २३ ॥
याज्ञवल्क्यो महादेवभक्त्या ज्ञानमवाप्तवान् ।
पाराशर्येण मुनिना वाङ्मयं प्राप्तमुत्तमम् ॥ २४ ॥
अनुसूया स्वभर्तारं संत्यज्य ब्रह्मवादिनम् ।
त्रिभिर्वर्षशतैर्लेभे पुत्रमाराध्य शंकरम् ॥ २५ ॥
शाकल्यो मुनिभिर्वर्षैः शतैराराध्य शंकरम् ।
अवाप ग्रन्थकारत्वं सूत्रकारं सुतं तथा ॥ २६ ॥

तण्डिना भगवन्नामसहस्रं हृदये ददौ(दे) ।
तण्डिप्रोक्तं महर्षिः स हृष्यन्भूयोऽप्यभाषत ।
तण्डिना भगवन्नामसहस्रेण स्तुतश्चिरम् ॥ २७ ॥
ब्रह्मदत्तस्य यत्पाठात्का का सिद्धिर्न जायते ।
इत्युक्त्वा भगवन्नामसहस्रं हरये ददौ ॥ २८ ॥
आराधितो महादेवो मयापि तपसा चिरम् ।
अदत्त दर्शनं शंभुरमुष्मिन्कृपयाश्रमे ॥ २९ ॥
दाता शर्वसमो नास्ति नास्ति शर्वसमः प्रभुः ।
गतिः शर्वसमा नास्ति ध्येयस्तस्मात्स सर्वदा ॥ ३० ॥
अनादिमध्यनिधनं रूपं यस्य सदोदितम् ।
कस्तं वर्णयितुं शक्तो भगवन्तं महेश्वरम् ॥ ३१ ॥
जन्म मृत्युश्च सर्वेषां देहिनामिह दृश्यते ।
यो जन्ममृत्युरहितः शरणं स महेश्वरः ॥ ३२ ॥
स्वयं जिह्वैव जानातु श्रुतिर्निश्चिन्वतां तथा ।
शिवात्परस्य चेद्वाक्यं श्रव्यं नाम न कस्यचित् ॥ ३३ ॥
महादेव महादेव महादेवेति भारती ।
इयं समग्रगात्राणि सुधाभिरिव सिञ्चति ॥ ३४ ॥
एवं तद्वचनं श्रुत्वा जगाद कमलापतिः ।
जानन्सुतप्राप्तिमयीं सिद्धिमव्यभिचारिणीम् ॥ ३५ ॥
धन्यस्त्वं भगवन्यस्य प्रसन्नः परमेश्वरः ।
विना तदिच्छया को वा तद्भक्तिं लभते नरः ॥ ३६ ॥
मुनीन्द्र तदुपायं मे प्रकाशय कृपां कुरु ।
सर्वाभीष्टप्रदो येन विभुरेष प्रसीदति ॥ ३७ ॥
यावत्प्रसन्नो न विभुर्मया दृष्टो महेश्वरः ।
तावन्निरर्थः कायोऽयं धार्यते च घटोपमः ॥ ३८ ॥
इति विष्णोर्गिरं श्रुत्वा महामुनिरभाषत ।

ज्ञानेन विश्वं कलयन्नखिलं करगोचरे ॥ ३९ ॥
द्रक्ष्यस्येव महादेवं कृष्ण निःसंशयं ततः ।
षड्भिर्मासैः सदेवीको वरान्षोडश लप्स्यसे ॥ ४० ॥
महादेवाश्रया ह्येवं कथा विदधतस्तयोः ।
अगमन्दिवसाः सप्त मुहूर्तवदचिन्तिताः ॥ ४१ ॥
अथाष्टमे दिने विष्णुं भक्तं दीक्षितवान्मुनिः ।
उल्लासिताञ्जलिपुटं शिवभावैकभावितः ॥ ४२ ॥
मुनेरालोकनादेव स तदानीं जनार्दनः ।
मुण्डश्चीरी कुशी दण्डी मेखली समपद्यत ॥ ४३ ॥
ततो हरिस्तपश्चक्रे महर्षेरुपदेशतः ।
मासं परिमिताहारो मासं च सलिलाशनः ॥ ४४ ॥
मासात्तृतीयादारभ्य विदधे दुष्करं तपः ।
ऊर्ध्वबाहुः पिबन्वायुमेकपादश्च केशवः ॥ ४५ ॥
अपश्यदथ षष्ठे स मासि तेजोमयं शिवम् ।
सहस्रमपि सूर्याणामधःकृत्य व्यवस्थितम् ॥ ४६ ॥
तेजसस्तस्य मध्ये स ददर्श परमेश्वरम् ।
शशाङ्ककोटिसदृशं देव्या युक्तं तथा गणैः ॥ ४७ ॥
दृष्ट्वा तं गिरिजाकान्तमानन्दाश्रुप्लुतेक्षणः ।
अब्रवीत्पुण्डरीकाक्षः शिवं भक्तिपवित्रितः ॥ ४८ ॥
नमस्ते भगवन्सृष्टिस्थितिसंहारकारिणे ।
भक्तिमात्रेण लभ्याय दुर्विज्ञेयाय शंभवे ॥ ४९ ॥
एकस्त्वमेव विश्वात्मा वर्तसे बहुविग्रहः ।
को वेत्ति परमार्थं च बन्धमोक्षोभयात्मकम् ॥ ५० ॥
इत्यादिभिर्महादेवं वचोभिः स्तुवतो हरेः ।
अपतन्नसकृन्मूर्ध्नि नभस्तः पुष्पवृष्टयः ॥ ५१ ॥
प्रणमन्तं विभुर्दृष्ट्वा जगाद मधुसूदनम् ।

वराष्टकं वृणीष्वेति प्रसादं प्राप्तवान्परम् ॥ ९२ ॥
ततः प्रणम्य गोविन्दो जगाद परमेश्वरम् ।
भगवन्करुणाराशे प्रसादः क्रियतां त्वया ॥ ९३ ॥
कीर्तिं फलं युधि जयं धर्मदार्ढ्यं प्रयच्छ मे ।
त्वत्सन्निकर्षं योगित्वं सहस्राणि दशात्मजान् ॥ ९४ ॥
अष्टमं तु वरं देहि शिवभक्तिमभङ्गुराम् ।
यन्माहात्म्यात्प्रधानत्वं सुराणामपि धारये ॥ ९५ ॥
एवमस्त्विति तस्यैतदङ्गीचक्रे महेश्वरः ।
अम्बिकापि ददौ देवी केशवाय वराष्टकम् ॥ ९६ ॥
वरषोडशकं प्राप्य तदानीं गरुडध्वजः ।
विश्वस्य मातापितरौ प्रणनाम पुनः पुनः ॥ ९७ ॥
अखण्डकरुणाराशिर्जननी विश्वदेहिनाम् ।
अथाब्रवीद्भगवती प्रणमन्तं जनार्दनम् ॥ ९८ ॥
साम्बस्ते भविता पुत्रः प्रसादात्परमेशितुः ।
भविष्यन्ति प्रियाः पत्न्यः सहस्राणि च षोडश ॥ ९९ ॥
इति पुण्यां गिरं देव्याः कृष्णो जग्राह मूर्धनि ।
महाकारुणिकत्वं च शंसन्ति स्म सुराः प्रभोः ॥ ६० ॥
अनुगृह्येति गोविन्दं वरैः सर्वातिशायिभिः ।
अन्तर्दधे महादेवो देवी च प्रमथैः सह ॥ ६१ ॥
उपमन्युप्रसादेन परिपूर्णमनोरथः ।
नारायणस्ततो लेभे साम्बाद्यानुत्तमान्सुतान् ॥ ६२ ॥
ततः प्रभृति गोविन्दो भगवद्भक्तिभावितः ।
उपमन्युं गुरुं ध्यायन्स्तौति ध्यायति वन्दते ॥ ६३ ॥
एतमेव कथां भीष्मे शरशय्यागते हरिः ।
प्रष्टुर्युधिष्ठिरस्याग्रे कथयामास भारते ॥ ६४ ॥
युधिष्ठिरादयः शंभोः कथामित्थं निशम्य ते ।
नमो नमः शिवायेति परां भक्तिमवाप्नुवन् ॥ ६५ ॥

एवं श्रुत्वा शिवकथां स्तुत्वा च चरितं निजम् ।
अभाषत सभामध्ये कृष्णद्वैपायनो मुनिः ॥ ६६ ॥
तण्डिप्रोक्तं पठन्नामसहस्रमहमीश्वरात् ।
प्राप्तवानुत्तमं पुत्रं सर्वान्कामांश्च दुर्लभान् ॥ ६७ ॥
पाराशर्ये वदत्येवमालम्बायनिरब्रवीत् ।
शक्तस्य यः प्रियसुहृच्चतुर्वक्रस्य चात्मजः ॥ ६८ ॥
शतं समास्तपः कृत्वा मया सुतशतं शिवात् ।
अवाप्यते स्म दान्तानां शतं चायोनिजन्मनाम् ॥ ६९ ॥
अमुष्मिन्कथयत्येवं भगवद्भक्तिभास्वरः ।
आनन्दबाष्पं विकिरन्वाल्मीकिमुनिरब्रवीत् ॥ ७० ॥
ब्रह्मघ्नोऽसीति वादेन साग्निभिर्मुनिभिर्जितः ।
ईश्वरेण शरण्येन मोचितोऽहं दयालुना ॥ ७१ ॥
इत्युक्तवति वाल्मीकौ शिवस्य परमां गतिम् ।
गाढभक्तिचमत्कारो माण्डव्यो मुनिरब्रवीत् ॥ ७२ ॥
शूलाधिरोपितः पूर्वमचौरश्चौरशङ्कया ।
अहं संजीवितः शंभोः प्रसादेन समार्बुदम् ॥ ७३ ॥
एवं सर्वेषु कुर्वत्सु महादेवमयीः कथाः ।
बभाषे पुण्डरीकाक्षो वहन्रोमाञ्चकञ्चुकम् ॥ ७४ ॥
अस्मिंन्नियतिसंसारे कोऽभूत्को वा भविष्यति ।
यस्य प्रवृत्तिः स्वप्नेऽपि महादेवेच्छया विना ॥ ७५ ॥
ब्रह्मादयोऽपि मज्जन्ति यस्य मायापयोनिधौ ।
स बिन्दुरिव देवस्य विश्वमूर्तिर्विभाव्यते ॥ ७६ ॥
नाहमीश्वरचारित्र्यं चित्रं कथयितुं क्षमः ।
भक्तिमाश्रित्य पापघ्नीं स्वयमेवावधार्यताम् ॥ ७७ ॥
एवं वदति गोविन्दे सर्वे भावितचेतसः ।
पुनः पुनर्महादेवकिंवदन्तीरवर्णयन् ॥ ७८ ॥

किं बहूक्तेन कृष्णः स ततः प्रभृति सर्वदा।
भवत्यनन्यसामान्यशिवभक्तिपवित्रितः॥ ७९॥
इति सकलसुरेन्द्रवन्दनीयं
विभुमजरामरमाकलय्य शंभुम्।
जननमरणखेदिताः कमन्यं
शरणमशेषशरीरिणः प्रयान्तु॥ ८०॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ वासुदेववरप्रदानं नाम विंशः प्रकाशः॥

---

एकविंशः प्रकाशः।

ॐ श्रीमृत्युजिते नमः।

एकस्त्वं भगवन्सहस्रकर इत्याभाससे यः सदा
माहात्म्यं नतु तस्य कालकलनानैयत्यतो नश्वरम्।
तेजोमूर्तिरनादिमध्यनिधनस्तस्मान्महाकाल इ-
त्युज्जृम्भस्व निजेच्छया जनिजरामृत्यून्निहन्तुं मम॥ १॥
अन्यान्सर्वान्समुत्सृज्य शरणं गृह्यतां शिवः।
बाणासुरो महाकालगण आसीद्यदिच्छया॥ २॥
कल्पान्तसमये विश्वं संहरन्परमेश्वरः।
क्रोधेन पीडयामास हस्तं हस्तेन जातुचित्॥ ३॥
अन्योन्यहस्तसंमर्दादुदभूत्तस्य दानवः।
कालाकृतिर्महातेजा बाणो नाम भयंकरः॥ ४॥
रुद्रक्रोधोद्भवो भीतैर्वन्द्यमानः सुरैरपि।
स सहस्रकरो बाणः प्लक्षद्वीपेऽकरोत्स्थितिम्॥ ५॥
जित्वा त्रिभुवनं बाणः सदेवासुरमानुषम्।
सद्वीपसागरां भूमिं विचचार निरङ्कुशः॥ ६॥
अथ कालेन बहुना तपो व्यधित दानवः।
शंकरद्वारपालत्वे व्यापारयितुमुत्सुकः॥ ७॥

बाहुं बाहुमयं जुह्वदतिदीप्ते हुताशने ।
एकबाहुरभूद्यावदाययौ तावदीश्वरः ॥ ८ ॥
अब्रवीच्चन्द्रमौलिस्तं वरमभ्यर्थयेरिति ।
अभाषत ततो बाणः प्रमोदेन कृताञ्जलिः ॥ ९ ॥
पाषाणमपि विश्वात्मन्यं प्रभो पूजयाम्यहम् ।
त्वल्लिङ्गवत्स मोक्षाय पूजकानां प्रगल्भताम् ॥ १० ॥
इत्थं प्रत्युक्तवन्तं तं निजगाद महेश्वरः ।
बाणलिङ्गत्वमभ्येत्य पाषाणोऽपि त्वदर्चितः ॥ ११ ॥
यद्यर्चयसि पाषाणाँल्लक्षादभ्यधिकान्पुनः ।
मदाज्ञोल्लङ्घनाद्बाण नाशं प्राप्स्यन्ति त्वद्भुजाः ॥ १२ ॥
इति शंभोर्गिरं भक्त्या निधाय निजमूर्धनि ।
अब्रवीद्दानवेन्द्रोऽपि तपोगर्वविशृङ्खलम् ॥ १३ ॥
भवन्तमालोकयितुं सर्वदाहं समुत्सुकः ।
मम द्वारप्रदेशे तत्तिष्ठ तुष्टोऽसि चेदयम् ॥ १४ ॥
एवं वदति दैत्येन्द्रे नन्दी यावद्व्यधात्क्रुधम् ।
उवाच तावद्विश्वात्मा सान्त्वयन्मधुरं वचः ॥ १५ ॥
भोः पुत्र नन्दिन्नस्थाने न क्रोधं कर्तुमर्हसि ।
तपः प्रसन्नाद्यत्किंचिन्मत्तः प्रार्थयतामयम् ॥ १६ ॥
मनोरथं चेदफलं करोम्यस्य तपस्यतः ।
भक्तिभाजां तदन्येषामाश्वासः केन जायते ॥ १७ ॥
चिरादाराधिता अन्ये दद्युः परिमितं न वा ।
मम वाक्सेवकाभीष्टनिषेधं नैव शिक्षते ॥ १८ ॥
किमन्यन्नन्दिरुद्र त्वं शरीरान्तरमेव मे ।
बाणस्य द्वारपालत्वं तत्करोमि त्वदात्मना ॥ १९ ॥
इति प्रभोर्वचः श्रुत्वा हृष्यन्बाणासुरोऽब्रवीत् ।
हुतपूर्वं दधद्बाहुसहस्रं शंभुदर्शनात् ॥ २० ॥

जगत्यखण्डमैश्वर्यं कस्यान्यस्य प्रशस्यते।
त्वमेव यन्महादेव वाञ्छितार्पणकोविदः ॥ २१ ॥
कोपितोऽसि मया मोहात्प्रसादं विदधासि चेत्।
भक्तायतत्वमेतेन तवैवैकस्य दृश्यते ॥ २२ ॥
भवन्मूर्त्यन्तरं नन्दी प्रभुर्मम भवानिव।
तन्मुग्धेन मया देव धिग्धिक्प्रार्थितमीश्वरम् ॥ २३ ॥
एवं वरं न याचेऽहमेतेनाप्रतिमोहितः।
इदानीं भगवद्भक्तिर्भवत्येवास्तु शाश्वती ॥ २४ ॥
इति बाणं गदन्तं तं जगाद परमेश्वरः।
प्रवर्तते हि स्वप्नेऽपि न मे वचनमन्यथा ॥ २५ ॥
नन्दी ते द्वारपालोऽस्तु मयि भक्तिश्च निश्चला।
इत्युक्त्वोत्थाय विश्वेशो गणैः सह तिरोदधे ॥ २६ ॥
नन्दी शूलाङ्कितकरः परमेश्वरशासनात्।
ततः प्रभृति बाणस्य द्वारपालत्वमादधे ॥ २७ ॥
बाणासुरसुतः शंभुपूजनैकपरायणः।
अन्यत्कर्तव्यसंत्यागं चकार दृढनिश्चयः ॥ २८ ॥
आदाय नर्मदामध्यं सहस्रेण भुजैरसौ।
अहोरात्रेण पाषाणलक्ष भक्तिचमत्कृतः ॥ २९ ॥
अन्यानप्यर्चयामास विस्मृत्येश्वरभारतीम्।
लक्षाधिकत्वमालोक्य बाणानां नर्मदाजले ॥ ३० ॥
अथ द्वारस्थितो नन्दी दानवेन्द्रमभाषत।
दानवैश्वर्यमासाद्य सर्वाज्ञा विस्मृता तव ॥ ३१ ॥
लक्षाधिकार्चनाद्बाहुच्छेदमादिशति स यत्।
प्रभुः स शंभुः सर्वेषामिति कस्य न गोचरे ॥ ३२ ॥
तदाज्ञातिक्रमं नान्ये सहन्ते जातु केचन।
महादेवाज्ञया सोऽहं कार्याकार्ये विचिन्तयन् ॥ ३३ ॥

देहिनां स्थितये विष्णुरधिकारे व्यवस्थितः ।
क्षीराब्धौ शेषपर्यङ्के योगनिद्रापरायणः ।
शिवाज्ञोल्लङ्घनं विष्णुः क्षमते न कदाचन ॥ ३४ ॥
इत्युक्तो नन्दिरुद्रेण कुप्यन्दानवपुंगवः ।
न किंचिदब्रवीद्बाणो भ्रुकुटीमथ निर्ममे ॥ ३५ ॥
असन्निहितमालोक्य मुहूर्तादथ नन्दिनम् ।
जगाम बाणो गोविन्दशय्यामन्दिरमम्बुधिम् ॥ ३६ ॥
आलोक्य तत्र निद्राणं नारायणमनङ्कुशम् ।
हठेन बोधयामास सहस्रेण भुजैरसौ ॥ ३७ ॥
बभाषे दानवेन्द्रश्च प्रबुद्धं मधुसूदनम् ।
आदाय चक्रं युद्धाय सन्नद्धो भव सत्वरम् ॥ ३८ ॥
तस्य तद्वचनं श्रुत्वा केशवः सहसोत्थितः ।
ज्ञानेन कृत्स्नं निश्चित्य निजचक्रमभाषत ॥ ३९ ॥
भो भोः सुदर्शन त्वं मे दत्तो देवेन शंभुना ।
समस्तप्रभुणा हन्तुं निखिलानपराधिनः ॥ ४० ॥
बाणाभिधेन चानेन दानवेन दुरात्मना ।
उल्लङ्घ्य शंकरस्याज्ञां क्रियते स्थितिविप्लवः ॥ ४१ ॥
अयं शिवस्यैव गिरा भुजविच्छेदमर्हति ।
अन्यथा भगवद्भक्तिः कथं नाम विजीयते ॥ ४२ ॥
इह सन्निहितो नन्दी द्वितीय इव शंकरः ।
अस्मिन्प्राप्ते गतिर्न स्यात्तवान्यस्य कथापि वा ॥ ४३ ॥
स्मरन्माहेश्वरं वीर्यं सर्वतेजोतिशायि तत् ।
बाणबाहुद्रुमवनं लुनीहि रभसादिदम् ॥ ४४ ॥
इति दैत्यारिवचसा ज्वलन्निव सुदर्शनः ।
चिच्छेद बाहून्बाणस्य स्फुरत्कुलिशकर्कशान् ॥ ४५ ॥
छिन्नेषु बाहुषु तदा पपात भुवि दानवः ।
तन्मूलरुधिरस्रोतः प्रवर्तितभुजान्तरः ॥ ४६ ॥

अस्मिन्नवसरे नन्दी तं प्रदेशमवाप्तवान् ।
अपश्यद्दानवं छिन्नभुजं भूमौ निपातितम् ॥ ४७ ॥
ईशानवचनं हेतुं जानन्तमपि नन्दिनम् ।
उपगम्याब्रवीद्विष्णुः कुप्यन्तं बाणदर्शनात् ॥ ४८ ॥
विना महेश्वरस्येच्छां कस्य कुत्र व्यवस्थितिः ।
तदत्र कारणं शंभुरिति तत्त्वेन चिन्त्यताम् ॥ ४९ ॥
क्रोधो न तद्विधातव्यो नन्दीश्वर त्वया मयि ।
त्वमपि प्रभुरस्माकं महेश्वर इवापरः ॥ ५० ॥
इत्युक्तवति गोविन्दे नन्दिरुद्रोऽप्यभाषत ।
मय्यसन्निहिते विष्णो भिन्नाः किमिति बाहवः ॥ ५१ ॥
त्वत्कर्मणा तदेतेन यातु वृष्णिकुलं क्षयम् ।
शस्वेति कृष्णमवदत्पतितं भुवि चासुरम् ॥ ५२ ॥
सत्यं यदि महादेवः सर्वदेवकृपापरः ।
तदनेनैव देहेन गणत्वं त्वमवाप्स्यसि ॥ ५३ ॥
इत्युक्त्वा शंकरं स्मृत्वा नन्दी भूयोऽप्यभाषत ।
उत्तिष्ठाष्टादशभुजं लभस्व वपुरुत्तमम् ॥ ५४ ॥
अजरामरतां प्राप्तं यथाहं गणपुङ्गवः ।
तथैव त्वं महाकालः शंभोः सेवापरो भव ॥ ५५ ॥
यावन्तो बाहवश्छिन्नास्तव विक्रमकर्कशाः ।
तत्संख्याः प्रमथाः सन्तु परिवाराय मद्गिरा ॥ ५६ ॥
इति नन्दिगिरा बाणस्तथैव समपद्यत ।
शिवभक्तिचमत्कारविगलन्मोहकालिकः ॥ ५७ ॥
स्मृतोऽथ नन्दिरुद्रेण शिवभावितचेतसा ।
ददौ च दर्शनं देवो देव्या सह महेश्वरः ॥ ५८ ॥
अभ्यर्थितो विनीतेन नन्दिरुद्रेण भूरिशः ।
देवोऽपि वरयामास महाकालं कृतस्तुतिम् ॥ ५९ ॥

अथाब्रवीन्महाकालो निक्षिप्य धरणौ शिरः ।
भगवन्नद्य मे शान्तो बहुजन्मार्जितो मलः ॥ ६० ॥
ये पूजिता महादेवग्रावाणो नर्मदाजले ।
तान्पूजयित्वा त्वल्लोकं भजन्त्वन्येऽपि देहिनः ॥ ६१ ॥
न मानं दिग्विभागो न नान्यलक्षणवीक्षणम् ।
नर्मदाबाणलिङ्गस्य प्रभुणेत्युच्यतां मम ॥ ६२ ॥
बाणलिङ्गस्य पूजायां मानभेदभयं हर ।
निर्माल्यं जातु माभूच्च महादेव त्वदाज्ञया ॥ ६३ ॥
यत्र सन्निहितो देव बाणलिङ्गः कदाचन ।
क्रीड त्वं तत्र विश्वात्मा भुक्तिमुक्तिफलप्रदः ॥ ६४ ॥
इति सर्वं महादेवः कृपया प्रत्यपद्यत ।
अभाषत च निःशेषभक्तलोकाभयप्रदः ॥ ६५ ॥
स महाभैरवो देवः समन्त्रः परमार्थिकः ।
फलप्रतिष्ठिते बाणे षट्त्रिंशत्तत्त्वशोधनात् ॥ ६६ ॥
वैदिकैर्वैष्णवैः सौरैः शैवैः शाक्तैश्च सर्वथा ।
अप्यमार्गस्थितैर्वापि बाणाः पूज्याः प्रयत्नतः ॥ ६७ ॥
नित्यं सन्निहितो बाणे देव्या सह भवाम्यहम् ।
तदेतत्पूजनान्मुक्तिर्भुक्तिश्च करगोचरे ॥ ६८ ॥
वरं श्वपाकश्चाण्डालः पुक्कसो वध्यघातकः ।
तैलिकः सौनिको वापि न तु लिङ्गोपजीविकः ॥ ६९ ॥
धनेन पूजयँल्लिङ्गं यश्च भुङ्क्ते तदर्पितम् ।
स गच्छेद्रौरवं घोरं सादाख्यं वत्सरत्रयम् ॥ ७० ॥
तस्मात्प्रयत्नतः पूज्या बाणा इत्यभिधाय सः ।
तिरोदधे गणैर्नन्दिमहाकालादिभिः सह ॥ ७१ ॥

जगति खलु चराचरे महेशः
प्रभुरयमित्यवधार्य शुद्धबुद्धिः ।

घटयति यदि बाणलिङ्गपूजां
विरमति तत्क्षयमेव पापराशिः ॥ ७२ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ महाकालावतारो नामैकविंशः प्रकाशः।

---

द्वाविंशः प्रकाशः।

ॐ नमः शिवाय।

त्यक्त्वा भेदतमोमयं वपुरिदं देवी तव स्वेच्छया
संविन्निस्तुषबोधभास्वरतया देदीप्यते चेन्मयि।
तज्जानेऽहमिदंमयौ मृगपती हिंस्रौ मितत्वं हठा-
दुज्झित्वामरतामनुग्रहवशादायास्य तस्थौ विभो ॥ १ ॥

अनन्यसाधारणया भक्त्या[1] भगवतो जितम्।
यत्प्रसादात्तिरश्चोऽपि जायते मतिरुत्तमा ॥ २ ॥

देवी हिमवतः पुत्री काली नीलोत्पलच्छविः।
अष्टवर्षा तपोयुक्ता भर्तारं प्राप धूर्जटिम् ॥ ३ ॥

सा क्रीडन्ती पितृगेहे[2] शंभुना सह पार्वती।
दृष्ट्वा दृष्ट्वा वपुः श्यामं नाहं गौरीत्यलज्जत ॥ ४ ॥

एकदा क्रीडतोस्तत्र पार्वतीपरमेशयोः।
संध्यासमयमालोक्य नन्दिरुद्रोऽभ्यभाषत ॥ ५ ॥

प्रवृत्तेयं प्रभो संध्या तदिदानीमुपास्यताम्।
देवेन लोकयात्रायां क्रमोऽयमवतारितः ॥ ६ ॥

इति नन्दिवचः श्रुत्वा जगाद परमेश्वरः।
दन्तकान्तिभिराबध्नन्विशदां कौमुदीमिव ॥ ७ ॥

अत्र नास्त्यपरा संध्या रात्रिर्वा दिनमेव वा।
एषैव सा परा शक्तिः पार्वतीति व्यवस्थिता ॥ ८ ॥

आराधयामि तदिमामन्यकर्तव्यमुत्सृजन्।
एतावतैव सततं जायते मम निर्वृतिः ॥ ९ ॥

---

१. 'शक्त्या' ख. २. 'गृहे' ख.

इति शंभोर्गिरं श्रुत्वा बभाषे हिमवत्सुता ।
कोपकम्पितसर्वाङ्गी पाटलीभवदीक्षणा ॥ १० ॥
किं महेश्वर मां वक्षि तमोरूपां विभावरीम् ।
अथवा मद्वपुः श्याममुपहासाय जायते ॥ ११ ॥
तदिदानीं तपः कृत्वा यावद्गौरी भवामि ते ।
तावत्त्वद्वदनालोकं न करिष्यामि धूर्जटे ॥ १२ ॥
इत्युक्त्वा पर्वतसुता मिथ्या कोपमुपागता ।
जगाम व्योममार्गेण सवेगेन निजाश्रमम् ॥ १३ ॥
लब्धुं सुवर्णसावर्ण्यं तपस्तत्र चकार सा ।
ध्याननिष्पन्दनासाग्रनिषण्णनयनोत्पला ॥ १४ ॥
ऊर्ध्वे गुहायाः पश्यन्तौ तपस्यन्तीं हिमाद्रिजाम् ।
अधस्तान्निश्चलौ सिंहौ तत्रास्तामामिषाशया ॥ १५ ॥
दंष्ट्राकरालौ क्रूराक्षौ निभृतीकृतविग्रहौ ।
तामामिषी चिकीर्षन्तौ तत्र सिंहौ बभूवतुः ॥ १६ ॥
अथ देवीं तपस्यन्तीं संचिन्त्यासन्ससंभ्रमाः ।
ब्रह्मविष्णुप्रभृतयो देवाः सर्वे समाययुः ॥ १७ ॥
तत्राश्रमे महादेव्या ज्वलन्त्या इव तेजसा ।
स्वयंभूः पुरतः स्थित्वा जगाद रचिताञ्जलिः ॥ १८ ॥
मातर्भवत्याश्चारित्रं विचित्रं प्रतिभाति मे ।
स्वयं प्रयच्छसि फलं स्वयं प्रार्थयसे च यत् ॥ १९ ॥
इयच्चराचरं विश्वं प्रभुस्तस्य महेश्वरः ।
तस्य त्वं परमा शक्तिस्तपस्यस्यद्भुतं महत् ॥ २० ॥
अहं विष्णुर्महेन्द्राद्या लोकपालास्तथा सुराः ।
त्वत्तः सर्वेऽपि जायन्ते कल्पे कल्पे महेश्वरि ॥ २१ ॥
संहृत्य निखिलं विश्वं शंभुः स्थावरजङ्गमम् ।
त्वया सहैक एवास्ते महाप्रलयकेलिषु ॥ २२ ॥

सर्वे क्षीयामहे मातर्वयं कालनियन्त्रिताः।
अक्षया त्वं परा शक्तिरेकैव परमेशितुः॥ २३॥
तत्त्वान्यमूनि षट्त्रिंशन्मम वाचोऽप्यगोचरे।
उल्लसन्ति भवत्यां तु तेषामपि लयोदयाः॥ २४॥
तत्किं त्रिजगतीमातरस्ति यत्प्रार्थ्यते त्वया।
वयं परिमिता एव त्वद्बलात्प्रभुतां गताः॥ २५॥
तत्कृष्णतां परित्यज्य गौरी त्वं स्वेच्छया भव।
मा मा विमोहय ह्यस्मानज्ञाने तेन कर्मणा॥ २६॥
त्वामालोक्य तपस्यन्तीमियत्तां कल्पयन्ति ये।
ते घटोदरमानेन जानन्ति गगनाङ्गनम्॥ २७॥
अयं जनयिता देवः प्रकाशात्मा महेश्वरः।
स्वातन्त्र्यरूपा शक्तिस्त्वं तस्यैवाव्यभिचारिणी॥ २८॥
इयदभ्यर्थनीयं नो भक्तिस्त्वय्येव वर्धताम्।
अहो शरीरिणां मोहो यदिमौ त्वज्जिघांसया॥ २९॥
परमार्थमजानन्तौ महासिंहौ व्यवस्थितौ।
इति ब्रह्मोक्तमाकर्ण्य विमृषन्ती परं वपुः॥ ३०॥
अनुग्रहमयीं देवी सिंहयोरमुचद्दृशम्।
मृगेन्द्रविग्रहं त्यक्त्वा देवीदृक्पातमात्रतः॥ ३१॥
तावभूतां गणौ तत्र त्रिनेत्रौ दण्डधारिणौ।
जटाविकटमूर्धानौ कामरूपौ चतुर्भुजौ॥ ३२॥
तौ शिवज्ञाननिरतौ ब्रह्मणा प्रणतौ ततः।
अथाब्रवीन्महादेवी प्रणमन्तं स्वयंभुवम्॥ ३३॥
भक्तानुग्राहिणावेतौ गणौ दिण्डिमहोदरौ।
देव्यास्तद्वचनं श्रुत्वा शिरोविनिहिताञ्जलिः॥ ३४॥
विचिन्त्य च तदाश्चर्यं बभाषे जलजासनः।
परमार्थं न जानन्ति भवत्या ये महेश्वरि॥ ३५॥

ईदृशेन चरित्रेण प्रतिपत्तिं भजन्ति ते ।
तदिदानीममुं कोशं त्यक्त्वा नीलोत्पलप्रभम् ॥ ३६ ॥
गृहाण स्वेच्छया रूपं ज्वलज्जाम्बुनदप्रभम् ।
इति तस्य गिरा देवी प्राक्तनं वपुरत्यजत् ॥ ३७ ॥
स्वीचकार च गौरीत्वं बालार्ककरभास्वरम् ।
तत्र प्राग्विग्रहं देवी दृष्ट्वा पृथगवस्थितम् ॥ ३८ ॥
अथ सा दिविषत्कार्यं भविष्यदवधार्य च ।
मम प्राग्विग्रहः सोऽयं दुर्गात्वमवलम्बताम् ॥ ३९ ॥
कात्यायनीति नाम्ना च प्रसिध्यतु जगत्त्रये ।
अष्टादशभुजा सेयं विविधायुधधारिणी ।
महाबला विन्ध्यगिरौ कन्यात्वेनैव तिष्ठतु ॥ ४० ॥
इत्युक्ते परमेशेन तच्छरीरमभूत्ततः ।
जाज्वल्यमानं तेजोभिर्दुर्गारूपमुपस्थितम् ॥ ४१ ॥
पुनरप्यवदद्देवीं याविमौ सिंहविग्रहौ ।
गणीभवद्भ्यामेताभ्यां मुक्तावत्र व्यवस्थितौ ॥ ४२ ॥
ताविमौ मत्प्रभावेण बलिनौ वाहनीकुरु ।
सोमानन्द्यभिधस्त्वेक उपनन्द्यभिधः परः ॥ ४३ ॥
तद्गच्छ दुर्गे विन्ध्याद्रिमेतयोरुपरिस्थिता-।
इत्युक्तवत्यां पार्वत्यां कात्यायन्या तिरोदधे ॥ ४४ ॥:
ततः पुनः पुनः स्तुत्वा देवीं सरसिजासनः ।
जगाम त्रिदशैः सार्धं नभसा भुवनं निजम् ॥ ४५ ॥
गौरीभूय महादेवी सा सदिण्डिमहोदरा ।
अथ बालनिशाकान्तविलासोत्तंसमाश्रयत् ॥ ४६ ॥

इति भगवत ईश्वरस्य शक्तिं
त्रिजगतिकारणवन्दितां विदित्वा ।

व्यचिनुत हृदि भक्तिमद्वितीयां
दुरितजरत्तृणवह्निमादरेण ॥ ४७ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ देवीस्वरूपलाभदिण्डिमहोदरावतारवर्णनं नाम द्वाविंशः प्रकाशः ।

---

## त्रयोविंशः प्रकाशः ।

ॐ नमः श्रीपरारूपिण्यै मृत्युजिच्छक्तये ।

आद्या मूर्तिरसावनुद्गतरजः शक्तेस्तव त्र्यम्बक
त्रैलोक्यैकजनन्यबाह्यविषयासङ्गा च दुर्गेति या ।
संहारेण तमोमयैकवपुषा विश्वोद्भवोद्भासिनी
सासौ पञ्चमुखोऽर्धकल्पितगतिः स्वैरं समुज्जृम्भताम् ॥ १ ॥

यतस्ततो देहवतां भयमुत्पद्यते महत् ।
एका माहेश्वरी शक्तिस्तन्निवारणकोविदा ॥ २ ॥

कदाचिदसुरैः क्रूरैर्बाध्यमाना दिवौकसः ।
वैकुण्ठं शरणं जग्मुः समं कमलयोनिना ॥ ३ ॥

दानवोत्पादनं श्रुत्वा तेभ्यस्त्रैलोक्यकम्पनम् ।
बभाषे पुण्डरीकाक्षो गम्भीरमधुरां गिरम् ॥ ४ ॥

निसुम्भसुम्भमहिषप्रमुखान्दानवेश्वरान् ।
जानीहि सर्वैरस्माभिरजेयान्ब्रह्मणो वरात् ॥ ५ ॥

तथा हि वरमेतेभ्यो व्यतरत्तपसा विधिः ।
अष्टवर्षा कुमार्येव निहन्त्री नापरास्त्विति ॥ ६ ॥

तादृशी का कुमारी स्यादिति ते बाहुशालिनः ।
लुण्ठयन्तस्त्रिभुवनं गणयन्ति न कंचन ॥ ७ ॥

इदानीमस्त्युपायोऽत्र दानवानां क्षयावहः ।
तमाकलय्य सर्वेऽपि कुरुध्वं समयोचितम् ॥ ८ ॥

गौरी प्राक्कोशतः कन्या कौशिकीत्युदिता पुरा ।
अष्टवर्षा प्रदीप्तास्त्रा शक्ता सैवात्र कर्मणि ॥ ९ ॥

सा गौरीवचसा विन्ध्यशैलस्थित्यभिलाषिणी।
चचाल सिंहवहना तदानीं तुहिनाचलात्॥ १० ॥
अस्मिन्नेव क्षणे विन्ध्यो वर्धमानो यथायथम्।
अशेषमरुणद्व्योम निशातैः शृङ्गवेष्टितैः ॥ ११ ॥
सूर्यचन्द्रगतिं रुद्ध्वा कालस्य कलनां हरन्।
गतागतानि भवतामपि विन्ध्यो न्यवारयत्॥ १२ ॥
विषण्णेषु समस्तेषु ततो विन्ध्याद्रिचापलात्।
आजगाम महादेवी दुर्गा सिंहोर्ध्ववर्तिनी॥ १३ ॥
तामागतां शुभाकारां पश्यता विन्ध्यभूभृता।
तदा विग्रह आत्मीयो जङ्गमः प्रकटीकृतः॥ १४ ॥
तस्याः कान्ति तदा दृष्ट्वा स तदा काममोहितः।
जगाद मधुरां वाणीं पिकलोकानुवादिनीम्॥ १५ ॥
अहं सुन्दरि सर्वेषां भूभृतामुपरिस्थितः।
तन्मयैव समं तिष्ठ नान्यत्कर्तव्यमस्ति मे॥ १६ ॥
इति तस्य वचः श्रुत्वा दुर्गा कोपमुपागता।
दृक्पाताद्दीर्घमाकारं ह्रस्वीचक्रे महागिरेः॥ १७ ॥
ह्रस्वयित्वा गिरिं देवीं गगनाङ्गनरोधिनम्।
प्रावर्तयत सर्वेषां गतागतमयीः क्रियाः॥ १८ ॥
तस्यैव च गिरेर्मूर्ध्नि कौशिकी व्यधित स्थितिम्।
नन्दाम्बुबिन्दुनोत्पाद्य पावनां नन्दिनीं नदीम्॥ १९ ॥
सा नर्मदा नदी देशान्पावनीकुरुते बहून्।
यदम्बुपानाल्लोकोऽयं राजसूयफलं लभेत्॥ २० ॥
पाञ्चालनामा यक्षेन्द्रो दुर्गायास्तत्र किंकरः।
स्थापितो बलवांस्तत्र दानवासह्यविक्रमः॥ २१ ॥
तान्सैव कन्या दुर्गेति वर्षैरष्टभिराचिता।
निशुम्भप्रमुखान्दैत्यान्हनिष्यति बलीयसी॥ २२ ॥

तदयं नारदः सद्यो नानायुक्तिविशारदः ।
देव्याः संघटनां कर्तुं दानवानां प्रगल्भते ॥ २३ ॥
इत्युक्त्वा पुण्डरीकाक्षो नारदर्षिं व्यसर्जयत् ।
सोऽपि देवहितं वाञ्छन्नगमद्दानवान्प्रति ॥ २४ ॥
अथास्मिन्समये दैत्या विहन्तुं मन्दराचले ।
आजग्मुरुत्कटैश्वर्यतिरस्कृतसुराधिपाः ॥ २५ ॥
तत्रापश्यन्दितिसुता वीणापाणिं महामुनिम् ।
पीताम्बरधरं पिङ्गजटाजूटविराजितम् ॥ २६ ॥
तमालोक्याब्रुवन्दैत्याः क्व मुने गम्यते त्वया ।
शक्राद्याः कुत्र ते ब्रूहि किं च कुर्वन्ति संप्रति ॥ २७ ॥
आकर्ण्येति वचस्तेषां संप्राप्तावसरो मुनिः ।
जगाद स्मेरवदनो जनयन्हृदि कौतुकम् ॥ २८ ॥
तपोधनाश्रमान्प्रायः सिद्धानामाश्रमानपि ।
अहं प्रयामि सततं ब्रह्मगोष्ठीषु सादरः ॥ २९ ॥
दृष्टविन्ध्याद्रिशिखरेष्वद्यागतवता मया ।
भ्रष्टाननाः सुराः सर्वे पृष्टाः सादरमब्रुवन् ॥ ३० ॥
विन्ध्याद्रौ वर्तते कन्या जगत्रितयमोहिनी ।
सा स्वयंवरमाधत्ते तदर्थं वयमागताः ॥ ३१ ॥
श्रुत्वेति तेषां वृत्तान्तं मयापि समभाष्यत ।
दिव्या अप्सरसः सन्ति तत्किं वः कन्ययानया ॥ ३२ ॥
मयेत्युक्ते ततो देवा विहसन्तः समन्ततः ।
मामभाषन्त सर्वेऽपि शौरिशक्रपुरःसराः ॥ ३३ ॥
रम्भा रतिः शची लक्ष्मीप्रमुखादप्सरोगणात् ।
विशिष्यते सुन्दरीयमन्यथा प्रयतेत कः ॥ ३४ ॥
एकत्र भुवनैश्वर्यं रत्नानि सुधया सह ।
अन्यत्रैकैव सा कन्येत्यस्माभिर्नानुमन्यते ॥ ३५ ॥

किं प्राणैः सा न चेत्प्राप्ता किं भूत्या सा न चेत्प्रिया ।
तदेकतानं चेतश्चेत्सफलं जन्म देहिनाम् ॥ ३६ ॥
यावन्ति चिन्तारत्नानि यावन्तः कल्पपादपाः ।
यच्चान्यद्भुवनेष्वस्ति तत्समग्रं तृणायते ॥ ३७ ॥
एकैव सा पुनः कन्या सर्ववस्त्वतिशायिनी ।
तामप्राप्य लभन्ते च न केचिदपि निर्वृतिम् ॥ ३८ ॥
इत्थमुक्तवतो देवान्प्रतिमुच्याहमागतः ।
प्रस्थिताः क्व भवन्तोऽपि ब्रूत मे परमार्थतः ॥ ३९ ॥
इत्युक्तास्तेन मुनिना कथयन्ति स्म दानवाः ।
मेरुं लुण्ठयितुं यामो रत्नार्थं रभसादिति ॥ ४० ॥
श्रुत्वा तद्वचनं भूयोऽप्युवाच मुनिपुंगवः ।
मेरुमात्रेण रत्नानां कथं स्वीकरणं भवेत् ॥ ४१ ॥
प्रायः समग्ररत्नेभ्यः स्त्रीरत्नमतिरिच्यते ।
यद्वर्तते विन्ध्यगिरौ समग्रैश्चाभिलष्यते ॥ ४२ ॥
प्रयातु मेरुशैलं वा न ममैतत्प्रयोजनम् ।
ग्रावमात्रेषु रत्नत्वं कथयध्वं विशारदाः ॥ ४३ ॥
इत्युक्तवति देवर्षौ दानवैरभ्यधीयत ।
अस्माकं भुवनोत्कर्षि रत्नं ग्राह्यं भवेदिति ॥ ४४ ॥
दैत्याभिलाषं निश्चित्य वचसा तेन नारदः ।
अगच्छत्सिद्धकार्यार्थः प्रमोदाय दिवौकसाम् ॥ ४५ ॥
तस्मिन्गते मुनौ सु(शु)म्भनिसु(शु)म्भमहिषादयः ।
मेरुप्रयाणं संत्यज्य प्रययुर्विन्ध्यपर्वतम् ॥ ४६ ॥
विन्ध्याचलं समासाद्य ततो दानवपुंगवाः ।
अब्रुवन्हारवं दैत्यमाकलय्य परस्परम् ॥ ४७ ॥
धार्मिकैर्ह्रियते कन्या सुभगापि हि न स्वयम् ।
तत्तत्र प्रेष्यतां दूतस्तद्वृत्तान्तोपलब्धये ॥ ४८ ॥

एकाकिनी कुमारी सा सुकुमारा निसर्गतः।
दानवानुत्कटान्दृष्ट्वा म्रियते जातु कातरा॥ ४९॥
प्राज्ञोऽयं बर्बरो दैत्य स्मेरभाषी विसृज्यताम्।
साम्नैवाश्वास्यतामेषा ध्रुवं गोचरमेष्यति॥ ५०॥
हारवेणाभ्यनुज्ञातास्ततो बर्बरदानवम्।
सर्वेऽपि प्रेषयामासुः संदिश्य समयोचितम्॥ ५१॥
बर्बरस्तद्गिरा गच्छन्विन्ध्यस्य वसुधाभृतः।
त्रिभागमात्रमारुह्य तं पाञ्चालं व्यलोकयत्॥ ५२॥
पिङ्गपञ्चशिखो धातुरसनिर्मितचित्रकः।
अरण्यप्रसवोत्तंसो दण्डपाणिर्बृहद्भुजः॥ ५३॥
सिंहचर्माम्बरो नीलकटीवस्त्रो महाहनुः।
दृष्ट्वा बर्बरमायान्तं पाञ्चालस्तारमब्रवीत्॥ ५४॥
कस्त्वं किमर्थमायातः कुतो वा कथ्यतामिति।
अनावेद्य स्ववृत्तान्तं गन्तुं न प्रभविष्यसि॥ ५५॥
इति पाञ्चालवचनं श्रुत्वा प्रोवाच बर्बरः।
कस्त्वं किमर्थमिति वा स्थित आवेद्यतामिति॥ ५६॥
ततो जगाद पाञ्चालो हसन्भ्रुकुटिभीषणः।
अद्यापि नैव जानासि कोऽयमित्यवधार्यताम्॥ ५७॥
शैलानां यानि दुर्गाणि तथोपवनभूमयः।
अरण्यानि च सर्वाणि तेषामहमधीश्वरः॥ ५८॥
न मे तुल्यबलः कोऽपि क्वचिदस्ति जगत्त्रये।
यक्षकोटिशतस्याहं पाञ्चालाख्यो महाप्रभुः॥ ५९॥
अस्मिन्गिरौ गुहागर्भे कन्या तिष्ठति कौशिकी।
सैव मां किंकरीचक्रे स्वयमेव महेश्वरी॥ ६०॥
एवं श्रुत्वा वचस्तस्य बर्बरः कोपकर्कशः।
समस्तं निजवृत्तान्तं यथातत्त्वं न्यवेदयत्॥ ६१॥

वर्बरस्य गिरा ज्ञात्वा देवीस्वीकरणैषिताम् ।
अथाभाषत पाञ्चालो ज्वलत्पिङ्गशिखावलिः ॥ ६२ ॥
व्योम्नः प्रभाः को बध्नाति को रुणद्धि समीरणम् ।
त्रिजगज्जननीं दुर्गां स्वीचिकीर्षति को जनः ॥ ६३ ॥
तत्किमन्यदजित्वा मां नैव द्रक्ष्यसि कौशिकीम् ।
अहं हि किंकरस्तस्या विजेतुं त्वादृशान्क्षमः ॥ ६४ ॥
इत्युक्त्वा निदधे मूर्ध्नि मुद्गरं बर्बरस्य सः ।
मुष्टिभिस्ताडयामास पाञ्चालमपि बर्बरः ॥ ६५ ॥
ततः क्रूरतरे युद्धे प्रवृत्ते विविधायुधैः ।
असृजद्रक्षसां वर्गं बर्बरः स्वकलेवरात् ॥ ६६ ॥
पाञ्चालोऽपि स्मरन्देवीं पाशास्त्रमपि संदधे ।
बबन्ध बर्बरमुखान्पाशैश्च रजनीचरान् ॥ ६७ ॥
मुहूर्तं चिन्तयामास शुभेन मतिचक्षुषा ।
बद्धा अमी दुराचारा अकिंचित्करतां स्थिताः ॥ ६८ ॥
हन्यन्ते यदि तज्जानाम्यनौचित्यं प्रवर्तते ।
दूताः प्रकृत्यैवावध्या हठेन यदि हन्यते ॥ ६९ ॥
कुपिता कौशिकी देवी कथमाराध्यते ततः ।
दासोऽस्मि सा प्रभुर्देवी स्वेच्छया नास्ति मे गतिः ।
आदाय तदमूबद्धांस्तस्या एव प्रकाश्यते ॥ ७० ॥
इति निश्चित्य पाञ्चालो बद्धानादाय राक्षसान् ।
दुर्गामन्दिरमासाद्य देव्यै सर्वं न्यवेदयत् ॥ ७१ ॥
देव्या पृष्टोऽथ वृत्तान्तं तत्र वक्तुं प्रचक्रमे ।
बर्बरो मोहितमतिः पाशपीडितविग्रहः ॥ ७२ ॥
दैत्येन्द्रो विजिताशेषत्रिदशासुरमानुषः ।
विश्वेश्वरो वरयते त्वां सुन्दरि दृढादरः ॥ ७३ ॥
अवश्यदेया कन्या स्यात्तादृशस्तु पतिः कुतः ।
तेन भर्ता तदात्मानमलंकुरु गिरा मम ॥ ७४ ॥

श्रुत्वेति वर्बराद्देवी स्मितलेखा मनोरमा।
किंचिदाकुञ्चितैकभ्रूर्बभाषे मधुरं वचः॥ ७५॥
अवश्यं स्यात्स्त्रियो भर्ता पुरुषस्य च कामिनी।
रूपवानद्वितीयश्रीस्तादृशं का न कामयेत्॥ ७६॥
कन्यायाश्च पिता दाता प्रसिद्धमिति साधुषु।
स्वयंवरं या कुरुते ह्रियते च बलेन वा॥ ७७॥
नाहं जानामि जनकं तत्को दाता परो मम।
उपपन्नमपश्यन्त्याः स्वयंवरविधिर्न च॥ ७८॥
तदिदानीं किमन्येन बलीयान्दानवेश्वरः।
स्वयं हरति चेदत्र किमस्त्युचितमुत्तरम्॥ ७९॥
एवमेवोच्यतां गत्वा युक्तं बर्बरक त्वया।
पाञ्चाल सर्वे पाशेभ्यो विमुच्यन्तां मदाज्ञया॥ ८०॥
एवं देवीवचः श्रुत्वा पाञ्चालस्तानमोचयत्।
निवृत्तपाशांस्तान्दृष्ट्वा कौशिकी पुनरब्रवीत्॥ ८१॥
बर्बराङ्गसमुद्भूता अमी ये ते ममानुगाः।
बर्बरा इति निर्मुक्तलोभमात्सर्यकिल्बिषाः॥ ८२॥
मदालोकनतः सर्वे समुत्पन्नपराक्रमाः।
अमी मदेकमनसो भविष्यन्ति च बर्बराः॥ ८३॥
एतद्वंशेऽपि जायन्ते ये केचिदपि देहिनः।
उत्तमत्वमवाप्स्यन्ति तेऽपि मद्भक्तिपाविताः॥ ८४॥
इत्युक्ते दुर्गया सर्वे बर्बराङ्गसमुद्भवाः।
अपूजयन्त त्रिजगज्जननीं भक्तिशालिनः॥ ८५॥
प्रतिमुक्तो महादेव्या सोऽपि बर्बरदानवः।
तत्स्वीकारोन्मुखान्दैत्यान्गत्वा सत्वरमब्रवीत्॥ ८६॥
सा कुमारी मया दृष्टा रूपयौवनशालिनी।
सत्यं ततोऽन्यलोकेषु न किंचिदपि विद्यते॥ ८७॥

निःशेषविश्वजननी तेजसा सा विभाव्यते ।
पाञ्चालः किंकरस्तस्या बलीयान्गुह्यकाधिपः ॥ ८८ ॥
इत्युक्त्वा बर्बरस्तेषां देव्यादेशमवर्णयत् ।
भवितव्यतया मोहमवापुस्ते च दानवाः ॥ ८९ ॥
सर्वे तत्रैव गच्छाम इत्युक्त्वा ते मदोल्बणाः ।
आरोहन्ति स्म विन्ध्याद्रेरूर्ध्ववर्त्मनि दानवाः ॥ ९० ॥
सर्वगदानवन्यस्तचरणक्षोभतस्तदा ।
शाखीव वात्यानिहतो विन्ध्यभूभृदकम्पत ॥ ९१ ॥
अथ विष्णुं पुरस्कृत्य सुराः शक्रपुरःसराः ।
अवापुर्विन्ध्यशैलाग्रं समरालोकनोत्सुकाः ॥ ९२ ॥
ततो ध्यानेन निश्चित्य देवी दानवचेष्टितम् ।
पाञ्चालानुगता भीमौ सिंहावारुह्य निर्गता ॥ ९३ ॥
सुवर्णकमलोत्तंसा मणिकुण्डलमण्डिता ।
रराज सौभाग्यमयी सा विन्ध्यशिखरोपरि ॥ ९४ ॥
विलोक्य विश्वजननीं तां सर्वेऽप्यथ दानवाः ।
अवहन्हृदये शङ्कां तत्तेजःकूणितेक्षणाः ॥ ९५ ॥
तेषां मध्यात्ततः शुम्भः पुरः किंचित्कृतस्थितिः ।
हसन्नुवाच तां देवीं व्यामोहविवशीकृतः ॥ ९६ ॥
अमुना किमनर्थेन मुधा युद्धेन सुन्दरि ।
मया महेन्द्रोऽपि जितस्तत्कुरुष्व मदीप्सितम् ॥ ९७ ॥
शुम्भस्य वचनं श्रुत्वा नर्मगर्भं दुरात्मनः ।
त्रैलोक्यजननी दुर्गा लोलकुण्डलमभ्यधात् ॥ ९८ ॥
पुनः पुनर्न भाषन्ते जातु सन्तः समीहितम् ।
आसन्नमेव तद्वस्तु भवद्भिः परिचिन्त्यताम् ॥ ९९ ॥
उक्त्वेति देवी शूलेन शिखाज्वलितवह्निना ।
क्षिपन्तं विशिखान्घोराञ्शुम्भं मूर्धन्यताडयत् ॥ १०० ॥

देवीत्रिशूलविद्धः स पतितो धरणीतले ।
मुहूर्तादुत्थितो गर्वाद्विकृतं बहुशो हसन् ॥ १०१ ॥
त्रिशूलं करमेवास्याः प्राप देव्या ज्वलत्प्रभम् ।
मुमोच स गदां गुर्वीं शुम्भो वज्रातिशायिनीम् ॥ १०२ ॥
सा दानवगदा देव्याः सुकुमारेऽपि वक्षसि ।
कण्ठाभरणसंस्पर्शमात्रेण शकलीकृता ॥ १०३ ॥
देवी चक्रं च चिक्षेप ततः शुम्भस्य वक्षसि ।
तेन प्रण(न)ष्टसंज्ञः सः बभूव च बलीयसा ॥ १०४ ॥
पीडितं शुम्भमालोक्य निशुम्भमहिषादयः ।
विविधैरायुधैर्देवीं प्रजह्रुरथ दारुणैः ॥ १०५ ॥
उत्पाट्य दुन्दुभिः शैलं विशालानन्तपादपम् ।
बहुयोजनविस्तीर्णं देव्याश्चिक्षेप वक्षसि ॥ १०६ ॥
आगच्छन्नेव स गिरिकन्दराशतभीषणः ।
कुलिशेनाहतो देव्या पपात वसुधातले ॥ १०७ ॥
निर्ययावथ तां देवीं कवलीकर्तुमुन्मुखः ।
प्रलम्बपुच्छो निर्धूतकंधरो महिषासुरः ॥ १०८ ॥
शृङ्गाग्रेणोदरं भिन्दन्देवीवाहमृगेन्द्रयोः ।
प्रजहार स पाञ्चालं मुक्तदुःसहहुंकृतिः ॥ १०९ ॥
वीक्ष्य तं दुर्जयं देवी गृहीत्वा च शरासनम् ।
इषुभिः पूरयामास निःशेषानपि दानवान् ॥ ११० ॥
महिषोऽपि शरान्देव्यास्तृणानीव सहस्रशः ।
हेलया कवलीचक्रे घोरहुंकारभीषणः ॥ १११ ॥
धनुश्च व्यर्थमित्युक्त्वा ततो देवी बलीयसा ।
मुद्गरेणासुरेन्द्रस्य तस्य शृङ्गमपातयत् ॥ ११२ ॥
शृङ्गेण तस्य पतता विन्ध्याद्रिरपि कम्पितः ।
गलद्भिः शोणितौघैश्च ककुभः परिपूरिताः ॥ ११३ ॥

भिन्नेऽपि शृङ्गे चरणाहतिभिर्महिषासुरः ।
निष्पीड्य वाहनहरिं देवीं दन्तैरताडयत् ॥ ११४ ॥
आलोक्य तादृशं क्षोभं ततः खिन्नेव कौशिकी ।
महिषस्याच्छिनत्क्रूरां दंष्ट्रां मुद्गरताडितैः ॥ ११५ ॥
ततो निकृत्तदंष्ट्रोऽपि बलीयान्महिषासुरः ।
पुच्छेन वेष्टयामास सोऽथ केसरिणो रुषा ॥ ११६ ॥
वाहपञ्चाननक्षोभव्याकुलामथ कौशिकीम् ।
अन्येऽपि दानवास्तीक्ष्णैरायुधैः पर्यवारयन् ॥ ११७ ॥
ततो ब्राह्म्यादयो देव्या सृष्टा अष्टौ च देवताः ।
विविधायुधधारिण्यो दृश्यन्ते स्म निशाचरैः ॥ ११८ ॥
ब्राह्म्याद्या वीक्ष्य तेजोभिर्ज्वलन्तीरिव देवताः ।
साट्टहासमभाषन्त ततस्ते दानवेश्वराः ॥ ११९ ॥
एकाकिनी कुमारी त्वं त्रस्ता तद्बिरमाहवात् ।
साहायकार्थमानीता ब्राह्म्याद्याः कथमन्यथा ॥ १२० ॥
इति तेषां वचः श्रुत्वा किंचिल्लज्जावतीव सा ।
व्यश्रामयन्निजे रूपे देवताः परमेश्वरी ॥ १२१ ॥
एकाकिन्येव च ततः सा चकाराहवोत्सवम् ।
सर्वेऽपि क्षोभमाजग्मुर्दानवाः शौर्यशालिनः ॥ १२२ ॥
आदाय घोरं परिघं ततो दुन्दुभिदानवः ।
देवीमताडयन्मूर्ध्नि बलाहंकारमोहितः ॥ १२३ ॥
अथ सा कुपिता देवी केशेष्वाकृष्य पाणिना ।
पादताडनमात्रेण निर्जीवं दुन्दुभिं व्यधात् ॥ १२४ ॥
दुन्दुभिं निहतं वीक्ष्य ततः सर्वे दिवौकसः ।
अताडयन्त पटहान्पुष्पवृष्टीश्च तत्यजुः ॥ १२५ ॥
अमर्षादथ तुङ्गेन शृङ्गेण महिषासुरः ।
जघानाहंकृतो देवीं कौशिकीमूरुमण्डले ॥ १२६ ॥

ततः सा व्याकुला देवी गृहीत्वा रभसादसिम्।
चिच्छेद निशितं शृङ्गं महिषस्य दुरात्मनः॥ १२७॥
विशृङ्गोऽपि स दैत्येन्द्रश्चरणैस्तामताडयत्।
पादानप्यस्य चिच्छेद कृपाणेनैव कौशिकी॥ १२८॥
स च्छिन्नपादः पुच्छेन वेष्टयित्वा ततो रथम्।
देवीमाराधयामास विकृतं विहसन्हठात्॥ १२९॥
ततो महिषदैत्यस्य पादं निक्षिप्य निष्ठुरम्।
शूलेन दारयामास कन्धरां परमेश्वरी॥ १३०॥
महिषं निहतं वीक्ष्य विद्रुते दानवव्रजे।
अथ शुम्भो निशुम्भश्च संमुखत्वमवापतुः॥ १३१॥
कौशिकी वीक्ष्य तौ दुष्टौ बाहुयुद्धपरायणौ।
अदारयत्कररुहप्रान्तैर्विशिखदारुणैः॥ १३२॥
चिच्छेद च ततो देवी दुर्गा खड्गेन कंतयोः।
पतितौ धरणीपृष्ठे हा हा चक्रुश्च तेऽसुराः॥ १३३॥
एवं हतेषु दैत्येषु देव्या संग्राममूर्धनि।
विपक्षप्रक्षयात्सर्वे सुपर्वाणो विशश्वसुः॥ १३४॥
अथाद्भुतं तदालोक्य देव्याः शौर्यविचेष्टितम्।
समग्रानमरान्व्योम्नि निजगाद जनार्दनः॥ १३५॥
अस्मान्निर्जित्य निःशङ्कमाक्रामन्तश्चराचरम्।
अमी ते दानवा दे[१व्या निहताः कौतुकायनाः॥ १३६॥
अहो दुर्गा महादे]वी सर्वेषामुपरिस्थिता।
एतेऽपि यत्प्रभावेण क्षयं याताः सुरद्रुहः॥ १३७॥
तदायात महादेवीं नमस्कर्तुं भयापहाम्।
विन्ध्याद्रिवर्तिनीमेतां प्रयामः सांप्रतं वयम्॥ १३८॥
इत्युक्ते विष्णुना सर्वे दुर्गां द्रष्टुं ततो ययुः।
उपायनकराः शश्वत्किरन्तः प्रसवाञ्जलिम्॥ १३९॥

---

१. अयं पाठः कुत्रचित्पुस्तके त्रुटित इति प्रतिभाति.

प्रदीप्ततेजसं दृष्ट्वा देवीं ते हतदानवाम् ।
अस्तवन्प्राभृतं दत्त्वा विष्णुप्रभृतयः सुराः ॥ १४० ॥
त्वमेव माता विश्वस्य त्वमेव परमा गतिः ।
त्वमेव प्रतिभा देव्यास्त्वमेवेच्छा महेशितुः ॥ १४१ ॥
उत्पद्यते जगत्सर्वं त्वत्त एव चराचरम् ।
विलीयते च त्वय्येव तदस्माकं कृपां कुरु ॥ १४२ ॥
त्वमेव त्राणमस्माकं दुर्गे देवि महेश्वरि ।
वाच्यवाचकरूपेण त्वमेव प्रतिभाससे ॥ १४३ ॥
इति स्तुता भगवती देवैर्विष्णुपुरःसरैः ।
प्रसन्ना मधुरां वाणीमभाषत भयापहाम् ॥ १४४ ॥
विद्यते वो नाद्य भयं मद्बलं विदितं च वः ।
तदिदानीं यथाभीष्टं सर्वे तिष्ठत मद्गिरा ॥ १४५ ॥
स्वान्स्वान्व्रजत तल्लोकान्भवन्तो निर्भयाश्चिरम् ।
भूयो भूयश्चरिष्यामि निःसंदेहं हितानि वः ॥ १४६ ॥
अमी हता मया दैत्याः कुजम्भश्चावशिष्यते ।
तं दानवं नन्दिरुद्रो मारयिष्यति मत्सुतः ॥ १४७ ॥
इति देवीगिरा हृष्टा प्रणमन्तः पुनः पुनः ।
विष्णुशक्रादयो देवा जग्मुः स्वभुवनानि ते ॥ १४८ ॥

निखिलहितविधायिनी न केषां
हरति भयं परमेश्वरस्य शक्तिः ।
इति दृढतरनिश्चयो हि कश्चि-
त्पथि पथि पश्यति तत्स्वरूपमेव ॥ १४९ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ दुर्गादेवी-माहात्म्ये शुम्भादिवर्णनं नाम त्रयोविंशः प्रकाशः ॥

---

## चतुर्विंशः प्रकाशः ।

ॐ श्रीमृत्युजिते नमः ।

एकोऽहं कविरुत्कटैः पशुपतेः पाशैर्दृढं पीडितो
भ्राम्याम्यत्र चराचरे त्वदुदरावासान्तरालस्पृशि ।

तत्प्रोन्मील्य रहस्यमार्गमधुना मां मोचय स्वेच्छया
येन द्रागजरामरस्त्रिजगति प्राज्ञत्वमासादये ॥ १ ॥
दुष्टान्नाशयतः शंभोः कारुण्यं साधु शोभते ।
अन्यः को नाम सेव्योऽस्ति धीराणामिति शील्यताम् ॥ २ ॥
कुजम्भदानवेन्द्रेण कदाचिद्बाधिताः सुराः ।
अभयाय महादेवं मणिवेदीनिवासिनम् ।
नन्दिरुद्रमभाषन्त कैलासाद्रौ दिवौकसः ॥ ३ ॥
भगवन्परमेशानप्रधानतरकिंकर ।
विज्ञापय प्रभोरस्मानभयार्थमुपस्थितान् ॥ ४ ॥
तेषामिति वचः श्रुत्वा विनिवेश्य शिरो भुवि ।
उदञ्चिताञ्जलिर्नन्दी जगाद परमेश्वरम् ॥ ५ ॥
भगवन्ब्रह्मविष्णवाद्या दिदृक्षन्ते दिवौकसः ।
त्वामेव परमं देवं बहुकालमुपस्थिताः ॥ ६ ॥
इत्थं वदति निर्निद्रभक्तिभाविनि नन्दिनि ।
तेषां प्रवेशं भ्रूभङ्गसंज्ञया प्रभुरादिशत् ॥ ७ ॥
अथ प्रविष्टास्त्रिदशाः कृताञ्जलिपुटाः पुनः ।
उपाविशन्नमन्तश्च नन्दिरुद्रनिवेदिताः ॥ ८ ॥
ततश्चिबुकविन्यस्तहस्तो जलजसंभवः ।
विनम्रमूर्धा तन्मध्यादभाषत महेश्वरम् ॥ ९ ॥
वयं विभो किंकरास्ते तवैवाज्ञाविधायिनः ।
त्वामेव स्वामिनं सर्वे जानीमः परमेश्वरम् ॥ १० ॥
त्वत्प्रसादादहं देव सृजामि निखिलं जगत् ।
अयं गरुडकेतुश्च स्थितिकृद्भवदाज्ञया(दिच्छया) ॥ ११ ॥
इन्द्रो नेत्रसहस्रेण त्वामेव ध्यायति प्रभुम् ।
त्वदाज्ञया च देवानामाधिपत्ये प्रवर्तते ॥ १२ ॥
एवमन्येऽप्यमी नाथ लोकपाला दिने दिने ।
सर्वे त्वामेव सेवित्वा लभन्ते परमां गतिम् ॥ १३ ॥

किमस्ति यन्न ते साध्यं किमस्ति न च यद्भवान् ।
अस्ति किं यन्न जानासि किमस्ति न करोषि यत् ॥ १४ ॥
तवाह्निकजपूजाभिरसाधारणभूतयः ।
वयं प्रभोर्नियोगेन स्वकृत्यानि विदध्महे ॥ १५ ॥
यदा यदा च विश्वात्मन्नन्तरायं लभामहे ।
तदा तदा च त्वामेव शरणं संश्रयामहे ॥ १६ ॥
तदिदानीं महादेव कुजम्भो नाम दानवः ।
लोकपालान्पराजित्य बाधते निखिलं जगत् ॥ १७ ॥
इत्युक्त्वा विरते तस्मिंश्चतुर्वदनपङ्कजे ।
उवाच पार्वतीकान्तः करुणाकोमलाशयः ॥ १८ ॥
कुजम्भो नाम दैत्येन्द्रो बलवान्बाधते सुरान् ।
तं हत्वा मद्गिरा नन्दी विश्वमानन्दयिष्यति ॥ १९ ॥
नन्दिरुद्रं विजानीहि द्वितीयं विग्रहं मम ।
एतेन हन्यमानः स कुजम्भो न भविष्यति ॥ २० ॥
किमन्यदेष वः कामं नन्दी संपादयिष्यति ।
इत्युक्त्वा त्रिपुरारातिर्नन्दिरुद्रमभाषत ॥ २१ ॥
पुत्र नन्दिन्कुजम्भादीन्निवारय मदाज्ञया ।
गच्छाद्यैवाभयं प्राप्य मोदन्तां निखिलाः सुराः ॥ २२ ॥
इत्युक्तवन्तं श्रीकण्ठं पुरतो रचिताञ्जलिः ।
उवाच नन्दी सानन्दो भगवद्भावनावशात् ॥ २३ ॥
कुजम्भो भगवन्दैत्यो जीयते भवदाज्ञया ।
सर्वे तदीयाश्च मया हन्यन्ते नाथ दानवाः ॥ २४ ॥
किंतु तेषां गुरुः काव्यो विद्यां त्वत्तः स लब्धवान् ।
तयैव संजीवयते निहतानपि दानवान् ॥ २५ ॥
संजीवितेषु दैत्येषु निहतेष्वपि विद्यया ।
पुनः पुनर्वधे सोऽयं प्रयत्नः परिभाव्यते ॥ २६ ॥

तदत्र कोऽप्युपायोऽस्ति भगवन्कथ्यतां त्वया ।
भवदिच्छैव सर्वत्र व्यापारेषु प्रगल्भते ॥ २७ ॥
इत्युक्तो नन्दिरुद्रेण बभाषे परमेश्वरः ।
दशनप्रभया कुर्वन्मुकुटेन्दोर्विडम्बनम् ॥ २८ ॥
मद्दत्तविद्यागर्वेण ताञ्जीवयति चेत्कविः ।
तमास्कन्द्य ममाभ्यर्णमानयेस्त्वमसंशयः ॥ २९ ॥
इत्याज्ञया प्रभोर्नन्दी निर्जगाम सुरैः सह ।
देवपादरजोबिन्दून्निधाय निजमूर्धनि ॥ ३० ॥
अथ ब्रह्मादयो देवाः प्रतिमुच्य महेश्वरम् ।
नन्दिरुद्रं पुरस्कृत्य जग्मुर्दैत्यजिगीषया ॥ ३१ ॥
मूर्तानि विविधान्यस्त्राण्याज्ञया परमेशितुः ।
अन्वगच्छन्प्रदीप्तानि नन्दिरुद्रं महाबलम् ॥ ३२ ॥
नानामूर्धोदरमुखैः कालानलसमप्रभैः ।
महाकायैर्गणैर्नन्दी तदानीं परिवारितः ॥ ३३ ॥
कुजम्भनगरं गत्वा सुरैः सह गणेश्वरः ।
निजघान महादैत्याननन्तान्समरोन्मुखान् ॥ ३४ ॥
अनन्तदैत्यमध्ये स नन्दिरुद्रोऽप्यराजत ।
जरत्तृणाध्वनि यथा दीप्यमानो दवानलः ॥ ३५ ॥
दानवानां गणैस्तत्र निहता अष्ट कोटयः ।
नन्दिना क्षयितं सैन्यं कुजम्भोऽथ व्यलोकयत् ॥ ३६ ॥
उवाच स्वगुरुं काव्यं प्रणम्य रचिताञ्जलिः ।
भगवन्दानवाः सर्वे निहता नन्दिना रणे ।
प्रत्युज्जीवय तान्सर्वान्विद्यया शिवदत्तया ॥ ३७ ॥
इति श्रुत्वा गिरं तस्य शुक्रः प्रोवाच सस्मितः ।
प्रत्युज्जीवयितुं शक्तिर्मम दैत्यान्प्रगल्भते ॥ ३८ ॥
कुजम्भमिति संदिश्य संस्पृश्य स पयांसि च ।

ध्यायति स्म परां विद्यामेकतानेन चेतसा ॥ ३९ ॥
अथ कुन्दस्रगाकीर्णा शुक्लाम्बरमनोरमा ।
अतिप्ररूढसौभाग्या कन्यका समदृश्यत ॥ ४० ॥
लावण्यं दधती चन्द्रसहस्रादधिमेदुरम् ।
सा कन्या दैत्यगुरुणा कथ्यते स्म शुचिस्मिता ॥ ४१ ॥
का त्वं किमिति कल्याणि कस्य वेति निवेद्यताम् ।
इत्युक्ता दैत्यगुरुणा सा बभाषे स्मितानना ॥ ४२ ॥
अहं संजीवनी विद्या मृताञ्जीवयितुं जनान् ।
प्राप्ता भवद्ध्यानबलाद्दत्तपूर्वा महेशिना ॥ ४३ ॥
योजनां तन्मम भवान्करोतु क्वचनाधुना ।
यदधिष्ठाय निःशेषाञ्जीवयिष्यामि संस्थितान् ॥ ४४ ॥
इति श्रुत्वा वचस्तस्याः सोऽपि व्यधित योजनाम् ।
कमण्डलुजले मन्त्रमावहन्बहुशस्ततः ॥ ४५ ॥
अदृष्टविग्रहा भूत्वा संस्थितान्प्रोक्ष्य दानवान् ।
अशेषानेव तत्कालं जीवयामास भार्गवः ॥ ४६ ॥
ते प्रत्युज्जीविताः सर्वे भार्गवेण निरङ्कुशाः ।
भूयोऽपि युद्धाभिमुखा निर्ययुर्विविधायुधाः ॥ ४७ ॥
नन्दी करप्रहारेण यान्यान्दैत्यानमारयत् ।
ते ते विद्याप्रभावेण जीविता भृगुसूनुना ॥ ४८ ॥
निहन्यमानान्दितिजान्वीक्ष्य काव्येन जीवितान् ।
भूयो भूयः समुद्विग्नो नन्दिरुद्रो व्यचिन्तयत् ॥ ४९ ॥
मया विनिहतान्दैत्यान्संजीवयति यः खलः ।
निबध्य नागपाशैस्तं शंभोर्दास्यामि धूर्जटेः ॥ ५० ॥
इति संचिन्तयन्नन्दी दानवैर्बहुभिर्वृतम् ।
जग्राह भार्गवं केशेष्वाकृष्य बलिनां वरः ॥ ५१ ॥
काव्यास्कन्दक्षणे नन्दी न्ययच्छद्दानवान्बहून् ।

नागपाशैरतिदृढैर्गाढप्रहरणोद्यतान् ॥ ९२ ॥
दैत्यानां पाशबद्धानां शोणितं यद्विनिर्ययौ ।
तदेव गैरिकत्वेन गिरिष्वद्यापि दृश्यते ॥ ९३ ॥
नागपाशैस्ततो बद्ध्वा भार्गवं प्रमथेश्वरः ।
महेश्वरस्य निकटं नयति स्म जगत्प्रभोः ॥ ९४ ॥
भगवान्भार्गवं प्रेक्ष्य दैत्यपक्षानुरागिणम् ।
न्यगरद्वामहस्तेन निवेश्य वदनोदरे ॥ ९५ ॥
निगीर्णे भार्गवे तत्र क्रीडया चन्द्रमौलिना ।
नन्दी कुजम्भप्रमुखाञ्जघानाखिलदानवान् ॥ ९६ ॥
हते कुजम्भे दैत्येन्द्रे नन्दिरुद्रेण दोर्बलात् ।
स्तुवन्तः शिवचारित्रं स्वपुराण्यगमन्सुराः ॥ ९७ ॥
अत्रान्तरे दैत्यगुरुः प्रविष्टो जठरं प्रभोः ।
अतिविस्तीर्णमालोक्य बभ्राम शान्तमानसः ॥ ९८ ॥
विस्तीर्णे जठरे देव संचरन्तं विलोक्य तम् ।
योगेन निबिडीचक्रे निजकुक्षिं महेश्वरः ॥ ९९ ॥
स्वकुक्षौ योगमाहात्म्यात्प्रभुणा निबिडीकृते ।
पीडामवापदुशना भग्ननिःशेषविग्रहः ।
तुष्टाव भार्गवः शंभुं भक्तिपूतेन चेतसा ॥ ६० ॥
त्वमेव भगवन्द्रष्टा स्थितिकर्ता त्वमेव हि ।
संसारकर्ता त्वं नान्यस्तुतः कोऽन्यः परः प्रभो ॥ ६१ ॥
तवोदरे जगत्सर्वं विभो स्थावरजङ्गमम् ।
त्वमेव तन्मम त्राता त्वमेव च गतिर्मम ॥ ६२ ॥
इति स्तुतः स काव्येन जगाद परमेश्वरः ।
कृपासहृदयो देवः सर्वेषामभयप्रदः ॥ ६३ ॥
शुक्रमार्गेण निर्गच्छ मम मेढ्रोदरस्पृशा ।
प्रथस्व शुक्रो मत्पुत्रस्तत एवाजरामरः ॥ ६४ ॥

एवं देवाद्वरं प्राप्य भार्गवो निर्गतस्ततः ।
दृढीचक्रे महादेवभक्तिं च विगतव्यथः ॥ ६५ ॥
त्रिपुररिपुरिति प्रकाशमन्ये
हृदि विनिधाय यथेष्टमाचरन्तु ।
अकृतककरुणारसस्तु शंभुः
प्रणयिनि कुत्र न संमुखत्वमेति ॥ ६६ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ शुक्रवरप्रदानं नाम चतुर्विंशः प्रकाशः ॥

---

पञ्चविंशः प्रकाशः ।

ॐ श्रीनेत्रनाथो जयति ।

भूरीनेष निहत्य कञ्चुकवतो मोहो गरुत्मानिव
क्षुद्रो मां ग्रसते महेश्वर वृथा शास्त्रं कृतार्थप्रथम् ।
शक्तिस्तद्भवतो यदि त्रिभुवनत्राणक्षमा जृम्भते
किं किं तन्न ममाद्य सिध्यति पदं लप्स्ये च लोकोत्तरम् ॥१॥
परोपतापं कुरुते तावदेव दुराशयः ।
यावन्माहेश्वरी शक्तिर्हृदयं नाधितिष्ठति ॥ २ ॥
बभूव पूर्वं सिद्धेन्द्रो विश्वावसुरिति श्रुतः ।
कन्यां मलयवत्याख्यां स च लेभे कदाचन ॥ ३ ॥
अपूर्वलावण्यमयी बाल्यात्प्रभृति कन्यका ।
देवीमाराधयामास पार्वतीं विश्वमातरम् ॥ ४ ॥
सुवर्णप्रतिमां कृत्वा कदाचिद्भक्तिपावना ।
मन्दारकुसुमोत्तंसैः पार्वतीं पर्यपूजयत् ॥ ५ ॥
कदाचिदथ शोणाश्मवेद्यां कनकपङ्कजैः ।
उपास्ते स्म महादेवीं कर्पूरशकलैस्तथा ॥ ६ ॥
मुक्ताहारसमूहेन कदाचिद्विमलाम्भसि ।
गौरीमाराधयामास मनसा विपुलेन च ॥ ७ ॥

अनन्यकर्तव्यतया सिद्धाधिपतिकन्यका ।
एवं सदा महादेवीं ध्यायन्ती द्रागवर्तत ॥ ८ ॥
कवित्वं सर्वभाषासु कला लोकोत्तरास्तथा ।
स्वयं तस्या महादेवीप्रसादेन समुद्ययुः ॥ ९ ॥
कदाचित्सा समारूढा लावण्यं चारुहासिनी ।
भर्तारं स्वोचितं वाञ्छन्त्यभूच्चिन्तानतानना ॥ १० ॥
विश्वस्य सा गाढतरं गृहीत्वाङ्के च वल्लकीम् ।
अथोपवीणयांचक्रे सिद्धकन्या हिमाद्रिजाम् ॥ ११ ॥
तुषारशैलतनयां सेवित्वा वीणया चिरम् ।
पूजयित्वा च कुसुमैर्विजने सा व्यजिज्ञपत् ॥ १२ ॥
इयत्तो जगतो माता महादेवस्य वल्लभा ।
एका विजयसे देवि भक्तलोकाभयप्रदा ॥ १३ ॥
यस्त्वामर्चयते देवि कदाचिदपि मानवः ।
लभते नाशुभं मातः कदाचिदपि स क्वचित् ॥ १४ ॥
ब्रह्मा विष्णुर्महेन्द्रश्च नुत्वा त्वां विश्वमातरम् ।
किं किं न कार्यं कुरुते तत्त्वमेव परा गतिः ॥ १५ ॥
न किमस्ति महादेवि त्वत्प्रसादान्ममाम्बिके ।
स्पृहयन्ति मदीयाय सौभाग्याय सुरस्त्रियः ॥ १६ ॥
तदेक एव रुद्राणि शिष्यते मे मनोरथः ।
नासाद्यते यदद्यापि तादृक्समुचितः पतिः ॥ १७ ॥
तत्किं व्यर्थेन रूपेण विद्यया यौवनेन च ।
यदसाधारणगुणो नाद्यापि प्राप्यते पतिः ॥ १८ ॥
इत्युक्त्वा विगलद्बाष्पगद्गदाक्षरया गिरा ।
भूयो भूयो निशश्वास सा कम्पितपयोधरा ॥ १९ ॥
गाढभक्तिवशात्तस्यास्तदानीं मोहकारिणी ।
अभाषताभयं देवी प्रकटीकृतविग्रहा ॥ २० ॥

उक्ताभया ततो देवी भक्तेषु करुणापरा ।
पुनरप्यब्रवीच्चारुदशनोद्दीपिताम्बरा ॥ २१ ॥
अलं विषादवादेन पुत्रि मा क्लेशयेर्मनः ।
निष्फलत्वमवाप्नोति न मद्भक्तमनोरथः ।
अद्यैव लक्ष्यसे वत्से कान्तं समुचितं पतिम् ॥ २२ ॥
तत्किमन्यः समुचितः पतिर्यस्ते भविष्यति ।
विद्याधराधिपतितां लभतां स मदाज्ञया ॥ २३ ॥
अन्तर्दधे सिद्धसुतामिति व्याहृत्य पार्वती ।
अभीष्टदानेन विना नान्यत्कृत्यं महात्मनाम् ॥ २४ ॥
ततो भगवतीवाक्यरसायनचमत्कृता ।
कुतोऽप्युपागताभिः सा सखीभिः परिवारिता ॥ २५ ॥
सखीभिः सह सा तस्थौ बाह्योपवनवर्त्मनि ।
आययौ तत्क्षणं राजसूनुर्जीमूतवाहनः ॥ २६ ॥
स राजसूनुस्तां वीक्ष्य बालां हृदयहारिणीम् ।
चचार गोचरे पुष्पधन्वनश्चारुयौवनः ॥ २७ ॥
तया मलयवत्यापि तं विलोक्याभिजातया ।
अवापि मदनाधीनावस्थितिर्निजचेतसि ॥ २८ ॥
अधिगम्याथ तां वार्तां विश्वावसुरुदारधीः ।
जीमूतवाहनं योग्यं जानन्निर्वृतिमाययौ ॥ २९ ॥
जीमूतकेतुर्जीमूतवाहनस्य पिता ततः ।
पुत्रार्थे तां शुभां कन्यां विश्वावसुमयाचत ॥ ३० ॥
अवाप्य तां प्रियतमामथ जीमूतवाहनः ।
विलासैर्बहुभिर्निन्ये क्षणवद्वत्सरान्बहून् ॥ ३१ ॥
ततः प्रोवाच दयितां कदाचिद्विजने निशि ।
जीमूतवाहनः किंचित्स्मितधौतारुणाधरः ॥ ३२ ॥
पूर्वजातिस्मरः सोऽहमस्मिन्सुन्दरि जन्मनि ।
प्राग्जन्मन्यपि मे पत्नी त्वमेव सुभगाभवः ॥ ३३ ॥

इत्युक्ते तेन सुभगा सा जगादाधिकादरा ।
स्मराम्यहं न किंचित्तु तत्त्वया कथ्यतामिति ॥ ३४ ॥
पुनः पुनरसौ पत्न्या प्रार्थ्यमानः सकौतुकम् ।
अभाषत पयोवाहध्वनिगम्भीरया गिरा ॥ ३५ ॥
अहं विद्याधरः पूर्वजन्मन्यासं नभोगतिः ।
तुषारशैलशिखरं कदाचित्क्रीडितुं गतः ॥ ३६ ॥
ततो व्योमस्थितस्यैव प्रणतस्य च शंकरः ।
गौर्यालोकावसानां मे मर्त्यतामादिशत्क्रुधा ॥ ३७ ॥
ततो विद्याधरीभावं तच्छापेन परित्यजन् ।
वणिजामन्वये जातो वलभ्यामप्यहं पुरि ॥ ३८ ॥
महाधनो वणिक्पुत्रो वसुदत्ताभिधां श्रयन् ।
अहं वलभ्यां तत्रैव वृद्धिं यातो धनैः सह ॥ ३९ ॥
मनोवत्यभिधाना च पत्नी प्रियतमाभवत् ।
बहुकालं तया सार्धं विलासैरत्यवाहयम् ॥ ४० ॥
क्रमेण पलिताक्रान्तो व्याधिव्यामुह्यदिन्द्रियः ।
भिषग्भिरप्रतिकार्यां व्यथामहमवाप्तवान् ॥ ४१ ॥
क्रमाज्जराविक्लवया पत्न्या साकमहं ततः ।
अपातयं स्वमात्मानं कालिञ्जरमहीधरात् ॥ ४२ ॥
शबरो मे सुहृद्भूत्सोऽपि वार्धकविप्लुतः ।
प्राणान्मुमोच तत्रैव पतित्वा धरणीतलात् ॥ ४३ ॥
अस्मिन्नवसरे सर्वे भाविभोगाभिलाषिणः ।
स्मरन्तः शंकरं देवं स्तुवन्तश्च लयं गताः ॥ ४४ ॥
प्राणनिर्याणसमये स्तुतो यत्परमेश्वरः ।
फलं तस्येदमापन्नं यद्भूयोऽपि समागमः ॥ ४५ ॥
मुमोच शबरो यश्च प्राणान्पशुपतिं स्मरन् ।
स मित्रावसुरित्यास्ते विद्याधरकुलोद्भवः ॥ ४६ ॥

अहं स वसुदत्तश्च त्वं च सैव मनोवती ।
शबरश्च तव भ्राता मित्रावसुरिति श्रुतः ॥ ४७ ॥
तदेतदावयोर्भूयो दम्पतित्वमुपस्थितम् ।
त्वद्भ्राता च ममाभीष्टः सौहृदात्पूर्वसंचितात् ॥ ४८ ॥
जीमूतवाहनस्येति गिरं श्रुत्वा मनोरमाम् ।
प्राप्ता मलयवत्यापि हृदये निर्वृतिः परा ॥ ४९ ॥
कदाचित्स श्वशुर्येण साकं सर्वत्र संचरन् ।
वेलावनं जलनिधेः प्रेक्षते स सकौतुकम् ॥ ५० ॥
अस्थिराशीनसौ तत्र पश्यति स सहस्रशः ।
मित्रावसुं च पप्रच्छ कस्यामी चेति कौतुकात् ॥ ५१ ॥
ततस्तद्वचनं श्रुत्वा मित्रावसुरभाषत ।
वृत्तान्तं शृणु संक्षेपान्निःशेषं कथये तव ॥ ५२ ॥
फणिमाता पुरा कद्रूर्व्याजलब्धजया किल ।
विनतां ताक्ष्यजननीं प्रापयामास दासताम् ॥ ५३ ॥
ताक्ष्यस्तेनैव वैरेण मोचयित्वा स्वमातरम् ।
काद्रवेयान्हठाद्भोक्तुं प्रावर्तत महाबलः ॥ ५४ ॥
स(त)दा तान्कवलीचक्रे संप्रविश्य रसातलम् ।
अमर्दयत्कांश्चिदपि त्रासात्केचित्स्वयं मृताः ॥ ५५ ॥
अथोपद्रवमालोक्य युगपत्संक्षयावहम् ।
साभ्यर्थनं सुपर्णस्य समयं वासुकिर्व्यधात् ॥ ५६ ॥
त्वयि प्रविष्टे पातालं सर्वे नश्यन्ति भोगिनः ।
आहारायैकमेकं ते प्रेषये तीरमम्बुधेः ॥ ५७ ॥
प्रतिपद्येति समयं गरुडस्तदनन्तरम् ।
एकमेकमहिं भुङ्क्ते वासुकिप्रहितं सदा ॥ ५८ ॥
ततः प्रभृति ताक्ष्र्येण भक्ष्यमाणेषु भोगिषु ।
तदस्थिराशयो वृद्धिं गताः कालेन भूयसा ॥ ५९ ॥

इति मित्रावसोः श्रुत्वा दुःखमन्तर्बभार सः ।
भोक्तारं गरुडं निन्दन्विस्रष्टारं च वासुकिम् ॥ ६० ॥
एकस्य फणिनः प्राणान्रक्षिष्यामि निजात्मना ।
इति स चिन्तयामास तदा स दृढनिश्चयः ॥ ६१ ॥
ततो मित्रावसोः पित्रा द्रुतमागम्यतामिति ।
विसृष्टः कोऽपि पुरुषस्तयोर्निकटमागमत् ॥ ६२ ॥
गच्छ मित्रावसो पश्चादेष्यामीति विसृज्य तम् ।
एकः स निश्चितार्थेच्छः शुश्राव करुणं ध्वनिम् ॥ ६३ ॥
अपश्यदथ सोऽन्विष्यन्युवानं सुन्दराकृतिम् ।
निवर्तयन्तं जननीं रुदतीं प्रणयाक्षरैः ॥ ६४ ॥
जिज्ञासमानस्तद्वार्तां यावत्तत्र स तिष्ठति ।
तावद्बभाषे जननी तनयस्नेहविह्वला ॥ ६५ ॥
हा शङ्खचूड विस्तीर्णे नागलोकेऽपि वेधसा ।
त्वमेव लब्धो मद्भाग्यक्षयाद्वासुकिना तथा ॥ ६६ ॥
इत्यादिप्रलपन्तीं तां यावत्स व्यसृजद्युवा ।
तावत्सोऽपि भुजंगं तं गरुडाहारमध्यगात् ॥ ६७ ॥
अथ प्रणन्तुं गोविन्दं[1] स यावदगमत्फणी ।
जीमूतवाहनेनात्मा ददे तावद्गरुत्मते ॥ ६८ ॥
आगतः शङ्खचूडोऽथ गरुत्मन्तं व्यलोकयत् ।
जीमूतवाहनाहारकारिणं शिखरे गिरेः ॥ ६९ ॥
प्राणेषु लब्धेष्वपि स क्रन्दति स महोरगः ।
तस्यासमीक्ष्यकारित्वं निनिन्द गरुडस्य च ॥ ७० ॥
अत्रान्तरे स्वपितरौ प्राप्तौ जीमूतवाहनम् ।
अन्वेष्टुं सुचिरायातं कान्तं मलयवत्यपि ॥ ७१ ॥
तेऽपि तच्चरितं सर्वं निशम्य फणिपुंगवात् ।
निनिन्दुर्गरुडं तारैर्वचोभिः साश्रुलोचनाः ॥ ७२ ॥

---

१. 'गोकर्णं' ख.

अर्धभुक्तं मुमोचाथ तार्क्ष्यो जीमूतवाहनम् ।
स्वयं च लज्जितस्तस्थौ स्वपादन्यस्तलोचनः ॥ ७३ ॥
सर्वे ततस्ते साक्रन्दास्ताडयन्तो हठादुरः ।
जीमूतवाहनाभ्यर्णमवापुः स्नेहविह्वलाः ॥ ७४ ॥
अथ शोचत्सु सर्वेषु स्वभाग्यानि निरन्तरम् ।
जीमूतवाहनः प्राणान्मुमुचे निबिडव्यथः ॥ ७५ ॥
जीमूतवाहनं वीक्ष्य मरणस्तिमितेक्षणम् ।
सर्वेऽपि ते चितामेकामकुर्वन्मरणार्थिनः ॥ ७६ ॥
आश्लिष्य पितरौ पुत्रं मृतं जीमूतवाहनम् ।
चक्रन्दतुस्ततो बाष्पगद्गदाक्षरया गिरा ॥ ७७ ॥
आवयोर्मृतयोरेकः कुलतन्तुर्भवेदिति ।
हन्त प्रतिहतं वाक्यमिदानीं प्राङ्मृते त्वयि ॥ ७८ ॥
काश्मीरकाङ्गरागेण यः कायस्तव वर्धितः ।
स एव दह्यते सद्यश्चिताहुतवहार्चिषा ॥ ७९ ॥
इति पित्रोः प्रलपतोर्गाढप्रेमभराकुला ।
बभाषे सा मलयवत्यादायोरसि तत्पदौ ॥ ८० ॥
अयं विपद्यते हन्त पतिर्दुष्कर्मणा मम ।
लीलातल्पमिवारुह्य तच्चितां सुखमासुमः ॥ ८१ ॥
त्वमम्बिकेति किं वान्यत्कथ्यसे परमेश्वरि ।
अनन्यरक्षणीयां मामेहि त्वं पालयाधुना ॥ ८२ ॥
भावी विद्याधरपतिर्भर्ता मे कथितस्त्वया ।
मा भूद्विद्याधरैश्वर्यं मर्त्यत्वमपि हा हतम् ॥ ८३ ॥
असत्यवादिनी देवी संपन्ना यदि सांप्रतम् ।
भक्तानां का तदस्त्याशा प्रसन्नायामपि त्वयि ॥ ८४ ॥
असाध्यं तव किं मातः प्रत्युज्जीवय मे पतिम् ।
अनन्यगामी शब्दोऽयं दयालुरिति चिन्त्यताम् ॥ ८५ ॥

साधयन्ते परिमितं प्राणान्दातुं न केचन।
अशेषाभीष्टनिष्पत्तिं त्वादृशां कुरुते यतः॥ ८६॥
दत्वा स्वकायं मद्भर्ता वयं सर्वेऽपि मारिताः।
रक्षित्वैकमहिं तार्क्ष्यात्कुलं सर्वमुपेक्षितम्॥ ८७॥
मातः परिमिता अन्ये ददतोऽपि न जायते।
सर्वज्ञस्य परा शक्तिस्त्वमेव फलदायिनी॥ ८८॥
पत्या सह चितावह्निं प्रवेष्टुमहमुद्यता।
तन्मे मृत्योः किमन्यत्स्याद्भवद्भक्तिश्च किंफला॥ ८९॥
इत्युक्तवत्यसौ शोकादन्ये च विविशुश्चिताम्।
परिरभ्य तमङ्केऽङ्कैर्मृतं जीमूतवाहनम्॥ ९०॥
चितां प्रविष्टास्ते वाणीमशृण्वन्नभयात्मिकाम्।
यामाकर्णयतां वह्निरभूत्पीयूषवन्मृदुः॥ ९१॥
अथादृश्यत निःशेषदुरितक्षयकारिणी।
अभयं ददती देवी पूर्णचन्द्रशतानना॥ ९२॥
प्रत्युज्जीवतु सोऽयं मे पुत्रो जीमूतवाहनः।
इत्युक्त्वा तन्महादेवी पश्यति स्म दयानिधिः॥ ९३॥
देवीसंदर्शनेनापि चितावह्नौ प्रशाम्यति।
रसायनरसेनेव सिक्ताः सर्वे मुदं ययुः॥ ९४॥
देवीदृक्पातमात्रेण यथा जीमूतवाहनः।
अहो वरिष्ठाः प्राणास्ते तेजः पूर्वातिशायि च॥ ९५॥
सप्रमोदं समस्तेषु ततो विनतमौलिषु।
अभाषत महादेवी निर्मितस्मितचन्द्रिका॥ ९६॥
वत्से मलयवत्येष भावी विद्याधराधिपः।
पतिस्तवेति वाणी मे रामणीत्वाय कल्पते॥ ९७॥
यो यः पश्यति मां भक्त्या यो यो ध्यायति वा क्वचित्।
क्षणादभीष्टं दास्यामि तस्य तस्य प्रतिज्ञया॥ ९८॥

इति विद्याधरैश्वर्यं त्वद्भक्तेः प्रतिपादितम् ।
तत्किमन्यदभीष्टं ते ददामि ब्रूहि संप्रति ॥ ९९ ॥
इत्युक्तवत्यां पार्वत्यां जीवितं वीक्ष्य सा पतिम् ।
मनोरथाधिकं प्राप्य वन्दमाना जगाद च ॥ १०० ॥
किमन्यत्प्रार्थनीयं मे त्वां दृष्ट्वा जननीं स्वयम् ।
संजीवितश्च भर्तायं विद्याधरपतिः कृतः ॥ १०१ ॥
तथापि प्रार्थयाम्येतत्त्वयि भक्तिर्दृढास्तु मे ।
यश्चाकाङ्क्षति भर्ता मे तत्तस्मै सफलीकुरु ॥ १०२ ॥
इति व्याहृत्य विरता यदा मलयवत्यभूत् ।
देवीं भ्रूसंज्ञयोवाच तदा जीमूतवाहनः ॥ १०३ ॥
मातस्त्वद्दर्शनादेव कृतार्थत्वमवाप्तवान् ।
निर्विरामोऽप्यहं याचे करुणामेव तावकीम् ॥ १०४ ॥
अस्त्यन्यत्प्रार्थनीयं मे यत्पुनर्न भविष्यति ।
अयं तार्क्ष्योऽद्यप्रभृति मा भक्षयतु पन्नगान् ॥ १०५ ॥
अस्थिशेषोऽपि सर्पौघस्त्वत्प्रसादेन जीवतु ।
प्रणिपत्येति विज्ञप्तिं व्यधाज्जीमूतवाहनः ॥ १०६ ॥
तार्क्ष्योऽप्यवसरे तस्मिन्देवीं वन्दितुमभ्यगात् ।
उवाच गरुडं देवी प्रणमन्तं पुरः स्थितम् ॥ १०७ ॥
अद्य प्रभृति नागास्ते न भक्ष्या वचसा मम ।
मद्भिरैवास्तु ते तृप्तिर्विनाप्युरगभोजनम् ।
इति देवीवचः सोऽपि मूर्ध्नि जग्राह सादरः ॥ १०८ ॥
अथ सा कृपया सर्वानस्थिशेषान्भुजङ्गमान् ।
देवी संजीवयामास सुधाविशदया गिरा ॥ १०९ ॥
अस्थिशेषा अपि ततो नागाः संजीवितास्तथा ।
जग्मुः स्वभवनं त्यक्त्वा वैरं साकं गरुत्मता ॥ ११० ॥
देव्या चैवंविधं तत्र रचितं वीक्ष्य निर्जराः ।
न्यक्षिपञ्जयशब्दाङ्कान्मन्दारकुसुमाञ्जलीन् ॥ १११ ॥

इत्थमुक्तस्ततो देव्या पितृभ्यां सह सप्रियः ।
विद्याधराधिपत्यार्थमगाज्जीमूतवाहनः ॥ ११२ ॥
संजीव्य भुजगान्सर्वान्संतर्प्य च खगेश्वरम् ।
अन्तर्दधे महादेवी तदानीं करुणानिधिः ॥ ११३ ॥
परमिदमुपकर्तुमत्र को न
प्रभवति नाम जगत्सु पुण्यवृद्धिः ।
जगदुपकरणे शिवस्य भक्तिः[1]
प्रसरति तत्र ततः परो वदान्यः ॥ ११४ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ जीमूतवाहनवरप्रदानो नाम पञ्चविंशः प्रकाशः ॥

षड्विंशः प्रकाशः ।

ॐ नमः स्वच्छस्वतन्त्रपरामृतसाराय श्रीमृत्युजिते ।
आबाल्याद्बहुवर्धितो बहुविधैश्चेष्टाशतैरात्मजः
संविद्देवि निगृह्यते तव पुरः सद्या(त्या)लये यन्मया ।
तेनैवाक्षयमीश्वरप्रियतमा येनाश्रये निर्वृतिं
श्लाघ्यो वीरवरो भवेयमियता संपूर्णसर्वेप्सितः ॥ १ ॥
वर्धयन्ती ह्यपत्यानि बह्वीः सिद्धीः प्रयच्छति ।
मृतान्संजीवयत्येव पूजिता शक्तिरैश्वरी ॥ २ ॥
अभूद्विक्रमतुङ्गाख्यो निधिः सकलसंपदाम् ।
पार्थिवो विक्रमपुरे जगत्रितयशालिनि ॥ ३ ॥
एकदा तस्य सेवार्थं विप्रो वीरवराभिधः ।
आययौ मालवः शूरस्तरुणः सुन्दराकृतिः ॥ ४ ॥
राजा धनमविच्छिन्नं ददौ तस्मै दिने दिने ।
सिंहद्वारस्थितः सोऽपि तस्य सेवामकल्पयत् ॥ ५ ॥
मध्याह्नमात्रमकरोत्स्वगृहे स निजाह्निकम् ।
अवशिष्टं दिनं निन्ये निशां च नृपमन्दिरे ॥ ६ ॥

1. 'शक्तिः' ख.

एकदा वर्षति घने निशायां बहुलक्षणे ।
प्रासादवर्ती भूपालः शुश्राव रुदितध्वनिम् ॥ ७ ॥
आक्रन्दध्वनिमाकर्ण्य राजा चिरमचिन्तयत् ।
निर्दुःखेऽपि जगत्यस्मिन्वर्तते को रुदन्निति ॥ ८ ॥
संचिन्त्येति महीपालश्चिन्ताचकितचेतनः ।
बहिस्तिष्ठति को वेति गम्भीरां गिरमब्रवीत् ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा ततो वीरवरोऽब्रवीत् ।
अहमेकः स्थितो राजन्किं करोम्यभिधीयताम् ॥ १० ॥
इति श्रुत्वा वचस्तस्य संतुष्टो दृढसेवया ।
अब्रवीन्मेदिनीपालो वाचं सौजन्यकोमलाम् ॥ ११ ॥
कापि वीरवर स्त्रीयं दूरे कचन रोदिति ।
किं दुःखमस्याः केयं च गत्वेति परिपृच्छ्यताम् ॥ १२ ॥
आकर्ण्य तद्गिरा यामीत्युक्त्वा वीरवरो द्विजः ।
करे करतलां धुन्वन्प्रययौ धीरचेष्टितः ॥ १३ ॥
प्रासादादवरुह्याथ करवालकरो नृपः ।
कौतूहलेन निर्यान्तं तं वीरवरमन्वगात् ॥ १४ ॥
अथ सोऽनुसरन्वीरो ब्राह्मणो रुदितध्वनिम् ।
पुराद्बहिर्विनिर्गत्य सरो दीर्घं व्यलोकयत् ॥ १५ ॥
दयालो नाथ हा शूर त्वया त्यक्ता कमाश्रये ।
वदन्तीमिति तन्मध्ये सोऽपश्यद्रुदतीं स्त्रियम् ॥ १६ ॥
किं क्रन्दसि च कासि त्वमित्युक्ता तेन साब्रवीत् ।
तृतीयेऽह्नि मरिष्यन्तं शोचामि पृथिवी नृपम् ॥ १७ ॥
पतिर्विक्रमतुङ्गो मे नाभूदीदृक्कदाचन ।
तेनाहं रोदिमि भृशमस्मिन्नाह्नि मरिष्यति ॥ १८ ॥
वत्स ज्ञानबलात्सर्वं भासते मे शुभाशुभम् ।
त्रिदिवस्थो यथाद्राक्षीद्देवपुत्रः स सुप्रभः ॥ १९ ॥

---

१ 'धास्यताम्' क-ख.

स हि पुण्यक्षयाद्भावि स्वर्गात्पतनमैक्षत ।
दिव्यदृक्सूकरीगर्भे सप्तभिश्चोद्भवद्दिनैः ॥ २० ॥
शुशोच दिव्यान्भोगान्स स्वात्मानं च सुरात्मजः ।
आलोक्य तं च शोचन्तमिन्द्रः पप्रच्छ कारणम् ॥ २१ ॥
अधिगम्य च वृत्तान्तमुपायममुमभ्यधात् ।
नमः शिवायेति सदा वदञ्जातिस्वभावतः ।
इत्यमर्त्यात्मजोऽप्यस्य भारतीं प्रत्यपद्यत ॥ २२ ॥
ततो नमः शिवायेति वदन्सप्त दिनान्यसौ ।
न लेभे सूकरीगर्भं किंतु लोकाञ्शुभावहान् ॥ २३ ॥
इत्थं चक्रन्द स यथा फलिष्यद्वीक्ष्य दुष्कृतम् ।
तथा शोचाम्यहं मृत्युं भाविनं च महीपतेः ॥ २४ ॥
इति वीरवरः श्रुत्वा मेदिनीमभ्यधात्तदा ।
रक्षोपायोऽस्ति चेद्ब्रूहि सुप्रभस्येव वासवः ॥ २५ ॥
इत्युक्ता तेन पृथिवी रक्षोपायमभाषत ।
भवत्पुत्रोपहारेण चण्डिकायास्तथालये ॥ २६ ॥
रक्षोपायं ततः श्रुत्वा हन्त वीरवरोऽब्रवीत् ।
विषादस्त्यज्यतां देवि सद्यः संपादयाम्यहम् ॥ २७ ॥
आकर्ण्येति गिरं तस्य भूमिस्तूष्णीमकल्पयत् ।
सोऽपि स्वपुत्रमानेतुं जगाम निजमन्दिरम् ॥ २८ ॥
शशंस रक्षणं राज्ञः .................... ।
.................... सापि पुत्रोपहारतः ॥ २९ ॥
तौ दम्पती ततः पुत्रं बोधयित्वा चिकीर्षितम् ।
वर्णयामासतुः सर्वं प्रभुरक्षाफलात्मकम् ॥ ३० ॥
श्रुत्वा पित्रोः स वृत्तान्तं शिशुः सत्त्ववराभिधः ।
यथार्थनामा सानन्दं जगाद मधुरं वचः ॥ ३१ ॥
अहो धन्योऽस्मि यत्प्राणै रक्ष्यते मेदिनीपतिः ।
तस्य प्रभोरियद्भुक्तमधुना शोध्यते चिरम् ॥ ३२ ॥

इत्युक्त्वा स गिरं पित्रोरङ्गीचक्रे शुभाशयः ।
अनुगच्छन्स शुश्राव राजासौ गूढविग्रहः ॥ ३३ ॥
ततः सत्त्ववरं पुत्रं स्कन्धे वीरवरो वहन् ।
धर्मवत्यस्य चादाय पत्नी वीरवतीं सुताम् ॥ ३४ ॥
निर्जगाम स्वभवनादतिघोरे निशाक्षणे ।
अवाप चण्डिकागारं स च राजहितेच्छया ॥ ३५ ॥
अथावतारितः स्कन्धात्पित्रा सत्त्ववरोऽब्रवीत् ।
नौमि त्वां देवि मत्प्राणैर्जीवत्वस्मत्प्रभुर्नृपः ॥ ३६ ॥
राज्यं विक्रमतुङ्गस्य भूपादिदमकण्टिकम् ।
इत्यस्योक्तवतो माता साधु पुत्रेत्यभाषत ॥ ३७ ॥
ततः करतलाहत्या शिरो वीरवरः शिशोः ।
छित्त्वा ददौ महादेव्यै राज्ञः श्रेयोऽस्त्विति ब्रुवन् ॥ ३८ ॥
स्वामी पुत्रोपहारेण त्वया संप्रति रक्षितः ।
इति तत्रोदभूद्दिव्या वाणी वीरवरं प्रति ॥ ३९ ॥
अलक्षिते ततः सर्वं विलोकयति राजनि ।
भ्रातरं निहतं वीक्ष्य सुता दैवाद्व्यपद्यत ॥ ४० ॥
अथ धर्मवती पत्नी तं बभाषे कृताञ्जलिः ।
नाथ राज्ञः कृतं श्रेय इति सिद्धो मनोरथः ॥ ४१ ॥
अधुना कन्यकाप्येषा विपन्ना भ्रातृशोकतः ।
तत्किं मे निरपत्यायाः प्राणैरपि निरर्थकैः ॥ ४२ ॥
चितां रचय तद्यत्र सापत्या प्रविशाम्यहम् ।
भूयो भूयोऽपि मे भूयास्त्वमेवाप्रतिमः पतिः ॥ ४३ ॥
पुनः पुनः प्रियामेवं प्रार्थयन्तीं विलोक्य सः ।
किमन्यत्कथयामीति चितामेव विनिर्ममे ॥ ४४ ॥
ततो विवेश सापत्या सद्यो धर्मवती चिताम् ।
पुनः पुनर्भाषमाणा राज्ञः श्रेयो भवत्विति ॥ ४५ ॥

एवं समस्तमालोक्य वृत्तान्तं मेदिनीपतिः ।
कथं स्यामनृणोऽमीषामिति चिन्तयति स्म सः ॥ ४६ ॥
अथ वीरवरो धीरहृदयः समचिन्तयत् ।
संशुद्धं स्वामिनो भुक्तं नैकस्तत्स्थातुमुत्सहे ॥ ४७ ॥
आत्मंभरित्वमेतस्मिन्व्ययी कृत्यकुटुम्बके ।
लज्जावहं तु चामुण्डां स प्रणम्य व्यजिज्ञपत् ॥ ४८ ॥
अधिकं जीवतु स्वामी मम प्राणैः समाः शतम् ।
विज्ञप्येति च मूर्धानं तदानीं दृढनिश्चयः ॥ ४९ ॥
देव्याः पुरः करतलप्रहारेण स्वमच्छिनत् ।
साक्षात्कृत्य समीक्ष्यैव कृतकृत्यो महीपतिः ॥ ५० ॥
साश्चर्यः सविषादश्च सलज्जश्च व्यचिन्तयत् ।
न दृष्टं न श्रुतं यच्च तत्कर्म कृतवानयम् ॥ ५१ ॥
कष्टं सदारः सापत्यो मन्निमित्तमसूनदात् ।
तदत्र कथमेतेषां पुनर्भवति जीवितम् ॥ ५२ ॥
मृतेष्वमीषु प्राणैर्मे पशुवत्किं प्रयोजनम् ।
वरं तन्निजमूर्ध्नैव चामुण्डामर्चयाम्यहम् ॥ ५३ ॥
इति निश्चित्य धीरः स भक्त्या देवीं व्यजिज्ञपत् ।
ईश्वरस्य परा शक्तिः पञ्चकृत्यस्वरूपसूः ॥ ५४ ॥
एका विजयसे देवि चण्डिकेत्यभयप्रदा ।
हृदयस्थायिनी त्वं मे विश्वात्मा चावगच्छसि ॥ ५५ ॥
त्वद्भक्तिविमुखो देवि कदाचिदपि चेदहम् ।
आजन्म सेवितः प्रायः सामान्योऽपि फले जनः ।
अद्वितीया भगवती न जाने किं करिष्यति ॥ ५६ ॥
इत्युक्त्वा कन्धरायां स कृपाणं यावदत्यजत् ।
तावन्मा साहसं कार्षीरिति वागुदजृम्भत ॥ ५७ ॥
अथ तेजोमयी तेन ददृशे तत्र चण्डिका ।
प्रणम्यमाना सुचिरं बभाषे चाभयावहा ॥ ५८ ॥

पुत्र विक्रमतुङ्ग त्वं मद्भक्तिरसभाजनम् ।
तत्प्रसन्नास्मि ते वत्स वरमभ्यर्थयेप्सितम् ॥ ५९ ॥
एवमुक्तवतीं देवीमयाचत महीपतिः ।
प्राणान्वीरवरस्यैव सकुटुम्बस्य पुण्यधीः ॥ ६० ॥
एवमस्त्विति चासुण्डा तान्सर्वान्समजीवयत् ।
ऐश्वर्यस्य न किं साध्यमखण्डस्य विभाव्यते ॥ ६१ ॥
अहो कृपा महादेव्या भस्मीभूतापि सात्मजा ।
धर्मवत्युदतिष्ठत्सा यत्प्रसादेन तत्क्षणात् ॥ ६२ ॥
एवं मनोरथं राज्ञः संपाद्य परमेश्वरी ।
अन्तर्दधे नभःसद्भिर्विहितप्रसवाञ्जलिः ॥ ६३ ॥
ततः प्रभृति भूपालो राज्यं कुर्वन्नकण्टकम् ।
शुभां भगवतीभक्तिं दृढीचक्रे यथाक्रमम् ॥ ६४ ॥
युगपदपि बहूननुग्रहीतुं
प्रसरति शक्तिरखण्डिता शिवस्य ।
इति परिमितदायिनं विमुच्य
श्रयत तमेव सचेतनाः समस्ताः ॥ ६५ ॥

इति श्रीमहामाहेश्वरजयद्रथकविविरचिते हरचरितचिन्तामणौ विक्रमतुङ्गाय वरप्रदानं नाम षड्विंशः प्रकाशः ॥

---

सप्तत्रिंशः प्रकाशः।

ॐ नमः शब्दब्रह्मात्मने शिवाय ।

तत्तन्मोहतमोपहं पशुपते यल्लक्षणं तावकं
सर्वं पाणिनिबद्धमित्यधिगतं येनाद्वितीयोऽसि च ।
यन्माहात्म्यवशादुदेति च परा वाग्वाच्यवैचित्र्यसू-
स्तन्मे संविदि सामरस्यमधुना पुष्णातु लोकोत्तरम् ॥ १ ॥
संतापसंततिकरी तावत्तिष्ठति मूर्खता ।
वाच्यवाचकरूपोऽयं न ध्यातो यावदीश्वरः ॥ २ ॥

---

१. 'प्राणिनि' क.

पूर्वं कदाचिद्भगवान्कैलासशिखरोपरि ।
विविधैर्विभ्रमैरासीद्देव्या सह रहोभुवि ॥ ३ ॥
सप्रमोदेन चित्तेन देवी शंभुमतोषयत् ।
उत्सङ्गमधिरोप्यैतां शंभुर्हृष्टोऽभ्यभाष्यत ॥ ४ ॥
प्रियं करोमि सुभगे किं तवेत्यभिधीयताम् ।
श्रुत्वेति साब्रवीद्देवी स्मेरीकृतविलोचना ॥ ५ ॥
सत्यं यदि प्रसन्नोऽसि किंचिदाख्याहि सत्कथाम् ।
कस्यापि वर्तते या न विदिता परमेश्वर ॥ ६ ॥
उक्त्वेति भूयोऽप्यवदन्नन्दिद्वारं निरुध्यताम् ।
न केनचित्प्रवेष्टव्यमिहेति तुहिनाद्रिजा ॥ ७ ॥
नन्दिन्यथाश्रितद्वारे सावधानतया स्थिताम् ।
अभाषत महादेवो देवीं मधुरया गिरा ॥ ८ ॥
सदा सुखममर्त्येषु दुःखमैकान्तिकं नृषु ।
वैद्याधरं तच्चरितं सुखदुःखमयं शृणु ॥ ९ ॥
एवं यावच्छिवो देवीं बभाषे तावदागमत् ।
पुष्पदन्तो गणः शंभुप्रसादरसभाजनम् ॥ १० ॥
प्रवेशं प्रार्थयन्द्वारे निषिद्धः सोऽथ नन्दिना ।
बुभुत्सुः कारणं योगात्प्रविवेशालिविग्रहः ॥ ११ ॥
प्रविष्टः सर्वमशृणोत्कथितं चन्द्रमौलिना ।
विद्याधराणां चरितं सप्तानामद्भुतं च सः ॥ १२ ॥
श्रुत्वा निर्गत्य भार्यायै स जयायै जगाद तत् ।
विमोहयति सर्वं हि दुर्लङ्घ्या भवितव्यता ॥ १३ ॥
ततः सखीनां पुरतस्तत्कथावर्णनोद्यता ।
देवी जयामप्यज्ञासीदुक्तिभिस्तत्कथाविदम् ॥ १४ ॥
अकुप्यत्पार्वती भर्त्रे नापूर्वं कथितं त्वया ।
जयाप्येतद्विजानीतेत्यभ्यधाच्च तदा चिरात् ॥ १५ ॥

१. 'द्विजानाती' इति पाठः.

प्रणिधाय ततः शंभुरभाषत हिमाद्रिजाम्।
श्रुता योगप्रविष्टेन पुष्पदन्तेन सा कथा।
बभाषे स जयायै तु न जानात्यपरः प्रिये ॥ १६ ॥
श्रुत्वेति चाद्रिजा पुष्पदन्तमानाययत्क्रुधा।
शशाप चाविनीतस्त्वं भव मर्त्य इति क्रुधा ॥ १७ ॥
तथैव माल्यवन्तं च गणं तत्पक्षपातिनम्।
जयया प्रार्थिता देवी ततः शापान्तमभ्यधात् ॥ १८ ॥
प्रभूणां करुणाहेतुर्विनयप्रार्थनैव हि।
यक्षः कुबेरशापेन सुप्रतीकः पिशाचताम् ॥ १९ ॥
आसाद्य विन्ध्याटव्यां यः काणभूतिरिति स्थितः।
स्मृतजातिस्तमालोक्य पुष्पदन्तः कथामिमाम् ॥ २० ॥
यदा वर्णयते तस्मै तदा शापाद्विमोक्ष्यते।
शापावसानमित्युक्त्वा विरराम हिमाद्रिजा ॥ २१ ॥
दृष्टनष्टाविव गणौ तौ च तत्र बभूवतुः।
कालान्तरेण कौशाम्ब्यां सोमदत्तद्विजन्मनः ॥ २२ ॥
भार्यायां वसुदत्तायां पुष्पदन्तो गणोऽजनि।
वररुच्यभिधानेन स ततः समवर्धत ॥ २३ ॥
अतिबालस्य चैतस्य जनकः पञ्चतामगात्।
माता च तं सुतस्नेहाद्विधवा समवर्धयत् ॥ २४ ॥
क्रमेणाथ स दिव्यां तां धिषणां समवाप्तवान्।
अथैकदा तत्सदनं ब्राह्मणावप्यगच्छताम् ॥ २५ ॥
दूराध्वगमनश्रान्तौ स्थातुं दिवसमेककम्।
तयोर्निवसतोस्तत्र मुरजध्वनिरुद्ययौ ॥ २६ ॥
माता तं चाब्रवीद्भर्तुः स्मृत्वा बाष्पाकुलेक्षणा।
मित्रं तव पितुर्नन्दो नटो नृत्यति पुत्र सः ॥ २७ ॥
श्रुत्वेति सोऽब्रवीन्मातर्गच्छाम्यहमवेक्षितुम्।
सर्वं ते दर्शयिष्यामि नाट्यं वीक्ष्य यथाक्रमम् ॥ २८ ॥

तेनेति कथिते विप्रौ तौ विस्मयमवापतुः ।
ततोऽब्रवीत्तौ तन्माता मात्रांशे नापि संशयः ॥ २९ ॥
सकृच्छ्रुतं वा दृष्टं वा बालो जानात्यसाविति ।
प्रातिशाख्यं ततस्ताभ्यां जिज्ञासुभ्यामपठ्यत ॥ ३० ॥
तथैव तद्वररुचिः पपाठ च तयोः पुरः ।
ताभ्यां स सहितो गत्वा वीक्ष्य नाट्यं निजे गृहे ॥ ३१ ॥
स्वमातुर्दर्शयामास स समग्रं तथैव तत् ।
सकृद्ग्राहिणमालोक्य प्राज्ञं वररुचिं तदा ॥ ३२ ॥
व्याडिरेकस्तयोर्मध्यात्तन्मातरमभाषत ।
देवस्वामी करम्बश्च सोदरौ प्राग्बभूवतुः ॥ ३३ ॥
परस्परमतिप्रीतौ [1]वीतसीनगरे द्विजौ ।
इन्द्रदत्तोऽयमेकस्य तयोः सूनुरजायत ॥ ३४ ॥
अहं व्याडिर्द्वितीयस्य जनकः संस्थितश्च मे ।
इन्द्रदत्तपिता यातस्तच्छोकेन महापथम् ॥ ३५ ॥
अस्मन्मात्रोश्च हृदयं शोकेन त्रुटितं ततः ।
धने सत्यप्यनाथौ तौ गतौ विद्याभिलाषिणौ ॥ ३६ ॥
अभ्यर्थयन्तौ तावावां तपोभिः स्वामिनं गुहम् ।
गुहस्तत्रादिशत्स्वप्ने प्रभुरावां तपःस्थितौ ॥ ३७ ॥
नन्दस्य नृपतेरस्ति पुरं पाटलिपुत्रकम् ।
वर्षाख्यस्तत्र विप्रोऽस्ति तस्माद्विद्यामवाप्स्यथः ॥ ३८ ॥
इति श्रुत्वा विभोर्वाक्यमावां तस्य पुरं गतौ ।
तत्पुरं प्राप्य पृच्छद्भ्यामावाभ्यां शुश्रुवे जनात् ॥ ३९ ॥
द्विजोऽस्ति मूर्खो वर्षाख्य इति चिन्तावहं वचः ।
अन्विषद्भ्यामथावाभ्यां दारिद्र्यैकनिधिर्गृहे ॥ ४० ॥
दृश्यते स द्विजो वर्षो ध्यानस्तिमितलोचनः ।
तत्पत्नी विहितातिथ्या धूसरा मलिनाम्बरा ॥ ४१ ॥

---

१. 'वेतसे' ख.

आवां प्रविष्टौ प्रणतौ पप्रच्छास्मत्प्रयोजनम् ।
अस्मन्निवेदितोदन्ता ततः साध्वी जगाद सा ॥ ४२ ॥
पुत्रयोर्युवयोरग्रे कालज्ञा कथयामि तत् ।
उक्त्वेति भर्तृवृत्तान्तकथां वक्तुं प्रचक्रमे ॥ ४३ ॥
बभूव शंकरस्वामी नगरेऽस्मिन्द्विजोत्तमः ।
मत्पतिस्तस्य पुत्रोऽयमुपवर्षस्तथा पुरा ॥ ४४ ॥
मूर्खश्च दुर्गतश्चायं बुधश्च धनवांश्च सः ।
तेन भ्रात्रा स्वभार्यास्य नियुक्ता निजपोषणे ॥ ४५ ॥
प्रावृट् कदाचिदासन्ना तस्या आस्ते स्म योषितः ।
जुगुप्सितं पिष्टमयं गुह्यरूपं गुडान्वितम् ॥ ४६ ॥
दत्त्वा विप्राय कस्मैचिल्लभन्ते स्म ऋतुं स्त्रियः ।
निदाघे शीतकाले च स्नानक्लेशासहिष्णवः ॥ ४७ ॥
एवं योषिज्जनाः प्रायः स्वमाचारं वितन्वते ।
जुगुप्सितं तद्गृह्णाति को नाम मतिमान्द्विजः ॥ ४८ ॥
तस्मादाददते मूर्खा दक्षिणां धनलम्पटाः ।
सा च मद्देवरवधूरासन्नऋतुशङ्किनी ॥ ४९ ॥
तमन्वतिष्ठदाचारमस्मै मूर्खाय गर्विता ।
अयं सदक्षिणं तच्च गृहीत्वा गृहमागतः ॥ ५० ॥
निर्भर्त्सितो मया मूर्खभावाच्चान्तरतप्यत ।
अथ स्वामिकुमारस्य सानुतापस्तपो व्यधात् ॥ ५१ ॥
प्रभुणा तेन तुष्टेन विद्याश्चास्य प्रकाशिताः ।
सकृद्ग्राहिणमासाद्य शिष्यं तास्त्वं प्रकाशयेः ॥ ५२ ॥
इत्युक्तश्च गुहेणायं प्रमोदाद्गृहमागतः ।
स्वं वृत्तान्तं समग्रं च समागत्य न्यवेदयत् ॥ ५३ ॥
ततः प्रभृत्ययं ध्यायञ्जयंश्च सततं स्थितः ।
समागतौ युवां सद्यः सर्वसिद्धिर्भविष्यति ॥ ५४ ॥

उक्त्वेति सा वर्षवधूः साध्वी तूष्णीं बभूव च ।
अदायि तस्यै चावाभ्यां हेम दारिद्र्यनाशनम् ॥ ५५ ॥
परिभ्रम्य भुवं लब्धः सकृद्ग्राही न कुत्रचित् ।
आवाभ्यामद्य तु प्राप्तस्तव श्रुतधरः सुतः ॥ ५६ ॥
तदमुं स्वसुतं देहि विद्यासिद्ध्यै यतावहे ।
इति व्याडिवचः श्रुत्वा जगदेवसुदत्तया ॥ ५७ ॥
सर्वं संगतमेवैतत्प्रत्ययोऽत्रास्त्यसंशयः ।
तथा हि जातमात्रेऽस्मिन्वाग्देवी ह्युदपद्यत ॥ ५८ ॥
अयं श्रुतधरो लब्ध्वा विद्याः सम्यगशेषतः ।
लोके व्याकरणं दिव्यं प्रतिष्ठां प्रापयिष्यति ॥ ५९ ॥
रोचते हि वरं यस्मान्नाम्ना वररुचिः सुधीः ।
प्रतिपद्येति सा वाणी व्यरमच्च नभस्तलात् ॥ ६० ॥
ततः प्रभृति बालेऽस्मिन्वर्धमाने मुहुर्मुहुः ।
वर्षोपाध्यायलाभाय मम चेतः प्रवर्तते ॥ ६१ ॥
युवाभ्यामद्य तज्ज्ञातं संतोषश्च परो मम ।
तदेष युवयोर्भ्राता नीयतां च तदन्तिकम् ॥ ६२ ॥
इत्याकर्ण्य वचस्तस्य व्याडिः पूर्णमनोरथः ।
महोत्सवविधानाय ददाति स्म निजं धनम् ॥ ६३ ॥
उपनीय ततो व्याडिर्वेदार्हत्वाय तं शिशुम् ।
जग्राह मात्रा कथमप्यनुज्ञातं सबाष्पया ॥ ६४ ॥
लब्ध्वा वररुचिं गाढप्रमोदौ तरसा ततः ।
व्याडीन्द्रदत्तौ वर्षस्य गुरोः प्राप्तौ निकेतनम् ॥ ६५ ॥
जानन्वररुचिं मूर्तं प्रसादं षण्मुखस्य सः ।
वर्षः संतोषमासाद्य तदानीमास्त निर्वृतः ॥ ६६ ॥
अन्येद्युः पुरतः कृत्वा तान्शुद्धे वसुधातले ।
ओङ्कारमकरोद्वर्षोपाध्यायो दिव्यया गिरा ॥ ६७ ॥

तदानीमस्य चत्वारः साङ्गा वेदाः समुद्ययुः ।
अध्यापयितुमेतांश्च प्रावर्तत पुरःस्थितान् ॥ ६८ ॥
सकृच्छ्रुतं वररुचिर्व्याडिश्च द्विःश्रुतं वचः ।
त्रिःश्रुतं चेन्द्रदत्तः स जग्राह गुरुणोदितम् ॥ ६९ ॥
अपूर्वं ध्वनिमाकर्ण्य दिव्यं संजातविस्मयाः ।
उपासते स्म सर्वेऽपि पौरा वर्षगुरुं ततः ॥ ७० ॥
स्कन्दप्रसादं तं ज्ञात्वा तद्देशनृपतिस्ततः ।
हर्षेण वर्षोपाध्यायमुपास्ते स्म सविस्मयः ॥ ७१ ॥
अथ कालेन बहवः शिष्या वर्षमुपाययुः ।
एकोऽपि पाणिनिर्नाम जडबुद्धिरुपाययौ ॥ ७२ ॥
शिष्यान्तरोपहासेन सावमानः स पाणिनिः ।
शुश्रूषाक्लेशतो यातः कदाचित्तुहिनाचलम् ॥ ७३ ॥
आराध्य तपसा तत्र विद्याकामः स शंकरम् ।
प्राप व्याकरणं दिव्यं स च विद्यामुखं शुभम् ॥ ७४
तत्राप्याह्वयते सायं सर्वान्वादाय पाणिनिः ।
स्ववर्ग्यान्वररुच्यादीनुपहासान्स्मरन्सुधीः ॥ ७५ ॥
ततोऽभवद्वररुचेर्वादः पाणिनिना सह ।
दिनानि सप्त च ययुस्तयोर्विवदमानयोः ॥ ७६ ॥
अथाष्टमे दिने तेन पाणिनौ निर्जिते सति ।
नभस्तलान्महाघोरं हुंकरोति स्म शंकरः ॥ ७७ ॥
श्रुत्वा शंकरहुंकारं ततः पाणिनिना जितम् ।
मूर्खत्वं वररुच्याद्याः प्रापुश्च प्रतिवादिनः ॥ ७८ ॥
ऐन्द्रं व्याकरणं नष्टं समग्रं चाभवद्भुवि ।
ततो वररुचिर्दुःखं विद्याविरहितो दधे ॥ ७९ ॥
मूर्खीभूतो वररुचिर्मुक्ताहारो विनिर्ययौ ।
आराधयितुमीशानं तपोभिस्तुहिनाचले ॥ ८० ॥

परितुष्टो वररुचेस्तपोभिः परमेश्वरः ।
शास्त्रं प्रकाशयामास पाणिनेयमशेषतः ॥ ८१ ॥
शंकरेच्छाप्रसादेन चूर्णीकृत्याथ तच्च सः ।
जगाम स्वगृहं तुष्यन्नज्ञाताध्वपरिश्रमः ॥ ८२ ॥
तत्राप पाणिनेः शास्त्रं वर्षः स्वामिकुमारतः ।
वर्षाद्व्याडीन्द्रदत्तौ च लब्धवन्तावसंशयम् ॥ ८३ ॥
एवं व्याकरणं दिव्यं प्रबोधायाभ्यधात्पुनः ।
पाणिनीयमधिष्ठाय शरीरं परमेश्वरः ॥ ८४ ॥
ततो व्याडीन्द्रदत्ताभ्यां प्रार्थितो गुरुदक्षिणाम् ।
अङ्गीचकार वर्षः स हेमकोटिं सुनिर्मलाम् ॥ ८५ ॥
इन्द्रदत्तः प्रविश्याथ संस्थितस्य कलेवरम् ।
योगेन नन्दनृपतेर्व्याडयेऽदत्त काञ्चनम् ॥ ८६ ॥
व्याडिः काञ्चनकोटिं तां वर्षायादत्त दक्षिणाम् ।
इन्द्रदत्तश्च नन्दोऽभूच्छकटालधिया नृपः ॥ ८७ ॥
इन्द्रदत्तस्ततो योगे नन्दभूपालतां भजन् ।
मन्त्रिभावे वररुचिं महाप्राज्ञं न्ययोजयत् ॥ ८८ ॥
किमन्यदथ नन्दस्य चिरमादाय मन्त्रिताम् ।
खिन्नो वररुचिः शान्तस्तपोवनमशिश्रियत् ॥ ८९ ॥
एकदा स ययौ द्रष्टुं देवीं विन्ध्यनिवासिनीम् ।
आराधिता च तपसा सा तं स्वप्ने समादिशत् ॥ ९० ॥
गच्छ विन्ध्याटवीमद्य काणभूतिमवेक्षितुम् ।
इति देव्या गिरा सोऽपि विन्ध्यकान्तारमाययौ ॥ ९१ ॥
अपश्यत्काणभूतिं स पिशाचैस्तत्र चावृतम् ।
जगाद च सदाचारः कथमीदृग्भवानिति ॥ ९२ ॥
श्रुत्वा वररुचेरेवं काणभूतिरभाषत ।
पादोपसंग्रहं कृत्वा सौजन्यमधुरां गिरम् ॥ ९३ ॥

विज्ञानं मे स्वतो नास्ति श्मशाने श्रुतमीश्वरात्।
यदुज्जयिन्यां सर्वं ते कथयामि शृणुष्व तत्।
स्मशाने च कपाले च तव देव रतिः कुतः॥ ९४॥
इति सप्रणयं पृष्टः पार्वत्या शंभुरब्रवीत्।
कल्पान्तसमये पूर्वमभूदेकार्णवं जगत्॥ ९५॥
पातितः शोणितकणो विभिद्योरुं मया ततः।
जले स एवाण्डमभूद्द्विधा गतवतस्ततः॥ ९६॥
निरगात्पुरुषः सृष्टौ स्रष्टा च प्रकृतिर्मया।
ततः स निखिलं सृष्ट्वा प्रजापतिपुरःसरम्॥ ९७॥
पितामह इति प्रोक्तो गाढाहंकारतामगात्।
ततः कररुहेणाहं तन्मूर्धानमपाटयम्॥ ९८॥
महाव्रतं गृहीत्वा च श्मशानप्रियतां श्रये।
एतद्देवि कपालात्म जगत्करतले स्थितम्॥ ९९॥
तस्याण्डस्य कपाले द्वे रोदसी परिकीर्तिते।
कपालप्रियता तेन सदैव मम वर्तते॥ १००॥
श्रुत्वेति शंभोस्तत्रैव स्थितवानस्मि सादरम्।
ततो मयि श्रोतुकामे पार्वती पुनरब्रवीत्॥ १०१॥
कियता समयेनास्मान्पुष्पदन्त उपैष्यति।
आकर्ण्येत्यवदद्देवीमुद्दिशन्मां त्रिलोचनः॥ १०२॥
कुबेरानुचरः सोऽयं यक्षः प्राप्तः पिशाचताम्।
अस्य स्थूलशिरा नाम मित्रमासीन्निशाचरः॥ १०३॥
तन्मैत्र्या धनदः शापात्पिशाचममुमाददे।
प्रार्थिते दीर्घजङ्घेन भ्रात्राथास्य धनाधिपः॥ १०४॥
शापावसानमवदत्किंचित्कोपं परित्यजन्।
पुष्पदन्तात्समाकर्ण्य कथां शापावरोहिणः॥ १०५॥
उक्त्वा शापावतीर्णस्य तां च माल्यवतोऽखिलाम्।
गणाभ्यां सहितस्ताभ्यामेष शापाद्विमोक्ष्यते॥ १०६॥

पुष्पदन्तस्य शापान्तस्त्वयाप्येवं कृतः स्मर।
श्रुत्वेति शंभोर्वचनं हृष्यन्नहमिहागतः॥ १०७॥
तस्मान्निवर्तते शापः पुष्पदन्तागमान्मम।
आकर्ण्येमां वररुचिः काणभूतेर्गिरां ततः॥ १०८॥
जातिं सुप्तोत्थित इव स्मृत्वा तत्क्षणमब्रवीत्।
पुष्पदन्तो गणः सोऽहं शृणु मत्तोऽखिलं च तत्॥ १०९॥
उक्त्वेति ग्रन्थलक्षाणि सप्त सप्ताब्रवीत्कथाः।
आकर्ण्य ताः काणभूतिरभाषत सविस्मयः॥ ११०॥
त्वं रुद्र एव कोऽन्यो वा क्वचिद्वेत्तीदृशीः कथाः।
श्रुत्वा कथा इमाः शापो विरतो मे शरीरतः॥ १११॥
स्ववृत्तान्तं समाख्याहि बाल्यात्प्रभृति मे प्रभो।
ततो विनीतशिरसो वृत्तान्तं स्वमवर्णयत्॥ ११२॥
काणभूतिं वररुचिर्जन्मनः प्रभृति स्फुटम्।
उक्त्वा स्ववार्तां भूयोऽपि काणभूतिं जगाद सः॥ ११३॥
स्वास्थ्यं लभे त्वामालोक्य परं खेदमहं श्रितः।
त्वदालोकनमाहात्म्यान्मम शापो निवर्तते॥ ११४॥
प्रभावाद्विन्ध्यवासिन्या मयोक्ता च महाकथा।
क्षीणशापो वपुस्त्यक्त्वा तत्प्राग्जन्म भजाम्यहम्॥ ११५॥
..........................................पुनरवस्थितिः।
मत्पक्षपाती प्रथमं माल्यवानप्यशप्यत।
तस्मै महेश्वरेणोक्ता कथनीया महाकथा॥ ११६॥
त्वं च संप्रति तिष्ठेह यावदायाति तेऽन्तिकम्।
त्यक्तभाषा त्रयः सोऽपि गुणाढ्यो द्विजसत्तमः॥ ११७॥
एवं वररुचिस्तत्र काणभूतेर्निवेद्य सः।
देहमोक्षाय त्वरितमगाद्बदरिकाश्रमम्॥ ११८॥
ततो वररुचिस्त्यक्त्वा योगधारणया वपुः।
प्राग्जन्म तत्समासाद्य भगवद्गणतामगात्॥ ११९॥

स गणो माल्यवान्नाम देवीशापादधो भवन्।
तत्काले गुरुणा तेन प्रोक्तोऽसौ द्विजसत्तमः ॥ १२० ॥
क्रमेण विद्याः सर्वाः स समासाद्य प्रसिद्धिमान्।
सुप्रतिष्ठितनामानं देशं प्राप प्रकृष्टधीः ॥ १२१ ॥
सातवाहनभूपालमास्थानस्थमवैक्षत।
शर्ववर्मादिभिः सर्वैर्मन्त्रिभिः परिवारितः।
स राजा तममात्यत्वे स्तुतिपूर्वं न्यवेशयत् ॥ १२२ ॥
अथासौ राज्यकार्याणि चिन्तयन्मन्त्रिभावतः।
तांस्तानध्यापयञ्छिष्यान्गुणाढ्यः[1] सुखमन्वभूत् ॥ १२३ ॥
कदाचिदथ भूपालो वसन्ते कामिनीसखः।
दिव्योद्यानावनौ वापीजले चिक्रीड सादरः ॥ १२४ ॥
स पाणियन्त्रधाराभिः सिषेच वरकामिनीः।
कामिन्योऽपि प्रजहुस्तं कटाक्षैः सह वारिभिः ॥ १२५ ॥
एकदा तस्य क्रीडन्ती नितम्बस्तनगौरवात्।
खिद्यमाना क्लमं प्राप वापीमध्ये विलासिनी ॥ १२६ ॥
सिञ्चन्ती सलिलैर्भूपं सा जगादालसालसा।
मोदकैर्नाथ मां सद्यः प्रहरेति कृतस्मिता ॥ १२७ ॥
एवं तद्वचनं श्रुत्वा जलप्रहरणात्मकम्।
शब्देन छलितो राजा मोदकैस्तां ताड सः ॥ १२८ ॥
ततो[2] विहस्य सा राज्ञी पुनरेवमभाषत।
राजन्नवसरः कोऽत्र मोदकानां जलान्तरे ॥ १२९ ॥
उदकैः सिञ्च मा मा त्वं मामित्युक्तं मया हि तत्।
संधिमात्रं न जानासि माशब्दोदकशब्दयोः ॥ १३० ॥
न च व्याकरणं वेत्सि मूर्खस्त्वं कथमीदृशः।
इत्युक्तः स तया राज्या शब्दशास्त्रविदा नृपः ॥ १३१ ॥

---

१. 'गुणाढ्यो' ख. २. ख-पुस्तके त्रुटितोऽयं पाठः.

ततश्चिन्तापरो मुञ्चन्नाहारादिविवर्जितः ।
चिन्तास्थ इव पृष्टोऽपि नैव किंचिदभाषत ॥ १३२ ॥
पाण्डित्यं शरणं वा मे मृत्युर्वेति विचिन्तयन् ।
शयनीये परित्यक्तगात्रः संतापवानभूत् ॥ १३३ ॥
उपविश्याथ निकटे मन्त्रिणो ज्ञातमानसाः ।
कारणं कथय देव वर्तसे विमना इति ॥ १३४ ॥
तच्छ्रुत्वापि तथैवास्त तूष्णीं स सातवाहनः ।
ततोऽवदत्कश्चित्सुधीर्वर्षैर्द्वादशभिः सह ॥ १३५ ॥
ज्ञायते सर्वविद्यानां मुख्यं व्याकरणं नृपः ।
अहं तु शिक्षयाम्येव तुल्यः स्कन्देन चापरः ॥ १३६ ॥
तदहं मासषट्केन देव त्वां शिक्षयामि तत् ।
ततः स्वामिकुमारस्य प्रसादात्तदकल्पयत् ॥ १३७ ॥
शिक्षयामास राजानं प्राप्तार्थसंचयः सुधीः ।
राजा कवित्वपाण्डित्यमयीं प्राप च चातुरीम् ॥ १३८ ॥
ततो गुणाढ्यस्तद्वीक्ष्य प्रतिज्ञां प्राक्तनीं स्मरन् ।
संस्कृतं प्राकृतं देशभाषामपि समत्यजत् ॥ १३९ ॥
संत्यज्य कृतमौनत्वाद्व्यवहारानसौ ततः ।
निर्ययौ नगरात्तस्माद्दिदृक्षुर्विन्ध्यवासिनीम् ॥ १४० ॥
स्वप्ने स विन्ध्यवासिन्या प्रेषितस्तदगाद्वनम् ।
यत्र स्थितः काणभूतिः पिशाचैः परिवारितः ॥ १४१ ॥
तत्राश्रृणोत्पिशाचानां परस्परमसौ कथाः ।
शिशिक्षे चात्र तद्भाषां भाषात्रयविलक्षणाम् ॥ १४२ ॥
पिशाचभाषया तत्र मौनमोक्षैकहेतुना ।
स्वागतं विदधे काणभूतेर्विन्ध्याटवीस्थितेः ॥ १४३ ॥
मित्रस्य रक्षसो भूतिवर्मणो दिव्यचक्षुषः ।
वचसा माल्यवन्तं तं गुणाढ्यं सोऽभ्यगाद्वने ॥ १४४ ॥

काणभूतिः कथां तस्य पुष्पदन्तोदितां ततः ।
अवर्णयद्गुणाढ्यस्य शापान्तसमयोत्सुकः ॥ १४५ ॥
निबबन्ध गुणाढ्यस्ताश्चतुर्थ्या भाषया कथाः ।
सप्तैव सप्तभिर्वर्षैर्ग्रन्थलक्ष्याणि सप्त सः ॥ १४६ ॥
मसीमटव्यामप्राप्य गुणाढ्यः स्वाङ्गशोणितैः ।
लिलेख ताः कथा दिव्याश्चित्रचारित्रशालिनीः ॥ १४७ ॥
निबद्धास्ता गुणाढ्येन दृष्ट्वा तत्र महाकथाः ।
त्यक्तशापो गतिं प्राप काणभूतिर्निजां ततः ॥ १४८ ॥
काणभूतेरनुचराः पिशाचास्तत्र ये स्थिताः ।
तेऽपि दिव्यां कथां श्रुत्वा सर्वे प्रापुर्दिवं ततः ॥ १४९ ॥
इयं बृहत्कथा पृथ्व्यां प्रसिद्धिं प्राप्यते कथम् ।
इति शापान्तसोत्कण्ठो गुणाढ्यः समचिन्तयत् ॥ १५० ॥
प्राहिणोत्तां कथां सोऽथ सातवाहनभूभुजे ।
अधिचिक्षेप राजापि तां कथां मदनिष्ठुरः ॥ १५१ ॥
सानुतापो गुणाढ्योऽपि वह्निकुण्डं ततो व्यधात् ।
व्याख्याय पत्रमेकैकं निचिक्षेप च तत्र सः ॥ १५२ ॥
देहातिवाहमुत्सृज्य तृणाम्बुमयमादरात् ।
अशृण्वन्साास्रवस्तत्र तां कथां मृगपक्षिणः ॥ १५३ ॥
निराहारेषु शुष्यत्सु तदानीं मृगपक्षिषु ।
अस्वादुनि च तन्मांसे भुक्ते प्राप रुजं नृपः ॥ १५४ ॥
गुणाढ्यचरितं श्रुत्वा वनेचरजनात्ततः ।
आजगाम स्वयं राजा तमेवोद्देशमादरात् ॥ १५५ ॥
सबाष्पमृगमध्यस्थं गुणाढ्यं वनवासिनम् ।
प्रत्यभिज्ञाय च ततो नमश्चक्रे महीपतिः ॥ १५६ ॥
अथ पृष्टवतो राज्ञः स्ववृत्तान्तं जगाद सः ।
भूतभाषामयैर्वाक्यैर्गुणाढ्यो विस्मयस्पृशः ॥ १५७ ॥

आख्याहि निजवृत्तान्तं पुनरप्यब्रवीदसौ ।
दग्धानि ग्रन्थलक्षाणि षडेकमवशिष्यते ॥ १५८ ॥
ग्रन्थलक्षमिदं यैका सा कथा गृह्यतां त्वया ।
नरवाहनदत्तस्य चरितं त्वेतदद्भुतम् ॥ १५९ ॥
उक्त्वेत्यदत्त स कथा सातवाहनभूभुजे ।
राजापि प्रणमन्भक्त्या जग्राह निजमूर्धनि ॥ १६० ॥
अथ ज्ञात्वा स शापान्तं त्यक्त्वा योगेन विग्रहम् ।
माल्यवान्गणतां लेभे शिवभक्त्यैकभावितः ॥ १६१ ॥
बृहत्कथा सा सर्वत्र प्रसिद्धिं प्रापदद्भुता ।
यां स्वयं समहादेव्याश्चन्द्रमौलिरवर्णयत् ॥ १६२ ॥
अनया कथया किं वा प्रसङ्गोद्दिष्टया मया ।
ऐन्द्रं व्याकरणं हित्वा पाणिनीयं व्यधाच्छिवः ॥ १६३ ॥
ततः प्रभृति निःशेषशब्दज्ञानप्रकाशकम् ।
दिव्यं व्याकरणं भूमौ पाणिनीयं प्रसिद्ध्यति ॥ १६४ ॥
पाणिनिर्भगवानेव स्वयं चन्द्रार्धशेखरः ।
प्रतिष्ठापयते कोऽन्यो दिव्यं व्याकरणं भुवि ॥ १६५ ॥
अशेषेष्वपि शास्त्रेषु स्तूयते कैर्न पाणिनिः ।
ज्ञायन्ते सम्यगेवैते यत्प्रसादेन वाचकाः ॥ १६६ ॥
कालान्तरेण सर्वज्ञस्याज्ञया भुजगेश्वरः ।
स्वजिह्वाः सफली चक्रे बह्वीर्भाष्योपदेशतः ॥ १६७ ॥

परिमितमतयः किमाचरन्तु
प्रसृमरसंशयखिद्यमानचित्ताः ।
विभुरनवधिवाच्यवाचकात्मा
शिव इति पश्यतमेव सर्वशक्तिम् ॥ १६८ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ शब्दशास्त्रावतारो नाम सप्तविंशः प्रकाशः ॥

---

## अष्टाविंशः प्रकाशः ।

ॐ श्रीचिदमृतलहरीधराय मृत्युजिते नमः ।

उत्पन्ना शिवकुण्डलाकृतिरसौ त्वत्तः परब्रह्मण-
स्तत्त्वेष्वेष्वखिलेषु कल्पयति या सामान्यरूपां स्थितिम् ।
विश्रान्तिं भजते दृढं समरसीभावेन बोधोदधौ
सा शक्तिर्मम भासतां त्रिपथगा संविद्रसोद्रेकभूः ॥ १ ॥

जलरूपेण विश्वस्य संजीवनमहोषधिः ।
अहो साधुतमः कोऽपि नित्यपूर्णो महेश्वरः ॥ २ ॥
परस्माद्ब्रह्मणो गङ्गा चक्राकारा विनिर्गता ।
प्रति तत्त्वं स्तुता सर्वैः प्राप्ता ब्रह्माण्डमण्डलम् ॥ ३ ॥
प्रविशन्ती विरञ्चाण्डं सर्वलोकोर्ध्ववर्तिनः ।
उत्तमाङ्गे विभोर्लग्ना रुद्रस्याभून्महानदी ॥ ४ ॥
पापान्तकारिणीं गङ्गामाकलय्य महेश्वरः ।
जटाभारे विनिष्पीड्य तां चिक्षेप हरेः पुरे ॥ ५ ॥
विष्णुरभ्यर्च्य तां देवीं स्तुत्वा चानन्दकारिणीम् ।
प्रणम्य प्रेरयामास ब्रह्मलोकाय भावितः ॥ ६ ॥
ब्रह्मलोके ततः प्राप्ता ब्रह्मणा पावनात्मना ।
मर्त्यलोके च मुमुचे निःशेषदुरितापहा ॥ ७ ॥
ब्रह्मणा स्वीकृतां ज्ञात्वा तां गङ्गामथ नारदः ।
देवान्विदितवृत्तान्तान्मुनीन्मर्त्यानथाकरोत् ॥ ८ ॥
नयन्ती शाश्वतं स्थानं स्पर्शेन श्वपचानपि ।
स्वीकृता ब्रह्मणा गङ्गा सर्वैराराधिताः सुरैः ॥ ९ ॥
देवैराराधिता गङ्गा स्वर्गमार्गं प्रविश्य सा ।
लेभे सुरसरिन्नाम पवित्रितचराचरा ॥ १० ॥
कदाचित्कपिलक्रोधदग्धान्बुद्ध्वा भगीरथः ।
पूर्वं स्ववंश्यान्भूपालान्बुद्धिमान्समचिन्तयत् ॥ ११ ॥

उद्धरिष्यति मां तीव्रनरकार्णवचारिणम्।
इति काङ्क्षति संतानं जनः संसारवर्त्मनि ॥ १२ ॥
सगरानुद्धरिष्यामि तदहं केन वर्त्मना।
अन्यथा किं मम प्राणैः किं वा चपलया श्रिया ॥ १
उद्धर्तुं स्वर्णदीं भूमौ मयेयमवतार्यते।
तदम्बुस्पर्शमात्रेण प्राप्यते परमा गतिः ॥ १४ ॥
इति निश्चित्य चक्रे स तपस्तीव्रं नदीं प्रति।
सा च वर्षशतेनास्य प्रसन्ना विश्वपावनी ॥ १५ ॥
उद्धर्तुं पूर्ववंश्यान्मे भूमाववतर प्रभो।
इत्थं भगीरथेनोक्ता सुरसिन्धुरभाषत ॥ १६ ॥
शिवतत्त्वात्प्रभृत्येतन्मम यद्वर्तते पयः।
तस्यावकाशः कुत्रास्ति महीमात्रे प्रसर्पतः ॥ १७ ॥
इति श्रुत्वा वचस्तस्या भगीरथमहीपतिः।
शिवमाराधयामास तपसा भक्तिपावनः ॥ १८ ॥
अथ प्रसन्नो भगवानभाषत भगीरथम्।
धार्यते सा मया जूटे तदेषावतरत्विति ॥ १९ ॥
अवातरत्ततो गङ्गा भगीरथतपोभरैः।
निर्भरं परिपुष्यन्ती जगत्स्थावरजङ्गमम् ॥ २० ॥
एकार्णवं यदा विश्वमवतीर्य विधित्सति।
ईश्वरेण जटाकोटौ तदानीं विनिवेशिता ॥ २१ ॥
आक्रान्तस्वर्गमार्गेण प्रवाहेण निपत्य सा।
अग्रभागं महादेवजटायाः पर्यपूरयत् ॥ २२ ॥
अविच्छिन्नं पतन्ती सा देवी स्वर्गतरङ्गिणी।
मृषतप्रतिपत्त्यैव मूर्ध्नि शंभोरलक्ष्यत ॥ २३ ॥
तावन्ति तत्त्वान्याक्रम्य पतिता हि महानदी।
देवस्य मूर्ध्नि लीनेति विचित्रा शक्तिरैश्वरी ॥ २४ ॥

१. पृषतप्रतिपत्त्यैव.

एवं वर्षसहस्रं सा बभ्राम दिविषन्नदी ।
महादेवजटाकोटिबालाग्रेण लुलोट च ॥ २५ ॥
अथ शंभुजटाकोटिमात्रकल्पितसन्निधिम् ।
ज्ञात्वा नदीमसंपूर्णां वाञ्छां मेने भगीरथः ॥ २६ ॥
महादेवप्रसादोऽयं यन्मूर्धनि नदी धृता ।
अत्रैव स्थापितैषेति करोष्यननुकम्पनम् ॥ २७ ॥
आक्रान्तसर्वसत्त्वापि तव मूर्धनि वर्तते ।
इयं देवजटाकोटिबालाग्रपरिचारिणी ॥ २८ ॥
तद्देवदृष्टमैश्वर्यं कस्यान्यस्य त्वया विना ।
कृपया तन्मम नदीं धरणाववतारय ॥ २९ ॥
इति तस्योक्तमाकर्ण्य भगवान्करुणानिधिः ।
नदीं निजजटाकोटेर्निचिक्षेप महीतले ॥ ३० ॥
अथ शंभुजटाजूटान्निपतन्ती सुरापगा ।
प्रावर्तत महीलोकं पवित्रीकर्तुमुन्मदा ॥ ३१ ॥
भगीरथस्तपः कृत्वा नदीं प्रावर्तयद्भुवि ।
ततो भागीरथीत्येषा प्रसिद्धा भुवनत्रये ॥ ३२ ॥
सा क्रमेण प्रसर्पन्ती प्रवाहेण बलीयसा ।
अथ जह्नुमुनेः प्राप पवित्रतममाश्रमम् ॥ ३३ ॥
तत्राश्रमं जह्नुमुनेर्विनाश्य पयसां भरैः ।
तुङ्गानि शिवलिङ्गानि जहार त्रिदशापगा ॥ ३४ ॥
लिङ्गार्चनोपयोग्यानि विचिन्वन्कुसुमानि सः ।
जह्नुरप्याश्रमपदे नासीद्गङ्गागमक्षणे ॥ ३५ ॥
उच्चित्य पुष्पाण्यायातः स दृष्ट्वा तमुपद्रवम् ।
अपिबत्सहसा गङ्गां लिङ्गास्कन्दनकोपितः ॥ ३६ ॥
स्तुतो भगीरथेनाथ स मुमोच सुरापगाम् ।
अवतारायं मेदिन्यां दक्षिणश्रवणाध्वना ॥ ३७ ॥

ततः प्रभृति सा भूमौ जाह्नवीत्यभिधां गता ।
संपादयामास नदी भगीरथमनोरथम् ॥ ३८ ॥
भगीरथमहीपालपूर्ववंश्यास्तदम्भसा ।
स्पृष्टमात्राः शुभं लोकमवापुर्हतकिल्बिषाः ॥ ३९ ॥
एवमेषा महादेवी त्रिषु लोकेषु विश्रुता ।
इति त्रिपथगा प्रोक्ता चराचरशुभावहा ॥ ४० ॥
एतत्पयः पीयते यैः स्पृश्यते वा सुभावितैः ।
सर्वे निर्वाणसरणिं सत्यन्ते यान्ति देहिनः ॥ ४१ ॥
एतत्परिचयात्कान्तिर्देवानां दिव्यतां गता ।
ब्रह्मलोकस्य सोपानमियं देवी निगद्यते ॥ ४२ ॥
गङ्गा गङ्गेति वचनं श्रूयते यत्र भूरिशः ।
विघ्नास्तत्र निवर्तन्ते सौभाग्यं च प्रवर्तते ॥ ४३ ॥
ॐ श्रीगङ्गे नमस्तुभ्यमिति यो भाषते नरः ।
गोसहस्रप्रदानात्स लभते फलमुत्तमम् ॥ ४४ ॥
ब्रह्मभूतः प्रदेशः स मर्त्यास्ते ब्रह्मतत्पराः ।
यत्र संनिहिता गङ्गा सा च यत्रावगाह्यते ॥ ४५ ॥
गङ्गास्नातस्य पुंसोऽपि स्पर्शं यो विदधाति वै ।
सोऽपि स्वर्गं समासाद्य शक्रेण सह मोदते ॥ ४६ ॥
गङ्गातीरमृदं यश्च वीक्षते वन्दतेऽपि वा ।
लभते स पवित्रात्मा भूमिदानसमं फलम् ॥ ४७ ॥
ते देवा न पुनर्मर्त्याः शैलास्ते शिवमूर्तयः ।
वृक्षाः सुधाफलास्ते च ये गङ्गाजलसङ्गिनः ॥ ४८ ॥
अश्वमेधादयो यज्ञा वेदा अग्निशरीरिणः ।
तत्र संनिहिता यत्र गङ्गास्नातो वसेन्नरः ॥ ४९ ॥
यः कार्तिके शुक्लपक्षे पूर्णमायामुपोषितः ।
पूजयित्वाभिजिद्योगे पिबेच्चुलकपञ्चकम् ॥ ५० ॥

दिक्कालाद्यनवच्छिन्नं लभते स परं शिवम् ।
एवं बहुषु शास्त्रेषु वर्णितं चन्द्रमौलिना ॥ ९१ ॥
त्रिभुवनमवहेलयैव देवो निरवधिसंसृतितापपीड्यमानम् ।
प्रसृमरकरुणारसः पुनीते भजत जनाः शरणं तमीशमेव ॥ ९२ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ गङ्गावतारवर्णनं नाम अष्टाविंशः प्रकाशः ॥

---

एकोनत्रिंशः प्रकाशः ।

ॐ श्रीमदमृतमूर्तये नमः ।

प्राग्दुष्कर्मपरम्पराप्रकटितैर्बाल्यात्प्रभृत्येव मे
निश्चेष्टत्वमनश्वरैर्विरचितं रोगैर्विमोहादिभिः ।
त्रैलोक्याभयदायिनः पशुपते सद्यस्तवाङ्घ्रिद्वये
निध्याते पुनरेक एव नितरां सौख्यं भजे शाश्वतम् ॥ १ ॥
रोगाः प्रणश्यन्ति परं विवेकश्च प्रवर्धते ।
ईशेच्छयैव त्रुट्यन्ति विविधानि भयान्यपि ॥ २ ॥
बभूव राजा भूलोकावतीर्ण इव वासवः ।
श्रुतकीर्तिरिति ख्यातो विदर्भेषु महायशाः ॥ ३ ॥
किमजेयमभूत्तस्य किमसाध्यं च भूभुजः ।
कुबेरमधरीकृत्य विभूत्या वर्तते स यः ॥ ४ ॥
एका तस्याभवत्पत्नी मालतीति मनोरमा ।
विलोक्य यस्या वदनं पूर्णेन्दुरपि लज्जते ॥ ५ ॥
नानाविधैर्विलासैस्तावभूतां भोगभोगिनौ ।
उपभोगफला लक्ष्मीरिति निर्माय चेतसि ॥ ६ ॥
तौ विना तनयोत्पत्तिं व्यर्थामालोक्य संपदम् ।
नवेऽपि वयसि क्लेशमन्वभूतामहर्निशम् ॥ ७ ॥
पुत्राभिलाषिणौ देवद्विजपूजापुरःसरम् ।
धनं व्यतरतां भूरि तावर्थिभ्यो दिवानिशम् ॥ ८ ॥

अथ कालेन बहुना तयोः सूनुरजायत।
हर्षकेत्वभिधानं यः प्राप प्रीतिमतो जनात् ॥ ९ ॥
तस्मिञ्जाते प्रववृते तत्र यादृङ्महोत्सवः।
जिह्वाद्वयीसहस्रेण शेषस्तद्भाषितुं क्षमः ॥ १० ॥
व्ययीकृतेषु कोशेषु प्रवृत्ते नगरोत्सवे।
अथोत्कण्ठाकुलो राजा पुत्रमैक्षत सादरः ॥ ११ ॥
बहिर्द्वारविरुद्धेषु सेवायातेषु राजसु।
राजपत्नीषु माणिक्यपूर्णरात्रिषु पाणिषु ॥ १२ ॥
पुरोहितेषु मङ्गल्यसामपाठप्रवर्तिषु।
रक्षासर्षपहस्तासु साध्वीषु जरतीष्वपि ॥ १३ ॥
पुत्रोत्पत्तिनिवेदिभ्यो दित्सुः प्राणानपि निजान्।
पश्यति स्म निजं पुत्रमानन्दास्रुप्लुतेक्षणः ॥ १४ ॥
छिन्नजिह्वस्त्रुटत्कर्णो विहस्तो लूननासिकः।
कुष्ठवान्नष्टदृष्टिश्च तं नात्यक्षत्सलक्षितः ॥ १५ ॥
तमालोक्य ततः पुत्रं कुष्ठपूतिपरिप्लुतम्।
मूर्छामगच्छद्भूपालो व्यर्थीभूतमनोरथः ॥ १६ ॥
प्रसवव्यथिता देवी तदानीमेव वीक्ष्य तम्।
अकरोन्मेखलादाम्ना पाशं स्नेहविमोहिता ॥ १७ ॥
चेटीभिरथ भूपालः प्रयत्नात्प्रतिबोधितः।
पाशं न्यवारयद्देव्यास्तारशब्दं रुरोद च ॥ १८ ॥
अथ तत्र समग्रेषु रुदत्सु शिशुदर्शनात्।
धैर्यं हठात्समालम्ब्य जगाद वसुधापतिः ॥ १९ ॥
असावसारः संसारो ज्ञातः केन शरीरिणा।
सुखदुःखमयैर्यस्य तरङ्गैर्मोहितं जगत् ॥ २० ॥
आदौ सुतं विना शोकश्चिरकालमवर्तत।
अधुना त्वीदृशे दृष्टे द्विगुणीभवति व्यथा ॥ २१ ॥

अत एव हि संत्यज्य धनदारसुतानपि।
भजन्ति केचिदेकान्तं सर्वदुःखोपतापिताः॥ २२॥
इत्यादि प्रलपत्यस्मिन्देव्या सह महीपतौ।
जगाद जरती काचित्सान्त्वयन्ती निरन्तरम्॥ २३॥
किं भूमिपाल भवतोऽप्यास्ते विक्लवता हृदि।
प्रायो रोगान्निवर्तन्ते भिषजो भैषजेन च॥ २४॥
भिषजावश्विनौ देवौ तदुक्तं चास्ति भैषजम्।
तदाराधनयत्नस्तत्कुशलाय विधीयताम्॥ २५॥
इति श्रुत्वा गिरं तस्या भूपतिर्दृढनिश्चयः।
राज्यं मन्त्रिषु विन्यस्य जगाम विधिना वनम्॥ २६॥
राजपत्नी स्रवत्पूतिक्लिन्नकञ्चुकमात्मजम्।
उत्सङ्गे दधती स्नेहाद्भर्तारमनुनिर्ययौ॥ २७॥
त्यक्तराज्यस्ततो राजा पत्न्या बालेन चान्वितः।
तावश्विनौ चिरतरं ध्यायति स्म दिवानिशम्॥ २८॥
प्रसन्नावश्विनौ तस्य कालेन बहुना ततः।
अङ्गीचक्रतुरारोग्यं बालकस्य प्रतिज्ञया॥ २९॥
स्मृतावेवाश्विनौ देवावारोग्यस्य शरीरिणाम्।
दृष्टौ किं पुनरत्रापि भैषज्योद्योगभागिनौ॥ ३०॥
किमन्यदश्विनौ पथ्यं न बालो प्रबभूव तत्।
ईश्वरेच्छां विना जातु स हि कर्मफलप्रदः॥ ३१॥
एवं दिनेषु द्वित्रेषु व्यतीतेष्ववमानितः।
उद्विग्नावश्विनौ देवौ निजा मुमुचतुः क्रियाः॥ ३२॥
ततो नाकपुरे त्यक्तक्रिययोराश्विनेययोः।
हाहाकारः प्रववृते सर्वेषामेव देहिनाम्॥ ३३॥
अथास्थानपतिः शक्रो देवर्षिपरिवारितः।
अपृच्छदश्विनौ सर्वमानीय परमार्थतः॥ ३४॥

ततः सर्वेषु शृण्वत्सु पुरंदरसभापथे ।
वृतान्तमाश्विनेयाभ्यामुक्त्वा भूयोऽप्यभाष(ष्य)त ॥ ३५ ॥
शास्त्रानुसारिणी देव प्रवृत्तिर्नियता यदि ।
अस्मिन्दत्तेऽपि भैषज्ये निवर्तन्ते न किं रुजः ॥ ३६ ॥
यदसौ नियतित्यागो वर्तते यदि मण्डले ।
आत्मानमवमानाय को नियोजयते ततः ॥ ३७ ॥
अद्यप्रभृति वैद्यत्वमस्मभ्यं तन्न रोचते ।
यच्छास्त्रयन्त्रणां त्यक्त्वा रोगैरुन्मूल्यते जगत् ॥ ३८ ॥
दिव्या रसायनौषध्यो बाले तत्र नियोजिताः ।
मनागपि न रोगाणां बभूव च निवर्तनम् ॥ ३९ ॥
चिरमाराधितावावामेकान्ते श्रुतकीर्तिना ।
पुत्रारोग्याय किं साध्यमावयोः शास्त्रतः परम् ॥ ४० ॥
उत्सन्नेव चिकित्सेयं रोगाणां तत्पुरंदर ।
किं प्रयोजनमावाभ्यामद्यप्रभृति देहिनाम् ॥ ४१ ॥
निर्यन्त्रणत्वं रोगाणामित्थं कथयतोस्तयोः ।
बभार कोपं जम्भारिः पाटलीकृतलोचनः ॥ ४२ ॥
निश्चित्य दण्डसाध्यत्वं रोगाणां वासवस्ततः ।
लोकपालान्वितो दृप्यन्निर्जगाम सुरैः सह ॥ ४३ ॥
ततः प्रववृते युद्धं रोगैः सह दिवौकसाम् ।
परस्परप्रहरणप्रकम्पितजगत्त्रयम् ॥ ४४ ॥
रोगान्विलोक्य बलिनस्ततो नमुचिसूदनः ।
पुरस्तात्प्रेषयामास यमं त्रिभुवनद्रुहम् ॥ ४५ ॥
हुंकुर्वन्दण्डमुद्यम्य कृतान्तस्तानताडयत् ।
वहन्तः कोपमेतेऽपि ततोऽभिदधिरे यमम् ॥ ४६ ॥
भो भो यम न कोऽप्यस्ति स्वायत्तः क्वापि देहिषु ।
ईश्वरेच्छा बलवती नियन्त्रीति विचिन्त्यताम् ॥ ४७ ॥

स्वयं प्रवृत्तिर्नास्माकं निवृत्तिर्भैषजैर्न वा ।
किंत्वीश्वरेच्छामाहात्म्यात्सर्वदैव व्यवस्थितिः ॥ ४८ ॥
पारतन्त्र्यं तवाप्यस्ति तदिच्छैव हि संहृतौ ।
अन्यथा दानवाः क्रूरा बाधमाना न किं हताः ॥ ४९ ॥
तदिच्छा यदि नेयं स्यान्नियोक्री सर्वदेहिनाम् ।
रुदन्तो भवता सर्वैः किं हताः सर्वबान्धवाः ॥ ५० ॥
तदस्मान्प्रति दुर्वारां कुहिकां मुञ्च संप्रति ।
अनिच्छति महादेवे तृणं कञ्चीकरोति कः ॥ ५१ ॥
इति तेषां वचः श्रुत्वा विहस्य बहुशो यमः ।
अभाषतोत्कटं दण्डं नर्तयन्गगनाध्वनि ॥ ५२ ॥
अरे मूढा मया यूयं प्रेर्यमाणा दिवानिशम् ।
मृत्यवे देहिनां यस्मान्मदधीनं हि जीवितम् ॥ ५३ ॥
तस्मादाज्ञामतिक्रम्य दुरध्वे मैव(मा स्म) तिष्ठत ।
अयं दण्डो मदीयो न क्षमते दुर्वचः पुनः ॥ ५४ ॥
ईश्वरो यदि वः कश्चिदस्ति त्राता स रक्षतु[1] ।
........................................... ॥ ५५ ॥

[इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ ...................
एकोनत्रिंशत्तमः प्रकाशः ॥]

---

त्रिंशत्तमः प्रकाशः ।

ॐ श्रीगुरवे शिवाय नमः ।

ऊर्ध्वाधोविनिवेशितेन[2] रचयन्त्याश्चर्यरूपं क्रमं
धर्माधर्ममयी व्यवस्थितिरसौ त्वत्तः परिस्पन्दते ।
तद्विश्वेश्वर वाच्यवाचकतया स्वातन्त्र्यमातन्वती
शक्तिस्ते हृदये प्ररोहतु मम श्रेयो विनिष्पत्तिभिः ॥ १ ॥
स्वदर्शनोचितं किंचिदिदं संगृह्यते मया ।
शिवधर्मान्तरादिभ्यः शास्त्रेभ्यो भावितान्प्रति ॥ २ ॥

---

१. इतः परं पुस्तकयेद्वऽपि पाठस्त्रुटितः.　२. 'विनिवेशनेन' ख.

अनुग्रहीतुं निःशेषान्सर्वज्ञो यदुपादिशत् ।
शास्त्राणि कृपया तत्र विज्ञेया सत्यरूपता ॥ ३ ॥
विधिवादमिमं शैवं नार्थवादः कदाचन ।
इच्छाधीना क्रिया यस्य स मृषा भाषते कुतः ॥ ४ ॥
सर्वं सर्वज्ञभावेन प्रभुत्वं यस्य वर्तते ।
स केन हेतुना ब्रूयादसत्यं शास्त्रवर्त्मनि ॥ ५ ॥
अन्यथावस्थितान्भावानन्यथेच्छति चेत्प्रभुः ।
तत्तथैव भवन्त्येते कर्तृतेच्छात्मिका यतः ॥ ६ ॥
तस्य प्रभोः प्रभावेण वैचित्रीं बहुधा श्रितः ।
रागद्वेषविमोहाद्यैर्यश्चैतत्कलुषीकृतम् ॥ ७ ॥
स मृषा भाषते प्राज्ञस्तद्गिरा कः प्रवर्तते ।
यस्तु रागाद्यकलुषः करुणानिधिरीश्वरः ॥ ८ ॥
तस्य सत्यतमा वाणी प्रमाणमिति निश्चयः ।
तस्मान्माहेश्वरं वाक्यं श्रद्धेयं भक्तिपावनैः ॥ ९ ॥
अथ का न निवर्तेत घोरसंसारकालिका ।
ध्यानार्चनादयो ये च शिवधर्माः प्रकीर्तिताः ॥ १० ॥
तत्र श्रद्धा विधातव्या तां विना ते निरर्थकाः ।
परिपूर्णो महादेवो ब्रह्माद्यैरपि [1]दुर्लभः ॥ ११ ॥
श्रद्धामात्रेण भक्तानां मर्त्यानामपि संमुखः ।
न क्लेशेन शरीरस्य द्रविणस्य न राशिभिः ॥ १२ ॥
संप्राप्यते महादेवो विना श्रद्धां सुरैरपि ।
सर्वस्वमपि यो दद्यात्प्राणान्वा श्रद्धया विना ॥ १३ ॥
स किंचिदपि नाप्नोति फलं श्रद्धैव तद्वरा ।
श्रद्दधानैर्विधातव्या तस्य पूजा महेशितुः ॥ १४ ॥
अर्घपुष्पादिभिस्तत्र मन्त्र एकः षडक्षरः ।
स मन्त्रो बीजमन्येषां मन्त्राणां सर्वसिद्धिदः ॥ १५ ॥

---

१. 'दुर्बलः' ख.

अतिसूक्ष्मो महार्थश्च स ज्ञेयो वटबीजवत् ।
देवो गुणत्रयातीतः सर्वज्ञः सर्वकृत्प्रभुः ॥ १६ ॥
ओमित्येकाक्षरे मन्त्रे स्थितः सर्वगतः शिवः ।
ईशाद्या अपि सूक्ष्माणि वक्त्राण्येकाक्षराणि तु ॥ १७ ॥
मन्त्रे नमः शिवायेति संस्थितानि यथाक्रमम् ।
वाच्यः शिवोऽप्रमेयत्वान्मन्त्रस्तद्वाचकः स्मृतः ॥ १८ ॥
वाच्यवाचकभावोऽयमनादिः संस्थितोऽनयोः ।
वेदे च शिवशास्त्रे च मन्त्रोऽयं च षडक्षरः ॥ १९ ॥
संसारसंतापहरो लोके पञ्चाक्षरः पुनः ।
किं तस्य बहुभिर्मन्त्रैः शास्त्रैर्वा बहुविस्तरैः ॥ २० ॥
यस्मिन्नमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः ।
शिवज्ञानानि सर्वाणि विद्यास्थानानि यानि च ॥ २१ ॥
षडक्षरस्य मन्त्रस्य कलां नार्हन्ति षोडशीम् ।
अत्र पूजोपकरणं गोशरीरात्समुत्थितम् ॥ २२ ॥
क्षीरादिकं तत्परमं पावनं किल्बिषापहम् ।
गावो हि प्रेषिताः पूर्वं स्वपुरात्परमेष्ठिना ॥ २३ ॥
अनुग्रहाय लोकानां नन्द्याद्यास्तेन ता वराः ।
पूजया परमेशस्य पूजको लभते फलम् ॥ २४ ॥
अत्रोपकरणीभावाद्भृगुभ्यः पादपा अपि ।
पूजितं पूज्यमानं वा भक्त्या पश्यति यः शिवम् ॥ २५ ॥
यश्चानुमोदते श्रुत्वा सोऽभीष्टं लभते फलम् ।
अर्चितं यः शिवं पश्येत्तस्य नश्यति पातकम् ॥ २६ ॥
हर्षान्नमति यो भूमौ स शैवं लभते पदम् ।
शिवाय दीयते यद्यत्तत्तद्दानं महाफलम् ॥ २७ ॥
अध्यापयेच्छनैः शिष्याञ्छिवभक्तान्प्रबोधयेत् ।
शिवशास्त्रानुसारेण विद्यादानं तदुच्यते ॥ २८ ॥

यथा शिवस्य नास्त्यन्तः परिपूर्णचिदात्मनः ।
तथा विद्याप्रदानस्य परिशुद्धचिदात्मनः ॥ २९ ॥
विद्यादाता श्रियं कीर्तिं ब्राह्मीं वृद्धिमिहाप्नुयात् ।
अमुत्राष्टविधाः सिद्धीः शैवं पदमतः परम् ॥ ३० ॥
सुशुद्धमपि योऽधीत्य ज्ञानमध्यापयेत्परम् ।
स याति नरकं घोरं पापीयाञ्ज्ञाननाशकः ॥ ३१ ॥
नष्टं नष्टं शिवज्ञानं यो जानन्नवतारयेत् ।
संस्कारयेद्वा धीमान्स स्वयमेव महेश्वरः ॥ ३२ ॥
संसारपङ्कनिर्मग्नं समुद्धरति यो जनम् ।
शिवज्ञानप्रभावेण कस्तेन सदृशः पिता ॥ ३३ ॥
अमुष्य पुण्यमाहात्म्यं वक्तुं शक्यं न केनचित् ।
अनुग्रहाय लोकस्य शिवस्तद्रूपमाश्रितः ॥ ३४ ॥
अज्ञानवह्निसंतप्तं निर्वापयति यः शनैः ।
ज्ञानामृतेन नृपतिस्तं को न प्रतिपूजयेत् ।
तन्नियोगादयं लोकः शुचिः स्याद्धर्मतत्परः ॥ ३५ ॥
यं यं धर्मं नरः श्रेष्ठः समाचरति भक्तितः ।
लोकस्तमाचरत्येव तत्प्रमाणाद्भयेन च ॥ ३६ ॥
शिवशास्त्रं लिखित्वा यः पुस्तकं प्रतिपादयेत् ।
विद्यादानस्य स फलं लभते नात्र संशयः ॥ ३७ ॥
यावदक्षरसंख्यानं शिवज्ञानस्य पुस्तके ।
तावद्वर्षसहस्राणि दाता शिवपुरे वसेत् ॥ ३८ ॥
भक्तैः संपूज्यते यत्र देशे व्याख्यायते तथा ।
शिवशास्त्रं न तत्र स्युर्दुर्भिक्षाद्या उपद्रवाः ॥ ३९ ॥
नृपतेस्तत्र सौभाग्यं विजयश्च दिने दिने ।
मतिर्धर्मे सुखं च स्यात्सर्वेषां पुरवासिनाम् ॥ ४० ॥
शिवशास्त्रं लिखति यो वाचयेद्वा ददाति वा ।
स उद्धरति पुण्यात्मा निःशेषं निजमन्वयम् ॥ ४१ ॥

शिवभक्ताय यो दद्यादशनाच्छादनादिकम् ।
लभते स परां सिद्धिं पुत्रपौत्रसमन्वितः ॥ ४२ ॥
उपानच्छत्रकौपीनशय्याप्रावरणासनम् ।
पादप्रक्षालनाभ्यङ्गस्नानभोजनभेषजम् ॥ ४३ ॥
धूपदीपप्रसूनाम्बुशिवपुस्तकमन्दिरम् ।
यो दद्याच्छिवभक्ताय श्रद्दधानो महीपतिः ॥ ४४ ॥
भृत्यैः पुत्रैश्च पौत्रैश्च सुहृद्भिश्चाखिलैः सह ।
विद्यादानस्य स फलं लभते नरकापहम् ॥ ४५ ॥
सर्वेषामपि दानानामन्नदानं विशिष्यते ।
सद्यः प्रीतिकरं हृद्यं बलबुद्धिविवर्धनम् ॥ ४६ ॥
रक्तं मांसं तथा शुक्रमन्नेन परिवर्धते ।
शुक्राद्भवन्ति भूतानि तस्मादन्नमिदं जगत् ॥ ४७ ॥
अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्वदः ।
तस्मादन्नप्रदानेन सर्वदानफलं लभेत् ॥ ४८ ॥
यदन्नपानपुष्टाङ्गः कुरुते पुण्यसंचयम् ।
तस्य दातुस्ततोऽर्धं स्यात्कर्तुश्चार्धं न संशयः ॥ ४९ ॥
त्रिभौमं पञ्चभौमं च यथाशास्त्रं विधाय यः ।
ददाति शिवभक्तेभ्यो दिव्यं शिवपुरं शुभम् ॥ ५० ॥
स क्रीडति शरीरान्ते विमानैः सार्वकामिकैः ।
पत्नीसुहृत्पुत्रभृत्यैः कारकैश्च समन्वितः ॥ ५१ ॥
अणिमादीन्गुणान्भुक्त्वा कालेन महता ततः ।
योगज्ञानं समासाद्य लभते मोक्षमक्षयम् ॥ ५२ ॥
स्थपत्याद्यास्तथा वृक्षास्तदध्यक्षाश्च ये नराः ।
ते यान्ति रुद्रस्य पुरं शिवकर्मप्रभावतः ॥ ५३ ॥
विज्ञेया रुद्रगणिकाः शिवायतनयोषितः ।
तदुत्पन्नाः शरीरान्ते लभन्ते स्वर्गमुत्तमम् ॥ ५४ ॥

एकभौमं द्विभौमं वा स प्रयाति शिवालयम् ।
आरोग्यशालां यः कुर्यात्सर्वोपकरणान्विताम् ॥ ५५ ॥
कुलैकविंशैकयुतः सभृत्यपरिवारकः ।
वसेच्छिवपुरे तावद्यावदाचन्द्रतारकम् ॥ ५६ ॥
धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः ।
तस्मादारोग्यदानेन दत्तं स्यात्तच्चतुष्टयम् ॥ ५७ ॥
आकाशस्य यथा नान्तः सुरैरप्युपलभ्यते ।
आरोग्यदानपुण्यस्य तथैवेति न संशयः ॥ ५८ ॥
तस्माद्विधेयो रोगार्तो नरः स्वस्थो विवेकिभिः ।
शिवभक्तो विशेषेण शरीरेण धनेन च ॥ ५९ ॥
एवं धनेन कर्तव्या शुश्रूषा विभवान्वितैः ।
शरीरेणैव निर्व्याजं दरिद्रैस्तु शिवार्थिभिः ॥ ६० ॥
पञ्चयज्ञोऽयमुद्दिष्टस्तस्मादेव विशिष्यते ।
दानयज्ञस्तथा ज्ञानयज्ञः शिवफलप्रदः ॥ ६१ ॥
अनुग्रहाय भक्तानां साक्षादेव महेशिना ।
ध्यानयज्ञः समाख्यातः शिवचिन्ता मुहुर्मुहुः ॥ ६२ ॥
अध्यापनं चाध्ययनं व्याख्याश्रवणचिन्तने ।
इति पञ्चप्रकारोऽयं ध्यानयज्ञः प्रकीर्तितः ॥ ६३ ॥
नास्ति ज्ञानं विना ध्यानं नास्ति ध्यानमयोगिनः ।
ध्यानं ज्ञानं च यस्यास्ति तीर्णास्तेन भवापदः ॥ ६४ ॥
ज्ञानं विकल्पैर्बहुलं रागाद्यैः कलुषीकृतम् ।
न ज्ञानं मलशुद्ध्यर्थं कलुषोदकवद्भवेत् ॥ ६५ ॥
निःसारमतिकष्टं च भवं भावयतः शनैः ।
प्रसीदतितरां ज्ञानं शरत्काले जलं यथा ॥ ६६ ॥
यदा प्रसन्नमेकाग्रं स्तिमितोदधिवद्भवेत् ।
तदा ज्ञानमिति प्रोक्तमज्ञानमिति चेतरत् ॥ ६७ ॥

अज्ञानपाशबद्धत्वादमुक्तः पुरुषः स्मृतः ।
ज्ञानेनैव विमुक्तः स्यात्प्रकाशात्तमसो यथा ॥ ६८ ॥
अज्ञाने सति रागाद्या धर्माधर्मौ च तद्वशात् ।
धर्माधर्मवशात्पुंसः शरीरमुपजायते ॥ ६९ ॥
शरीरे सति च क्लेशैः सर्वैः संयुज्यते नरः ।
तस्मात्क्लेशप्रशान्त्यर्थं ज्ञानमेवाश्रयेद्बुधः ॥ ७० ॥
ज्ञानादज्ञानविगमस्ततो रागाद्यसंभवः ।
ततश्च पुण्यपापानां भवत्येव परिक्षयः ॥ ७१ ॥
तत्क्षयाच्च शरीरेण संयोगो न भवेत्पुनः ।
अशरीरस्य च क्लेशा निवर्तन्ते समन्ततः ॥ ७२ ॥
क्लेशमुक्तः प्रसन्नात्मा मुक्त इत्यभिधीयते ।
तस्मादज्ञानमूलानि सर्वदुःखानि देहिनाम् ॥ ७३ ॥
मृज्यमानः सदा यद्वद्दर्पणो विमलो भवेत् ।
ज्ञानाभ्यासात्तथा पुंसो बुद्धिस्तज्ज्ञानमुत्तमम् ॥ ७४ ॥
ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यं यस्यास्ति ज्ञानवन्मनः ॥ ७५ ॥
यथा वह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निः क्षणमात्रतः ॥ ७६ ॥
पूजया लभते लक्ष्मीमग्निकार्यादभीप्सितम् ।
जपेन मानसीं शुद्धिं ज्ञानान्मोक्षं तु भावितः ॥ ७७ ॥
अर्धयामं मुहूर्तं वा ध्यायतः परमेश्वरम् ।
सर्वज्ञता भवेल्लोके पूज्यता च महात्मनः ॥ ७८ ॥
यद्यकस्माद्विपद्येत योगज्ञानार्थमुद्यतः ।
शिवे गुरौ च श्रद्धावान्स लोकं शुभमाप्नुयात् ॥ ७९ ॥
अनुभूय सुखं तत्र जायते योगिनां कुले ।
योगज्ञानं तत्र लब्ध्वा संसारमतिवर्तते ॥ ८० ॥

तस्माज्ज्ञानात्परं नास्ति ज्ञानी साक्षान्महेश्वरः ।
स एव परमं पात्रं दानस्येति न संशयः ॥ ८१ ॥
देशे काले च पात्रे च विधिना श्रद्धया च यत् ।
दीयते तत्फलस्यापि न कदाचन संक्षयः ॥ ८२ ॥
ज्ञानोत्तमेन यत्पुंसां त्राता संसारसागरात् ।
अज्ञानात्पालनात्त्राणात्स पात्रं परमं स्मृतम् ॥ ८३ ॥
द्विजानां वेदविदुषां कोटिं संपूज्य यत्फलम् ।
भिक्षामात्रप्रदानेन तदेव शिवयोगिनाम् ॥ ८४ ॥
शिवयोगी गृहाद्यस्य भिक्षां गृह्णाति संस्कृताम् ।
कुलमुत्तारयेत्तस्य नरकार्णवसंस्थितम् ॥ ८५ ॥
शिवयोगिनमायान्तं दृष्ट्वा नृत्यन्ति सद्गृहे ।
औषध्यो वक्रमस्यापि शिवं यास्याम इत्यलम् ॥ ८६ ॥
रूपान्वितं विरूपं वा सुवस्त्रं वा कुवाससम् ।
योगीन्द्रशङ्कया तस्मादतिथिं न विचारयेत् ॥ ८७ ॥
शिवभक्तान्द्विषन्त्यज्ञाः सर्वपापेष्ववस्थिताः ।
अधोमुखोऽर्धपादास्ते पतन्ति नरकार्णवे ॥ ८८ ॥
तस्मान्न दूषणीयास्ते कदाचिदपि केनचित् ।
ततो भयाय कल्पन्ते नरकाः स्मरणादपि ॥ ८९ ॥
वक्ता श्रोतानुमन्ता च प्रवक्ता दूषणस्य च ।
एतैः संयुज्यते यश्च पञ्चैते नरकार्थिनः ॥ ९० ॥
शिवभक्तः परं पात्रं दानात्तस्योत्तमं फलम् ।
अपात्रे दीयमानं तु सर्वं भवति निष्फलम् ॥ ९१ ॥
आमपात्रे जलं यद्वन्नश्यत्यपि सभाजनम् ।
दानं तद्वदपात्रेऽपि प्रणश्यति सदातृकम् ॥ ९२ ॥
विनोडुपेन प्रतरन्निमज्जत्युदके यथा ।
तथा दाता ग्रहीता च पतत्यज्ञानवानधः ॥ ९३ ॥

दीनान्धकृपणानाथबालवृद्धकृशातुराः ।
कृपायाः पात्रमित्येषां दानेन फलमाप्यते ॥ ९४ ॥
यदि लुब्धाः शठाः क्रूरा न स्युरप्रियवादिनः ।
कुत्र दानं दया क्षान्तिः साधुभिः साध्यते भृशम् ॥ ९५ ॥
दानं तपांसि नियमा यज्ञा दानं हुतं तपः ।
यत्नेनापि कृतं सर्वं क्रोधनस्य वृथा भवेत् ॥ ९६ ॥
मैत्री स्वागतमौदार्यमनुकम्पाप्यमत्सरः ।
इति पञ्च गुणा दानमावहन्ति महाफलम् ॥ ९७ ॥
सद्देशेऽथ च सत्पात्रे सत्काले दीयते सता ।
तस्योत्तमं फलं भूरि भवेदाचन्द्रतारकम् ॥ ९८ ॥
श्रद्धा वै जननी साक्षाज्ज्ञानस्य सुकृतस्य च ।
तस्मात्सतां परं श्रद्धादानस्य कुरुते फलम् ॥ ९९ ॥
यद्दानं श्रद्धया पात्रे विधिवत्प्रतिपादितम् ।
तस्यानन्तं फलं ज्ञेयमपि बालाग्रमात्रकम् ॥ १०० ॥
धातुवादादिसंभूतं धनं तत्रोत्तमं स्मृतम् ।
मध्यमं श्रुतशौर्यादि तपश्चिन्तान्वयागतम् ॥ १०१ ॥
वाणिज्यव्यवहाराद्यैरधमं परिकीर्तितम् ।
अपहृत्य परस्यार्थं दीयते लघु भूरि वा ॥ १०२ ॥
अधमाधमभावेन प्रत्युताशुभदायि तत् ।
इदानीं पाशनिचयाः स्थूला नरकहेतवः ॥ १०३ ॥
संक्षेपेणैव कथ्यन्ते मनोवाक्कायसाधनाः ।
परस्त्रीद्रव्यसंकल्पैश्चेतसानिष्टचिन्तनम् ॥ १०४ ॥
अकार्याभिनिवेशश्च चतुर्धा कर्म वाचिकम् ।
अभक्ष्यभक्षणं हिंसा मिथ्या कामनिषेवणम् ॥ १०५ ॥
परस्वानामुपादानं चतुर्धा कर्म कायिकम् ।
शिवनिन्दा गुरोर्निन्दा शिवज्ञानस्य दूषणम् ॥ १०६ ॥

देवद्रव्यापहरणं गुरुद्रव्यविनाशनम्।
पुस्तकस्य शिवज्ञानमयस्य हरणं तथा ॥ १०७ ॥
सुमहापातकान्याहुरानन्तर्यफलानि षट्।
पातकान्यपि चान्यानि सहितान्युपपातकैः ॥ १०८ ॥
घोरघोरफलान्याहुः शास्त्रेषु परमेश्वरः।
भेदोपभेदा एतेषां ग्रन्थगौरवभीतितः ॥ १०९ ॥
लिख्यन्ते नेह धीमद्भिर्ज्ञातव्यास्ते ततस्ततः।
एष पापकृतां मार्गो नरकेष्वतिभीषणाः ॥ ११० ॥
यमदूतैर्महाघोरैः समन्तादपि दुस्तरः।
यमकिंकरबद्धास्ते पुत्रमित्रादिवर्जिताः ॥ १११ ॥
पापिनः स्वानि कर्माणि शोचन्ति च रुदन्ति च।
नरकाः सन्ति मुख्यत्वे चत्वारिंशद्युतं शतम् ॥ ११२ ॥
अन्योऽपि बहवो येषु निवासः पापकर्मिणाम्।
महापातकिनां केचित्केचित्पातकिनामपि ॥ ११३ ॥
उपपातकिनां चान्ये निजकर्मानुसारतः।
आमलप्रक्षयाद्वह्नौ ध्मायन्ते धातवो यथा ॥ ११४ ॥
अपापप्रक्षयात्पापी शोध्यते नरके तथा।
शिवायतनमारामं वापीं कूपं मठं तथा ॥ ११५ ॥
हरन्ति ये पातकिनस्तेषां तत्र व्यवस्थितिः।
यः शृणोति गुरोर्निन्दां नरकाग्नौ स पात्यते ॥ ११६ ॥
द्रुतेन जतुना कर्णावापूर्य यमकिंकरैः।
येन देवाय गुरवे शिवभक्ताय वा सदा ॥ ११७ ॥
अदत्त्वा भुज्यते तस्य नरके यमकिंकरैः।
लोहकीलशतैस्तप्तैरास्यं जिह्वा च पूर्यते ॥ ११८ ॥
ततः क्षारेण दीप्तेन ताम्रेण गलता तथा।
अन्याश्च यातनाः कष्टा विविधाः पापकारिणाम् ॥ ११९ ॥

महाघोरातिघोराख्याः कल्पान्तदहनोपमाः ।
याः श्रुत्वा मानवा नूनं म्रियन्ते मृदुचेतसः ॥ १२० ॥
अतस्ता नात्र कथिताः पापा द्रक्ष्यन्ति याः स्वयम् ।
इति ज्ञात्वा सुधीः पुण्यं कुर्यात्पापं विवर्जयेत् ॥ १२१ ॥
पुण्येन शुभमाप्नोति नूनं पापेन चाशुभम् ।
ये भक्ताः क्षणमप्येकं शंकरं शरणं श्रिताः ॥ १२२ ॥
ते भीषणं न पश्यन्ति यमस्य वदनं नराः ।
ये पुनः सर्वभावेन प्रपन्नाः परमेश्वरम् ॥ १२३ ॥
ते पापेन न लिप्यन्ते पद्मपत्रमिवाम्भसा ।
तस्मात्सर्वात्मना ज्ञानं शिवभावैकसाधनम् ॥ १२४ ॥
येनैवोत्तीर्यते भक्तैः संसारगहनार्णवात् ।
स्वसिद्धान्ताविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ॥ १२५ ॥
इहामुत्र कुतर्कः स्याच्छुष्कतर्कं विवर्जयेत् ।
तस्मादागमयुक्त्यैव सूक्ष्मार्थप्रविचारणम् ॥ १२६ ॥
कर्तव्यं नानुमानेन केवलेन विपश्चिता ।
आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः ॥ १२७ ॥
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे ।
बहुत्वेऽपि हि शास्त्राणां सर्वज्ञेन शिवेन यत् ॥ १२८ ॥
प्रणीतममलं ज्ञानं तत्प्रापणमसंशयः ।
धर्माधर्मोपदेशोऽथ बन्धमोक्षविचारणम् ॥ १२९ ॥
शिवशास्त्रं विना जातु न सिद्ध्यति विपश्चिताम् ।
तस्मादनादिः सर्वज्ञः परिपूर्णः परः शिवः ॥ १३० ॥
अस्ति नाथः परित्राता पुंसां संसारसागरात् ।
येऽभ्यस्यन्ति शिवज्ञानं शिवोक्तं शिवभाविताः ॥ १३१ ॥
आगमत्वेऽपि सामान्ये कः प्रद्वेषः शिवागमे ।
अनायासेन यत्रोक्ता मुक्तिरेकेन जन्मना ॥ १३२ ॥

तस्मात्तत्र सदाभ्यासं कुर्यान्नान्यत्र मानवः ।
कः प्राज्ञः कार्यमुत्सृज्य दीर्घसूत्रत्वमाश्रयेत् ॥ १३३ ॥
मध्वर्थी पर्वतं कश्चिद्दूरं याति शनैः शनैः ।
अभ्यर्णे मधु चेत्पश्येत्किमर्थं पर्वतं व्रजेत् ॥ १३४ ॥
एवमेकैकभविकां विमुक्तिं पुरतः स्थिताम् ।
विहाय नैकभविकां कः प्राज्ञः प्रतिपद्यते ॥ १३५ ॥
इति किमपि कृपापरस्य शंभो-
श्चिरमुपदेशवचांसि चर्चयित्वा ।
परिहरति न दर्शनान्तरं यो
बत बत जन्म निरर्थमेव तस्य ॥ १३६ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ शिवधर्माद्युद्धारो त्रिंशत्तमः प्रकाशः ॥

---

एकत्रिंशः प्रकाशः ।

ॐ नमः शिवाय ।

मायाख्या बत कालभा(रा)त्रिरमरा(न्) व्यामोहयन्ती स्फुर-
न्त्यस्मिन्भेदतमोमये त्रिजगति स्वात्मापि नालोक्यते ।
स्वातन्त्र्येण शिवप्रकाशवपुषं दृष्टिं तु श्रु(तथो)त्पादये-
द्यन्माहात्म्यवशाद्यथास्थितिबलाद्वस्तुद्वयं भासते ॥ १ ॥
शिवक्रियामाकल्पानां संग्रहोऽयं विधीयते ।
नानाविधेभ्यः शास्त्रेभ्यस्तन्नामाख्यानपूर्वकम् ॥ २ ॥
स्तोत्रक्रमेऽत्र विद्याख्ये पुराणे करुणावता ।
कुमारेण महर्षीणां पृच्छतां विनिरूप्यते ॥ ३ ॥
मेरुमूर्धनि पार्वत्या पृष्टः प्रोवाच शंकरः ।
सर्वपापप्रशमनीं शिवरात्रिकथामिमाम् ॥ ४ ॥
पुरुषो मत्समो नास्ति नारी नास्ति त्वया समा ।
न बभूव न वा भावी यागः शिवनिशासमः ॥ ५ ॥

कदाचित्पिहिते नेत्रे मम क्रीडावशात्त्वया ।
तत एवोद्ययौ ध्वान्तं सूर्यचन्द्रानलापहम् ॥ ६ ॥
तेन घोरान्धकारेण कल्पान्तः प्रकटीकृतः ।
नाशितं च त्रिभुवनं सहसा सचराचरम् ॥ ७ ॥
पिदधत्यां त्वयि चिरं नेत्रे नष्टे चराचरे ।
कांदिशीका उपेन्द्राद्या मामेव शरणं ययुः ॥ ८ ॥
अथ तान्विवशान्दृष्ट्वा मामेव स्तोतुमुद्यतान् ।
प्रकाशितं मया ज्योतिर्ललाटनयनात्मकम् ॥ ९ ॥
सूर्यचन्द्रानलादीनामपि तज्जीवितं परम् ।
मद्भाललोचनं ध्वान्तमशेषं संजहार ह ॥ १० ॥
सृष्टे तृतीये नयने त्वया बन्धो निवारितः ।
ततः प्रभृत्यहं लोके विहरामि त्रिलोचनः ॥ ११ ॥
करनेत्रसमायोगादन्योन्यमभिलाषिणोः ।
तदानीमावयोर्भूतमुदभूद्भीमविक्रमम् ॥ १२ ॥
तदेवं कालरात्रिः सा त्रैलोक्यभयदायिनी ।
प्रकटय्य निजं तेजो मयैव विनिवारिता ॥ १३ ॥
श्रेयसे विरता रात्रिः शिवेनैव च संहृता ।
इति सा शिवरात्रित्वं त्रिषु लोकेषु लप्स्यते ॥ १४ ॥
तस्मिन्नेव क्षणे नित्यं हिरण्याक्षो निशाचरः ।
मामेवाराधयन्नासीत्पुत्रकामस्तपोभरैः ॥ १५ ॥
प्रत्यहं त्रिषु लोकेषु कुसुमैः सरसैः फलैः ।
स मामपूजयद्भक्त्या चतुर्दश्यां विशेषतः ॥ १६ ॥
अथ तस्य प्रसन्नोऽहं सुतत्वे पर्यकल्पयम् ।
उद्भूतमेकधा कृत्स्नत्रैलोक्यभयदायकम् ॥ १७ ॥
पुत्रं प्राप्य हिरण्याक्षः प्रसन्नं मामथाब्रवीत् ।
जानुभ्यां भूमिमाश्रित्य स्तुतीः कृत्वा प्रणम्य च ॥ १८ ॥

बहुकालं तपः कृत्वा त्वमेवाराधितो मया ।
प्रसन्नेऽस्मिन्नहन्येव तदिदं पूज्यतां जनैः ॥ १९ ॥
पूज्या तु फाल्गुने मासि कृष्णपक्षे चतुर्दशी ।
अभीष्टां सिद्धिमेत्वस्मिन्दिने भक्तस्त्वदर्चनात् ॥ २० ॥
इति तस्याभिलषितं मयापि प्रत्यपद्यत ।
सोऽप्यगच्छत्स्वभवनं प्रवर्तितमहोत्सवः ॥ २१ ॥
ततः प्रभृति पूज्येयं विशेषेण चतुर्दशी ।
शृणु संक्षेपकथितं विधानमवधानतः ॥ २२ ॥
स्नानं कृत्वा त्रयोदश्यां नित्यार्चनविधिं तथा ।
शुक्लाम्बरो निराहारः शुद्धिमान्विजितेन्द्रियः ॥ २३ ॥
कृपयावतर त्र्यक्ष विज्ञप्येति महेश्वरम् ।
यथाविधि कृतस्नानो द्वितीये दिवसे ततः ॥ २४ ॥
भक्त्या महेश्वरं देवं यथाविभवमर्चयेत् ।
नैवेद्यैस्तुष्टिजनकैः शुद्धस्नानसमाहितः ॥ २५ ॥
पूज्याः संतर्पणीयाश्च दीनाः संशुद्धचेतसा ।
देयो बलिश्च भूतेभ्यो योगिनीभ्यश्च सर्वथा ॥ २६ ॥
शिवालयोत्सवः कार्यो भोक्तव्यं स्वजनैः सह ।
जपस्तोत्रादिनिरतैः कार्यं जागरणं निशि ॥ २७ ॥
दिनत्रयं विधातव्यं शिवक्रीडाकथानकम् ।
शिवरात्र्यां सदैवेत्थं वर्तितव्यं कृतात्मभिः ॥ २८ ॥
यत्रेत्थं पूज्यते देशे बाध्यते न कदाचन ।
स दुर्भिक्षप्रभृतिभिर्विप्लवैरीश्वरेच्छया ॥ २९ ॥
पिशाचरक्षोयक्षाद्यास्तत्र श्रेयस्कराः सदा ।
योगिन्यो मातरश्चात्र न हिंसन्ति शिशून्क्वचित् ॥ ३० ॥
राजसूयसहस्रस्य चान्द्रायणशतस्य च ।
गोप्रदानार्बुदस्यापि फलमासाद्यते ततः ॥ ३१ ॥

रात्रिप्रजागरात्प्राप्यं फलं त्वेतद्विशेषतः ।
एकाहार्चनतो भक्तः शिवभक्ताय सर्वदा ॥ ३२ ॥
एकस्मिन्दिवसे सत्यं विशेषादेव लभ्यते ।
इति विद्यापुराणे या शिवरात्रिकथोदिता ।
अनन्तभास्करप्रोक्ता प्रकटी क्रियतेधुना ॥ ३३ ॥
एषा संप्रति खण्डशो विरचिता मायात्मनो योगिनी
वर्गेणैव समस्तलोकजननी शक्तिर्हठात्तावकी ।
तत्संक्षोभ्य चिराय तां स्वमहसा पूर्णीकृतोद्भाव्यतां
येनेयं शिवशर्वरी स्फुरति मे सूर्येन्दुतेजोपहा ॥ ३४ ॥
कदाचित्फाल्गुने कृष्णनवमीतः प्रभृत्यभूत् ।
सप्तवासरनिर्वर्त्यः श्मशाने याग उत्तमः ॥ ३५ ॥
योगिनीभिः प्रभूताभिर्विविधैरामिषासवैः ।
निमन्त्र्यते स्म भगवानेकाकी शशिशेखरः ॥ ३६ ॥
त्यक्त्वा सौम्यं वपुर्घोरमाश्रित्य च जगाम सः ।
एकाकित्वेन कुपितां देवीमपि हृदा दधे ॥ ३७ ॥
ततः पितृवनं प्राप भैरवस्तां वहन्हृदि ।
स्वस्वाचारेण तत्रैष योगिनीभिः प्रपूजितः ॥ ३८ ॥
पूजयित्वा महादेवं देवतौघो व्यजिज्ञपत् ।
त्वयापि परिपाट्येह चरुको दीयतामिति ॥ ३९ ॥
ततो जगाद भगवान्किं मया नु न दीयते ।
अहं दिगम्बरो ह्येकः कपाली च व्यवस्थितः ॥ ४० ॥
अवदन्नथ योगिन्यो यत्त्वया देव गोपितम् ।
स्वयं तद्गृह्यतेऽस्माभिरनुज्ञा तत्प्रवर्तताम् ॥ ४१ ॥
इति तासां वचः शृण्वन्नेवमस्त्विति सोऽब्रवीत् ।
हृदयाच्चास्य तां देवीमनयद्योगिनीगणः ॥ ४२ ॥
ततो निर्भिद्य पार्वत्याः शिरो धूपाधिवासितम् ।
महादेवस्य पुरतो न्यक्षिपद्योगिनीगणः ॥ ४३ ॥

शिवस्तद्वीक्ष्य पुरतः परिज्ञाय विमृश्य च ।
हृदयं पार्वतीशून्यं चिन्तयन्क्षोभमाययौ ॥ ४४ ॥
एवंविधां ततो वार्तामधिगम्य जनार्दनः ।
आरुह्य गरुडं मेषरूपं द्विभुज आययौ ॥ ४५ ॥
स बालरूपः सौवर्णोष्णीशो रक्ताम्बरोऽपि च ।
क्रीडन्समाययौ विष्णुस्तथा सिंहतनुर्नरः ॥ ४६ ॥
नृसिंहतनुना साकं क्षोभयन्योगिनीगणम् ।
जगर्ज घोरगम्भीरं नारायण इतस्ततः ॥ ४७ ॥
ततस्ताः क्षोभितास्ताभ्यां योगिन्यो भयकातराः ।
अस्मरन्स्वांश एवान्तः शरणं भावनाबलात् ॥ ४८ ॥
तद्भावनाबलात्स्वं स्वं प्रकटीकृतविग्रहम् ।
अथाविरासन्युगपद्ब्रह्माण्याद्याश्च देवताः ॥ ४९ ॥
परास्ताः षोडशो देव्यः प्रणम्य परमेश्वरम् ।
अस्तुवन्नञ्जलीर्बद्ध्वा विचित्रैः पावनैः स्तवैः ॥ ५० ॥
स्तुतीर्विधाय विविधा भूयोऽप्येता अथावदन् ।
स्तुतिवीर्यं निजं वीर्यं स्मर देव निराकुलः ॥ ५१ ॥
इति स्तुते योगिनीभिर्महादेवे समुद्ययौ ।
दारितास्या शिवादूती योगिनीभक्षणोद्यता ॥ ५२ ॥
अथोदभूत्परा वाणी स्मर रुद्र निजां तनुम् ।
कथं शिवोचितं रूपं विस्मृतं ते विमृश्यताम् ॥ ५३ ॥
तया गिरा महादेवो निजं सस्मार विग्रहम् ।
उद्ययौ च परा शक्तिरद्भुताकाररूपिणी ॥ ५४ ॥
घोरा सहस्रचरणा भक्षयन्ती चराचरम् ।
ब्रह्माण्डकोटीर्निर्मथ्य पिबन्ती भूरि शोणितम् ॥ ५५ ॥
तत्क्षणे योगिनीवर्गो नीतपूर्वो हिमाद्रिजाम् ।
पुनरुत्पादयामास स्वयोगेनाभयान्वितः ॥ ५६ ॥

उद्ययौ वैष्णवी शक्तिरपरा सेवितुं च ताम् ।
सिंहसंकर्षणाभ्यां च परा शक्तिस्तदा स्तुता ॥ ५७ ॥
भक्त्या विरचितस्तोत्रा देवी वरयति स्म तौ ।
स्वधाम देहे कर्णाभ्यां भूषणार्थमधत्त च ॥ ५८ ॥
पूजिता मातृमध्ये सा क्रुद्धा देवी कपालिना ।
उपहारीकृतस्तत्र पशुः कालश्च दुःसहः ॥ ५९ ॥
परापरशरीरा सा देवगन्धर्वपूजिता ।
पूर्णापूर्णस्वरूपेण सर्वत्रैव व्यवस्थिता ॥ ६० ॥
पार्वतीं पुनरुत्पन्नां वीक्ष्यानन्दमुपेयुषः ।
तदा भैरवनाथस्य विग्रहात्स्वेद आययौ ॥ ६१ ॥
स स्वेदः पतितः पात्रे सद्यो भैरवतामगात् ।
तेनैवानर्च भगवान्परां शक्तिं तमोपहाम् ॥ ६२ ॥
ततो विलोक्य तत्सर्वं प्रभविष्णुकुतूहलात् ।
सुप्तोत्थितेव गिरिजा पप्रच्छ परमेश्वरम् ॥ ६३ ॥
ब्रह्मनाड्यां त्वया क्षिप्ता बहिः पश्यामि विग्रहम् ।
अतिघोरा च देवीं का पुरस्तादवलोक्यते ॥ ६४ ॥
मातरश्चात्र पुरतो जगन्नाथ व्यवस्थिताः ।
सलीलं वीक्ष्य मां सर्वा हसन्ति च पुनः पुनः ॥ ६५ ॥
योगिन्यश्च भयभ्रान्ता विध्वस्तनिजतेजसः ।
आलोक्यते मयैतत्किं संशयं हर संप्रति ॥ ६६ ॥
इति साभ्यर्थनं देव्याः श्रुत्वा वाक्यमभाषत ।
समस्तमेव वृत्तान्तं रहस्यं परमेश्वरः ॥ ६७ ॥
वर्णयित्वा स्ववृत्तान्तं भगवान्भैरवः प्रभुः ।
शिवरात्रिदिनान्येतान्युत्कृष्टत्वे न्ययोजयत् ॥ ६८ ॥
अनन्तभास्करप्रोक्ता कथिता शिवशर्वरी ।
दूतिडामरतः किंचिदत्रैव परिपूर्यते ॥ ६९ ॥

(?)नीत्वा हृदयतो देवी योगिन्यस्त्रिपुरद्विषः ।
(?)दण्डः संधाय तां भूयोऽप्युमां भयकदर्थिताः ॥ ७० ॥
समर्पिता यदा देवी ताभिस्तुष्टस्तदा शिवः ।
अब्रवीद्ब्रूत कं काममभीष्टं पूरयामि वः ॥ ७१ ॥
तदा तद्योगिनीचक्रं श्रुत्वेति वचनं प्रभोः ।
यद्यदभ्यर्थयामास तत्तत्प्राप मनोगतम् ॥ ७२ ॥
ततः प्रभृति देवेन भक्तलोकानुकम्पिना ।
शिवरात्रिदिनान्येतान्यादिष्टानि महीतले ॥ ७३ ॥
योगिनीवरदानेन शिवरात्रिर्गरीयसी ।
तस्मादत्र महादेवः पूजनीयः समाहितैः ॥ ७४ ॥
असामर्थ्याच्छरीरस्य दोषोपद्रवतोऽपि वा ।
गुरुप्रोक्तक्रियाहानौ समयानामपालनात् ॥ ७५ ॥
यद्यदुत्पद्यते पापं परलोकविनाशनम् ।
शिवरात्रौ महादेवपूजनात्तन्निवर्तते ॥ ७६ ॥
तत्र मण्डलकं कार्यं रेखान्यासाद्यथाविधि ।
सर्वौषधिफलैर्युक्तान्कलशांश्च समर्चयेत् ॥ ७७ ॥
कर्पटैर्वेष्टिताः क्षिप्तहिरण्याः कुमुदोज्ज्वलाः ।
चन्दनेन समालिप्ताः कलशाः सुमनोहराः ॥ ७८ ॥
वितानं चामरं घण्टां काण्डप्रतिसरादिकम् ।
पावनं पूर्णपात्रं च यागस्थाने निवेशयेत् ॥ ७९ ॥
मनोहरे कृते यागे संध्यायां शंभुमर्चयेत् ।
यथा विभवसंभारं भक्तियुक्तेन चेतसा ॥ ८० ॥
पशुभिर्महिषैश्छागैस्तर्प्या मीनैश्च देवताः ।
कुर्यात्पिष्टमयान्वापि पशून्यागनिवेदने ॥ ८१ ॥
एवं यागे सुसंपूर्णे जपं कृत्वा समाहितैः ।
होमं कृत्वा ततो मूर्तौ तर्पणीयो महेश्वरः ॥ ८२ ॥

विधाय दिग्बलिं क्षेत्रपालादीनपि तर्पयेत् ।
दैशिकाः साधिकाश्चार्च्याः पश्चात्कार्यः प्रजागरः ॥ ८३ ॥
धूपाधिवासैः संगीतैर्घण्टावाद्यैश्च भूरिशः ।
सामरस्यं विधातव्यं चिदानन्दमयं शिवम् ॥ ८४ ॥
परा सदोदिता बोधमयी सप्तदशी कला ।
दूतीभावं समासाद्य मध्यभैरवतां गता ॥ ८५ ॥
तथैव भूरिशो देव्याश्चक्रगोष्ठीं प्रवर्तयेत् ।
पवित्रा सैव दातव्या भक्तिमद्भ्यः पुनः पुनः ॥ ८६ ॥
एवं स्थेयं त्रयोदश्यां यावद्रात्रिपरिक्षयः ।
तत्रैव यागभूमौ च चतुर्दश्यामयं क्रमः ॥ ८७ ॥
प्रातः स्नात्वा प्रभुं साकं परिवारेण पूजयेत् ।
ततः पवित्रकं दद्याच्छुभं समयपूर्वकम् ॥ ८८ ॥
हुत्वा यथाविधि ततो विदध्याच्च जपादिकम् ।
प्राग्वदेवाथ निवसेद्यावद्रात्रिपरिक्षयः ॥ ८९ ॥
ततो गुरुगणस्तर्प्यो दक्षिणाभिर्यथाक्रमम् ।
पूर्णाहूतिः प्रदातव्या क्षमयित्वा च पावकम् ॥ ९० ॥
विधाय दिग्बलीन्सर्वान्गुर्वाद्यान्नपि तर्पयेत् ।
एवं दिनत्रये कार्यं त्रयोदश्यामिवोत्सवः ॥ ९१ ॥
पञ्चाहान्यथवा कुर्यात्सप्त भक्त्या शिवोत्सवम् ।
एवं त्रयोदशीमेव विदध्याद्वा समाहितः ॥ ९२ ॥
वित्तशाठ्यं विना कुर्याच्छिवरात्रिमहोत्सवम् ।
देहान्ते परमं स्थानमवाप्नोति न संशयः ॥ ९३ ॥
शिवरात्रिदिने यागं प्रतिवर्षं करोति यः ।
भक्तः स शिवसायुज्यमवाप्नोत्यपरिक्षयम् ॥ ९४ ॥
यत्पुण्यं सर्वदानेषु सर्वतीर्थेषु सर्वदा ।
अभक्तोऽपि तदाप्नोति शिवरात्रिकृतार्चनः ॥ ९५ ॥

शिवरात्रौ सकृज्जन्ममध्ये क्रीडास्मृतेश्वरः ।
निवसेद्रुद्रलोके स यावदाचन्द्रतारकम् ॥ ९६ ॥
शिवरात्रिकथामध्यवर्त्येत दूतिडामरे ।
श्रीमत्स्कन्दपुराणोक्तं प्रकटीक्रियतेऽधुना ॥ ९७ ॥
पृष्टवन्तं तपोराशिं नमन्तं नारदं मुनिम् ।
श्रीनन्दिरुद्रः प्रोवाच भक्तानामभयप्रदः ॥ ९८ ॥
कदाचिद्विरते माघे ब्रह्मविष्णोर्विवादिनोः ।
कालरात्रौ प्रवृत्तायां लिङ्गत्वेनोद्ययौ शिवः ॥ ९९ ॥
तदा प्रभृति देवर्षे ख्याता कृष्णचतुर्दशी ।
शिवरात्रिरसाविष्टभक्तानां कल्पवल्लिवत् ॥ १०० ॥
संसाराम्भोधिमग्नानां शिवा नौरिव तारिणी ।
ब्रह्महत्यादिपापानां शिवरात्रिर्विनाशिनी ॥ १०१ ॥
यज्ञास्तपांसि दानानि तीर्थस्नानान्यनेकशः ।
न साम्यायोपवासस्य शिवरात्रौ कदाचन ॥ १०२ ॥
व्रताय नियमं तत्र गृह्णीयाद्भक्तिमान्नरः ।
पौराणिकेन मन्त्रेण सुपवित्रेण चामुना ॥ १०३ ॥
शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम् ।
निर्विघ्नमस्तु मे देव त्वत्प्रसादान्महेश्वर ॥ १०४ ॥
रात्रिं प्रपद्ये जननीमित्युदीर्य च भावितः ।
दृष्ट्वा शिवं गुरूंनत्वा शुद्धिमान्भावयेद्व्रतम् ॥ १०५ ॥
अथाह्नः पञ्चमे भागे स्वगायत्र्या पवित्रया ।
कुर्यात्कृष्णतिलैः स्नानं शुद्धे वेश्मनि वा बहिः ॥ १०६ ॥
ततः शिवस्यायतनं व्रती गच्छेन्निशागमे ।
अर्चनद्रव्यमादाय स्वजातीयैः समन्वितः ॥ १०७ ॥
पञ्चामृतादिभिर्लिङ्गे स्नानं दत्त्वा यथाक्रमम् ।
पुष्पैः पूजा विधातव्या सार्धैश्चन्दनचर्चितैः ॥ १०८ ॥

प्रदक्षिणैर्नमस्कारैर्धूपनैवेद्यभूषणैः ।
नृत्तेन गीतवाद्यैश्च कुर्याज्जागरणं निशि ॥ १०९ ॥
अस्मिन्दिने शिवो रात्रौ भक्तानन्विष्यति स्वयम् ।
त्यक्तनिद्रैरतः सद्भिः शिवचर्चैव चिन्त्यताम् ॥ ११० ॥
व्यतीतायां विभावर्यां द्वितीयेऽह्नि सिताम्बरः ।
भगवल्लिङ्गमभ्यर्च्य जुहुयाच्च हुताशनम् ॥ १११ ॥
हिरण्यधेनुवस्त्रान्नभूदानैरर्चयेद्गुरुम् ।
तुष्यति त्र्यम्बकस्तस्मिंस्तुष्टे ज्ञानोपदेष्टरि ॥ ११२ ॥
तीर्थस्नानजपश्राद्धहोमयागादि किंचन ।
अस्मिन्दिने यत्क्रियते भवेत्तत्सर्वमक्षयम् ॥ ११३ ॥
साधून्द्वादश संपूज्य भोजयेत शिवात्मकान् ।
दद्यात्तेभ्यस्तिलछत्रानुदकुम्भान्सदक्षिणान् ॥ ११४ ॥
पञ्चगव्यं ततो भुक्त्वा मूलमन्त्रेण भावितः ।
भोजयेत्सुहृदो बन्धूनतिथीन्परिचारकान् ॥ ११५ ॥
शिवरात्रिव्रतं कुर्यादनेन विधिनेह यः ।
भुक्त्वा भोगानभीष्टान्स प्रयाति परमं पदम् ॥ ११६ ॥
स्नातः शंकरमभ्यर्च्य दिने योऽस्मिन्नुपोषितः ।
रात्रौ भक्त्या प्रजागर्ति स याति परमां गतिम् ॥ ११७ ॥
मातुर्वंशे पितुर्वंशे पत्नीवंशेऽपि भक्तिमान् ।
शिवरात्रिव्रतात्साधुः पितॄन्दशदशोद्धरेत् ॥ ११८ ॥
शिवरात्रिदिनेष्वेवं ध्यानेनापि करोति यः ।
राजसूयसहस्रस्य सोऽप्ययत्नात्फलं लभेत् ॥ ११९ ॥
अन्यदर्शनभाजोऽपि सोपवासाः प्रजागरात् ।
शिवरात्रावभीष्टानि प्राप्नुवन्ति न संशयः ॥ १२० ॥
शिवभक्ताय दानं यत्फलं तस्य परं पदम् ।
एतज्ज्ञात्वा प्रयत्नेन चिन्त्यतां शिवभावितः ॥ १२१ ॥

कुलहीनः कुलीनो वा मूर्खो वा वेदपारगः ।
द्विजातिरन्त्यजातिर्वा शिवभक्तस्तु मोचकः ॥ १२२ ॥
यजन्ते शिवमत्राद्धि महापातकिनोऽपि ये ।
ते सूर्यग्रहणे कोटिलक्ष्यदानफलस्पृशः ॥ १२३ ॥
शिवं यः पूजयेद्भक्त्या शिवरात्रौ नरोत्तमः ।
तस्य प्रीत्या विभूत्या च वर्धते सकलं कुलम् ॥ १२४ ॥
शिवरात्रिचतुर्दश्यां यो जागर्ति प्रसङ्गतः ।
तस्यापि पुण्यं जानन्ति वक्तुं ब्रह्मादयो न ते ॥ १२५ ॥
न शिवादपरो देवो नाश्वमेधात्परः क्रतुः ।
शिवरात्रिसमं लोके व्रतं चान्यन्न विद्यते ॥ १२६ ॥
अजानन्त्यः शिवकथां पापिष्ठा अधियः स्त्रियः ।
शिवरात्रिव्रताधारस्तासामप्युत्तमा गतिः ॥ १२७ ॥
शिवरात्रिव्रतकृतां भुक्तिमुक्ती करस्थिते ।
तस्माद्भावितचेतोभिः शिवः पूज्यः प्रयत्नतः ॥ १२८ ॥
ब्रह्मविष्णुप्रभृतयः शिवशासनभाविताः ।
शिवरात्रिव्रतफलाद्भजन्ते परमां गतिम् ॥ १२९ ॥
ये पूजयन्ति भूतेशं शिवरात्रिमहोत्सवे ।
कदाचिदपि तत्कण्ठे कालो न पाशमुज्झति ॥ १३० ॥
इत्युक्तं नन्दिरुद्रेण समाकर्ण्यैव नारदः ।
नमो नमः शिवायेति भगवद्भक्तिमाश्रितः ॥ १३१ ॥
अस्मिन्पुराणे स्कन्दस्य कथैकत्रेदृशी स्थिता ।
अन्यत्रापीदृशी तत्र पार्वतीं शंभुरभ्यधात् ॥ १३२ ॥
शृणु देवि पुरा कुले(कल्पे) विदर्भेष्वभवन्नृपः ।
स वन्देति समग्राणां राज्ञां मूर्धन्यतां भजन् ॥ १३३ ॥
धर्मव्यवस्थया राज्यं स करोति स्म पार्थिवः ।
दुःखनामापि नाशृण्वंस्तस्मिन्पालयति प्रजाः ॥ १३४ ॥

समग्रगुणसंपूर्णा तस्य चैकाभवत्प्रिया ।
तिलोत्तमेति निर्दोषा लावण्यामृतगुम्फिता ॥ १३५ ॥
राजा कदाचित्प्रियया तया साकमवर्तत ।
सापि ताम्बूलमेतस्मै ददाति स्म विलासिनी ॥ १३६ ॥
वितीर्य भर्त्रे ताम्बूलं शिवमस्त्विति चाब्रवीत् ।
श्रुत्वैव शिवशब्दं च स प्राग्जातिं समस्मरत् ॥ १३७ ॥
सुप्तोत्थितमिव प्राच्यजातिस्मरणतो नृपम् ।
पप्रच्छ कौतूहलतः किमेतदिति वल्लभा ॥ १३८ ॥
यदीदं नाभिधत्से त्वं तत्त्यजामि स्वजीवितम् ।
श्रुत्वा भूयो गिरस्तस्याः कथयामास भूपतिः ॥ १३९ ॥
आश्चर्यमवधानेन शृणुष्व मृगलोचने ।
वैश्योऽहमभवं पूर्वं निजकर्मरतः शुचिः ॥ १४० ॥
कदाचिद्दुर्गतिवशात्स्वधर्मं परिहृत्य मे ।
प्रवर्तते स्म हृदयं चौरकार्याय सर्वतः ॥ १४१ ॥
रात्रौ रात्रौ निजगृहाद्विनिर्गत्य यतस्ततः ।
आनीयते स्म द्रविणं मया भूरि बलीयसा ॥ १४२ ॥
कदाचित्फाल्गुणे मासि कृष्णपक्षे चतुर्दशी ।
प्रसङ्गेन प्रववृते चौर्यार्थमस्मि निर्गतः ॥ १४३ ॥
शिवरात्रिदिने तस्मिन्पूजाव्यापृतसज्जने ।
शिवायतनमेवाहमविशं चौर्यतत्परः ॥ १४४ ॥
अर्धरात्रे गते तत्र चौर्यार्थी जाग्रता मया ।
लभ्यते स्म शुभं हेम मुखरन्ध्रे न्यधायि च ॥ १४५ ॥
तदास्यविवरे हेम गृहीत्वा तत्र निर्गतः ।
आगच्छद्भिर्द्रुततरं लक्षितः पुररक्षिभिः ॥ १४६ ॥
नानायुधास्ते शतशो जघ्नुर्मां चौर्यकारणात् ।
एकश्चिच्छेद मूर्धानं करवालिकया च मे ॥ १४७ ॥

स मूर्धा मे निपतितः काञ्चनेन समन्वितः ।
तत्रैव कूपे गहने समीपतरवर्त्मनि ॥ १४८ ॥
किमन्यैः कथनैस्तेन प्रजागरणकर्मणा ।
चौर्यप्रसङ्गे विहिते त्वद्य जातिं स्मराम्यहम् ॥ १४९ ॥
पश्य साधारणफलं शिवरात्रिप्रजागरम् ।
पापश्चौरोऽपि येनाहमद्य जातिस्मरो नृपः ॥ १५० ॥
वर्तते तदसावद्य शिवरात्रिचतुर्दशी ।
भगवत्पूजनादन्यदस्यां किं क्रियते मया ॥ १५१ ॥
इति ब्रुवाणे भूपाले शिवरात्रिकथानकम् ।
सा समस्तमसत्यं तदमन्यत जगाद च ॥ १५२ ॥
कोऽस्त्यत्र प्रत्ययो राजन्नेवं कथयति त्वयि ।
प्रकाशलक्षणं किंचित्प्रकाशय ममाधुना ॥ ॥ १५३ ॥
एवं तस्यां ब्रुवाणायां राजा मतिमतां वरः ।
तत्कालमेव त्वरितं गत्वा कूपमदर्शयत् ॥ १५४ ॥
व्यतीते बहुले काले तृणाकाष्ठाश्मनिर्भरम् ।
देवी कूपमपश्यत्सा दारयामास चाभितः ॥ १५५ ॥
खातात्कूपात्ततो राजा प्राङ्मूर्धानमदर्शयत् ।
तस्यास्य कुहरे तच्च काञ्चनं विस्मयावहम् ॥ १५६ ॥
दृष्ट्वा तदद्भुतं देवी स्वभर्तृप्रकटीकृतम् ।
आत्मनि प्रत्ययं लेभे शिवरात्रिमहाफले ॥ १५७ ॥
दम्पती नियमं तत्र ततः प्रभृति चक्रतुः ।
मनोरथातीतफले शिवरात्रिप्रजागरे ॥ १५८ ॥
चक्रतुः शिवरात्रौ च भगवल्लिङ्गपूजनम् ।
जग्मतुश्च शरीरान्ते भक्तिलभ्यं परं शिवम् ॥ १५९ ॥
एवं चौरः प्रसङ्गेन शिवरात्रौ प्रजागरात् ।
लेभे महाफलं किंतु भक्तिमान्न किमाप्नुयात् ॥ १६० ॥

शिवः शक्तिस्तिथिश्चेति न कश्चिदपकृष्यते ।
तस्मात्समत्वेनैवैतत्कर्तव्यं भावितात्मभिः ॥ १६१ ॥
इति स्कन्दपुराणोक्ता शिवरात्रिकथा शुभा ।
अधुनानलसिद्धान्तदृष्टेयं विनिरूप्यते ॥ १६२ ॥
तत्र कृष्णचतुर्दश्यां फाल्गुणे मास्युपोषितः ।
चतुर्दश्यां महादेवं यथाविभवमर्चयेत् ॥ १६३ ॥
सान्नान्कृष्णतिलान्दद्यात्पशूंश्च विनिवेदयेत् ।
भक्ष्यं भोज्यं च पानं च भक्त्या विविधमर्पयेत् ॥ १६४ ॥
कुमार्यः पूजनीयाश्च विविधैः पानभोजनैः ।
नैवेद्यं तु तदुच्छिष्टमगाधे वारिणि क्षिपेत् ॥ १६५ ॥
शिवरात्रिदिने कालो दग्धश्चन्द्रार्धमौलिना ।
देवैरात्मा पशूकृत्य तदा चाहुतिसात्कृतः ॥ १६६ ॥
ततस्तुष्टो महादेवो देवान्वरयति स्म तान् ।
अनेन हेतुना दद्यादुपहारं पशूत्तमैः ॥ १६७ ॥
महापशुष्वलभ्येषु घृतशालिविनिर्मितान् ।
निवेदयेत देवाय भक्तिमालम्ब्य निर्मलाम् ॥ १६८ ॥
अलाभे मनसा तावत्पशून्दद्यात्समाहितः ।
अन्यथा तत्र सदने देव्यो हिंसन्ति बालकान् ॥ १६९ ॥
क्रोधेन निखिलान्भूतान्मोहयित्वा महेश्वरः ।
एक एव जजागारेत्यसौ सा शिवशर्वरी ॥ १७० ॥
पूजयित्वा महेशानं हुत्वा चाग्निं विधानतः ।
शिवरात्रौ नरो भक्त्या देहान्ते शिवभाग्भवेत् ॥ १७१ ॥
असावनलसिद्धान्ते शिवरात्रिरुदीरिता ।
कथ्यते पावनेदानीं सा ब्रह्माण्डपुरातनः ॥ १७२ ॥
तत्रेश्वरो महादेवीमभ्यधत्त जगत्प्रभुः ।
भक्तानुकम्पया चेदं धीवराख्यानकं शुभम् ॥ १७३ ॥

गण्डकाख्येऽभवद्वृद्धो धीवरो धीवरोदरः ।
निहत्य प्रत्यहं मत्स्यान्कलत्रभरणावहान् ॥ १७४ ॥
पुत्रदारांश्चिरं मत्स्यैः सोऽतिवाह्य कदाचन ।
दुष्टात्मा निर्ययौ जालमादाय निजचर्यया ॥ १७५ ॥
आसीदस्मिन्नवसरे शिवरात्रिचतुर्दशी ।
सोऽपि पापः स्ववृत्त्यैव सरोमध्यमशिश्रियत् ॥ १७६ ॥
स जालेनाददे मत्स्यं तत्र यत्नेन भूयसा ।
अस्मिन्नेव प्रसङ्गे च प्रावर्तत विभावरी ॥ १७७ ॥
महान्तं मत्स्यमादाय मोदमानोऽथ धीवरः ।
उदतिष्ठत्सरस्तीरात्स्वागारागमनोत्सुकः ॥ १७८ ॥
तमोरुद्धं नभो दृष्ट्वा ततः स भयविह्वलः ।
अपश्यत्पुरुषानग्रे विविधायुधधारिणः ॥ १७९ ॥
तान्विलोक्य भयादेव प्रविवेश शिवालयम् ।
तत्र गर्भगृहे लिङ्गस्थानं छन्नेऽथ चास्रवत् ॥ १८० ॥
जालं स पिण्डीचक्रे च तत्र पानीयनिर्भरम् ।
तदम्बुबिन्दुभिस्तच्च लिङ्गमूर्धनि पस्पृशे ॥ १८१ ॥
शिवरात्रिचतुर्दश्यां प्रमादादिति धीवरः ।
पापीयानपि पानीयं न्यक्षिपल्लिङ्गमूर्धनि ॥ १८२ ॥
चिन्तया जागरं कुर्वन्रजनीमत्यवाहयत् ।
एतन्माहात्म्यतो लेभे देहान्ते परमां गतिम् ॥ १८३ ॥
अम्भोभिर्जालपतितैर्लिङ्गे स्पृष्टे प्रमादतः ।
प्रजागरेणाप्यचिरात्स मृतः शिवतामगात् ॥ १८४ ॥
महापातकिनामित्थं शिवरात्रिव्रताद्गतिः ।
भक्तिभाजां फलं कीदृगिति किं नाम वर्ण्यते ॥ १८५ ॥
शिवरात्रिविधिः प्रोक्तः स ब्रह्माण्डपुराणतः ।
अयं शिवपुराणाच्च प्रकटीक्रियतेऽधुना ॥ १८६ ॥

तत्र कैलाशशैलस्थमपृच्छत्पार्वती शिवम् ।
कथितं मे त्वया सर्वं यज्ञतीर्थादि भूरिशः ॥ १८७ ॥
तदद्य किंचिदाख्याहि भुक्तिमुक्तिफलप्रदम् ।
नो सामान्यकथाभिर्मे कदाचिदपि निर्वृतिः ॥ १८८ ॥
श्रुत्वेति देव्या वचनं जगाद परमेश्वरः ।
श्रूयतामवधानेन शिवरात्रिव्रतं परम् ॥ १८९ ॥
मया न कस्यचिद्गुह्यमाख्यातमिदमुत्तमम् ।
एतदाकर्ण्य विलयं यमोऽपि लभते ध्रुवम् ॥ १९० ॥
फाल्गुणे कृष्णपक्षे या स्थिता देवि चतुर्दशी ।
शिवरात्रिरिति ख्याता सर्वपातकनाशिनी ॥ १९१ ॥
दानेन तपसा तैस्तैरध्वरैर्भूरिदक्षिणैः ।
स्वप्नेऽपि नाप्यते साम्यं शिवरात्रिविधेः प्रिये ॥ १९२ ॥
सा कृष्णा कालसंहर्त्री व्रतं ये तत्र कुर्वते ।
न कदाचिद्यमपुरं ते यान्ति मयि भाविताः ॥ १९३ ॥
इत्याकर्ण्य गिरं भर्तुर्बभाषे परमेश्वरी ।
न यान्ति ते यमपुरं तद्व्रतात्कथमुच्यताम् ॥ १९४ ॥
हिमाद्रिजाया वचनं श्रुत्वेत्यभिदधौ शिवः ।
बभूव कोऽपि पापीयान्निषादो ह्यतिदारुणः ॥ १९५ ॥
अकामतः स विदधे शिवरात्रौ प्रजागरम् ।
कालान्तरेण स मृतो जगृहे यमकिंकरैः ॥ १९६ ॥
निर्दग्धकिल्बिषः सोऽत्र शिवरात्रिप्रजागरात् ।
आनीयतामिति मया प्रहिताः प्रमथास्तदा ॥ १९७ ॥
गच्छद्भिः प्रमथैर्दृष्टो गृहीतो यमकिंकरैः ।
यमस्याभ्यर्णमेहीति भाषमाणैः स लुब्धकः ॥ १९८ ॥
अथाब्रुवन्गणा नेयः सोऽयं नः शिवकिंकरैः ।
तेऽप्यभाषन्त पापीयान्प्राणिहा केन मुच्यते ॥ १९९ ॥

ततस्ते प्रमथाः क्रुद्धाः प्रहृत्य यमकिंकरान् ।
लुब्धकं तं समानिन्युर्बलवन्तो मदन्तिकम् ॥ २०० ।
मदालोकनमात्रात्स दिव्यदेहत्वमागतः ।
रुद्रकन्यासमाकीर्णे विमानं प्राप लुब्धकः ॥ २०१ ॥
गणस्ततः प्रभृत्येष पश्य पार्वति वल्गति ।
ममाग्रतो गिरिवरे रत्नकुण्डलमण्डितः ॥ २०२ ॥
यमदूतास्ततस्तेऽपि प्रमथैर्जर्जरीकृताः ।
रुदन्तो रुधिरार्द्राङ्गाः स्वपत्यु(ते)र्भवनं ययुः ॥ २०३ ॥
तान्वीक्ष्य तादृशान्क्रुद्धो दण्डपाणिरभाषत ।
मद्दोर्बलमजानद्भिः कैर्यूयं निर्जिता इति ॥ २०४ ॥
अथाभिदधिरे तेऽपि लुब्धकः प्राणिकोटिहा ।
आनीतोऽस्माभिरागत्य मोचितो भगवद्गणैः ॥ २०५ ॥
इत्याकर्ण्य गिरं तेषां जगाद जगदन्तकः ।
पापिनां विनियोक्ताहं शंभोरेवाज्ञया स्थितः ॥ २०६ ॥
तदव्यवस्था केयं स्यान्नीतः शिवपुरं स यत् ।
शुभाशुभफलास्वादो नियतो हि शिवेच्छया ॥ २०७ ॥
शुभं किं सादृशं तस्य लुब्धकस्य दुरात्मनः ।
नीतः शिवपुरं येन चित्रगुप्त विचिन्त्यताम् ॥ २०८ ॥
यमस्येति वचः श्रुत्वा चित्रगुप्तोऽप्यभाषत ।
शुभाशुभं विचार्यैव प्रेष्यन्ते तव किंकराः ॥ २०९ ॥
मयेदं निश्चितं तस्य नास्ति कर्म शुभं क्वचित् ।
अनेकप्राणिहा क्रूरः सदैव स हि लुब्धकः ॥ २१० ॥
इत्युक्ते चित्रगुप्तेन दण्डपाणिरभाषत ।
न मे पापकृतां चिन्ता शंभोर्गत्वा निवेदये ॥ २११ ॥
उक्त्वेति चरितं प्राप सोऽथ कैलासपर्वतम् ।
अनुज्ञां नन्दिनः प्राप्य समालोकयति स्म च ॥ २१२ ॥

विलोक्य मां ततः सोऽपि स्तुतीः कृत्वा सहस्रशः ।
दण्डवत्प्रणमन्दण्डपाणिर्वक्तुं प्रचक्रमे ॥ २१३ ॥
सहस्रकल्पभोग्यानि दुष्कर्माणि चकार यः ।
स लुब्धकस्त्वत्प्रमथैर्नीतः शिवपुरं प्रभो ॥ २१४ ॥
नियुक्तोऽहं भगवता शासनाय कुकर्मिणाम् ।
तेऽपि चेदुत्तमं लोकं लभन्ते तद्गतिर्न मे ॥ २१५ ॥
स्वप्नेऽपि तेन सत्कर्म विदधे न दुरात्मना ।
विविधान्प्राणिनो हत्वा येन जन्मातिवाहितम् ॥ २१६ ॥
मदीयास्ताडिता नाथ गणैः प्रत्युत किंकराः ।
नेदानीं तदहं स्वामिन्नियोगोद्वहने क्षमः ॥ २१७ ॥
अधिकाराय दण्डोऽयं मम मुद्रा च तिष्ठतु ।
इत्युक्त्वा तत्परित्यागं करोति स्म ममाग्रतः ॥ २१८ ॥
अथावोचमहं श्रुत्वा परमार्थं विचारय ।
अनेकप्राणिहा पापो लुब्धकः केन मोच्यते ॥ २१९ ॥
प्रमादाज्जागरांचक्रे शिवरात्रावुपोषितः ।
सर्वपापप्रशमनी ततोऽस्य गतिरुत्तमा ॥ २२० ॥
तथा हि बाल्यात्प्रभृति प्राणिभिर्विविधैर्हतैः ।
कुटुम्बभरणाधायी सर्वदैव स लुब्धकः ॥ २२१ ॥
एकदा धनुरादाय शरपाणिः स निर्गतः ।
चक्षुर्दिक्षु समस्तासु विदधे प्राणिनः प्रति ॥ २२२ ॥
नालभ्यत ततस्तेन प्राणी कोऽपि प्रयत्नतः ।
भ्राम्यति स दिनं कृत्स्नं पादपाः काननानि च ॥ २२३ ॥
अस्तं गते रवौ सोऽथ नैराश्यात्समचिन्तयत् ।
एकोऽपि नाद्य निहतः प्राणी व्यर्थं दिनं गतम् ॥ २२४ ॥
मत्स्याकीर्णस्तडागोऽयं वर्तते तद्वरं निशि ।
अत्र प्रविश्य करवै मनोरथसमर्थनम् ॥ २२५ ॥

इति संचिन्त्य विस्तीर्णे तडागं प्रविवेश सः ।
तत्तीरस्थितमालोक्य तरुं शाखाशताकुलम् ॥ २२६ ॥
वारिमध्ये तडागस्य महालिङ्गं व्यवस्थितम् ।
आलम्बितद्रुमापास्तैः सपर्णैस्तदवाकिरन् ॥ २२७ ॥
एकोऽपि तिष्ठति प्राणी नामुत्रेत्यस्य चिन्तया ।
व्याकुलस्योदभून्निद्रा निशि न क्षणमात्रकम् ॥ २२८ ॥
एवं प्रासङ्गिकं प्राप्य शिवरात्रिप्रजागरम् ।
द्रुमच्युतैश्च पर्णौघैर्यत्स लिङ्गमवाकिरत् ॥ २२९ ॥
ततः समस्तपापानां विरामस्तस्य वर्तते ।
अनेन हेतुना प्राप्तः शरीरान्ते पुरं मम ॥ २३० ॥
मुद्रां गृहीत्वा दण्डं च स्वनियोगं कुरुष्व तत् ।
शिवरात्रिव्रताधायी शासनीयः कथं तव ॥ २३१ ॥
इति मद्गिरमाकर्ण्य जगाम स्वपुरं यमः ।
तस्माद्वैवस्वतपुरं न यान्त्येतद्व्रतावहाः ॥ २३२ ॥
नातः परतरं किंचित्त्राणमस्ति शरीरिणाम् ।
इत्याख्यातं मया देवि शिवरात्रिव्रतं तव ॥ २३३ ॥
इति शंभोर्गिरं श्रुत्वा परमार्थोपदेशिनीम् ।
अभाषत महादेवी भक्त्युल्लसितमानसा ॥ २३४ ॥
कुर्वन्क्रूराणि कर्माणि गतो देव शिवालयम् ।
अनिच्छुरपि तत्कर्ता भक्तानां तत्फलं वद ॥ २३५ ॥
श्रुत्वेति वाक्यं पार्वत्याः कथयामास शंकरः ।
पापीयसामनिर्देश्यं शिवरात्रिव्रतं शृणु ॥ २३६ ॥
क्षमा दया दमो हिंसा गुरुवात्सल्यकारिणाम् ।
इदं प्रकाश(श्य)मन्येषां कथनान्निरयं व्रजेत् ॥ २३७ ॥
शिवमन्त्रैर्जयं कृत्वा हुत्वा दीपान्वितीर्य च ।
प्रजागरं यः कुरुते देहान्ते स शिवं व्रजेत् ॥ २३८ ॥

बुभुक्षुश्चेत्स लभते भोगानमृतसंनिभान्।
रुद्रलोकं समासाद्य परतः शिवमाप्नुयात् ॥ २३९ ॥
मामभक्तो न जानाति कदाचिदपि मानवः।
अहं जाने न कुर्वाणं शिवरात्रिप्रजागरम् ॥ २४० ॥
शिवरात्रिव्रतं कृत्वा किं किं नाप्नोति भक्तिमान्।
जननीगर्भवासोत्थां व्यथां भूयो न लप्स्यते ॥ २४१ ॥
यद्युत्तमफलप्राप्तिं कश्चिदिच्छति मानवः।
चतुर्दशीषु सर्वासु विधिं तस्य प्रकाशये ॥ २४२ ॥
आद्यं दीपोत्सवदिनं मार्गशीर्षाहमेव वा।
ततः प्रभृति मासेषु पुण्या कृष्णचतुर्दशी ॥ २४३ ॥
उपोषितैर्विधातव्यो रात्रौ भक्त्या प्रजागरः।
प्रदीपाः प्रज्वलन्तश्च देया दशसु दिक्ष्वपि ॥ २४४ ॥
द्वादशे सा महादेवगृहीताः शिवरात्रयः।
निर्विघ्नां सिद्धिमायान्तु प्रसादात्तव शंकर ॥ २४५ "
इति पौराणिकं मन्त्रं पठित्वा पुण्यमानसः।
गृहीत्वा नियमं भावं नमस्कुर्याच्छिवात्मकम् ॥ २४६ ॥
ततो नैवालपेत्पापान्दाम्भिकांल्लिङ्गजीविनः।
स्नानं विधाय विधिवत्पूजयेत्परमेश्वरम् ॥ २४७ ॥
पञ्च वर्णं ततः कृत्वा मण्डलं विनिवेशयेत्।
अव्रणं कृष्णवर्णं च कुम्भं तत्र समाहितः ॥ २४८ ॥
पात्रं तस्योपरि न्यसेत्ताम्रं तिलसमन्वितम्।
वस्त्रैर्विचित्रैः कलशं वेष्टयेच्चाम्बुनिर्भरम् ॥ २४९ ॥
उमया सह रुद्रस्तु स्थापनीयो हिरण्मयः।
युग्मं च पूजनीयं तदर्घपुष्पादिभिः शुभैः ॥ २५० ॥
शिवाय त्र्यम्बकायाथ भैरवाय कपालिने।
नागयज्ञोपवीताय चेश्वरायेति वाचिकैः ॥ २५१ ॥

नमोन्तैः पूजयेत्यादौ कटीमुदरमानसे ।
कण्ठं शिरश्च सर्वाङ्गं सर्वरूपिण इत्यथ ॥ २९२ ॥
यथाक्रमं शुभैर्मन्त्रैः पुराणपरिकीर्तितैः ।
एभिर्मन्त्रैर्महादेवः पूजनीयः प्रयत्नतः ॥ २९३ ॥
वामदेव्यै महादेव्यै उमायै चेति वाचिकैः ।
नमोन्तैरर्चयेद्देव्याः पादाः कटीमथोदरम् ॥ २९४ ॥
सुभगायै सुकण्ठायै इति मन्त्रैर्नमोन्वितैः ।
हृदि कण्ठे च रुद्राणी पूजनीया यथाविधि ॥ २९५ ॥
नमस्ते देव ईशान शंभो परमकारण ।
उमया सहितो देव अर्घं गृह्ण(?)[1] नमोऽस्तु ते ॥ २९६ ॥
इति पौराणिकं मूलमन्त्रमुच्चार्य भक्तिमान् ।
उमया सहितं रुद्रं पूजयेत्कुसुमादिभिः ॥ २९७ ॥
गीतैर्मनोरथैर्वाद्यैः स्तोत्रैः सच्छास्त्रशीलनैः ।
अन्यैः शिवकथारूपैर्व्यापारैश्च निशां नयेत् ॥ २९८ ॥
गुरून्भक्त्या समाभ्यर्च्य व्रतिनो विविधांस्तथा ।
सर्वान्संतर्पयेद्भोज्यपानैर्दक्षिणया सह ॥ २९९ ॥
अतिवाह्य निशां प्रातरुत्थाय शिवमर्चयेत् ।
पञ्चामृतादिभिर्द्रव्यैर्यथाविधि सुगन्धिभिः ॥ ३६० ॥
क्षीराहारैः शुभतरैः खण्डमण्डकलड्डुकैः ।
प्रदीपौघैः सुपाकैश्च नैवेद्यैः शिवमर्चयेत् ॥ ३६१ ॥
पूजयित्वा महादेवं क्षमयित्वा प्रणम्य च ।
व्रतं निवर्तितं देव क्षमस्वेति कृतस्तुतिः ॥ ३६२ ॥
भक्त्या चतुर्दशीष्वित्थं यः कुर्याद्द्वादशीष्वपि ।
स भूयो लभते जन्म न कदाचन भावितः ॥ ३६३ ॥
देहान्ते स चतुर्बाहुः शूलधारी त्रिलोचनः ।
असंख्यैः प्रमथैर्युक्तः शिवलोकमवाप्नुयात् ॥ ३६४ ॥

---

१. 'गृहाणार्घं' इति पाठो भवेत्.

सिद्धकिन्नरगन्धर्वाश्चारणाश्च सहस्रशः ।
शुभदिव्यविमानस्थं तं स्तुवन्ति पुनः पुनः ॥ २६५ ॥
तस्मिन्निन्द्रपुरं याते निर्यान्त्यप्सरसस्ततः ।
कोऽयं कोऽयं भवेदेवमिति रागार्द्रचेतसः ॥ २६६ ॥
त्यक्त्वा शक्रपुरं यावद्ब्रह्मलोकं तदङ्गनाः ।
क्षोभयत्ययमात्मीयमहिम्ना दिव्यविग्रहः ॥ २६७ ॥
ब्रह्मलोकमपि त्यक्त्वा विष्णुलोकं च स क्षणात् ।
आसादयति दुष्प्रापं कैलासाद्रिं ममास्पदम् ॥ २६८ ॥
तस्मिन्सन्निकटं प्राप्ते स्फटिकाचलमूर्धनि ।
भक्तोऽयमिति नृत्यन्ति रुद्रकन्याः सहस्रशः ॥ २६९ ॥
संगीतकविधिं कृत्वा मङ्गलान्यभिनन्द्य च ।
इन्द्रादयस्तं सेवन्ते भक्तोऽयं धूर्जटेरिति ॥ २७० ॥
कैलासवर्तिनं वीक्ष्य तं दिव्याकृतिधारिणम् ।
सुरासुरादयः सर्वे विस्मयन्ति नमन्ति च ॥ २७१ ॥
रुद्रकन्यास्ततो दिव्याः सर्वलोकातिशायिनीः ।
मदाज्ञया स लभते शिवरात्रिव्रतात्फलम् ॥ २७२ ॥
एवं मया तवाख्यातः शिवरात्रिविधिः प्रिये ।
प्राणवद्रक्षणीयोऽसौ न वाच्यो जात्वभाविते ॥ २७३ ॥
तुहिनाद्रिर्गलत्येव क्षीयते च महार्णवः ।
ब्रह्मादयोऽपि नश्यन्ति शिवरात्रिफलं न तु ॥ २७४ ॥
एको जगत्सु धन्योऽसौ शिवरात्रावुपोषितः ।
यो जागर्ति चतुर्दश्यां विधत्ते च ममार्चनम् ॥ २७५ ॥
शिवरात्रिकथा चेयं कृत्वा(?) शिवपुराणतः ।
स्मृतमात्रैव लुम्पन्ती दुरितं प्राग्भवार्जितम् ॥ २७६ ॥
सारं सारं गृहीत्वार्थं ग्रन्थेभ्यः कथिताः कथाः ।
श्रद्धाभक्ती समालम्ब्य तथ्यातथ्यं सुमेधसा ॥ २७७ ॥

शिवरात्रिफलं तेषु शास्त्रेषु विततं स्थितम् ।
गुणं संक्षिप्तमुदितं ग्रन्थगौरवभीतितः ॥ २७८ ॥

चरितमिति विचिन्त्य चन्द्रमौलि-
र्भवविपदुद्धरणैकतानबुद्धेः ।
अभिलषति परं न यस्य चेतो
झटिति करं समुपैति तस्य सिद्धिः ॥ २७९ ॥

इति श्रीमहामाहेश्वरजयद्रथविरचिते हरचरितचिन्तामणौ नानाशास्त्रेभ्यः शिवरात्रिकथासंग्रहो नामैकत्रिंशत्तमः प्रकाशः ॥

---

द्वात्रिंशत्तमः प्रकाशः ।

ॐ श्रीमृत्युजिते नमः ॥

भोक्ता व्यक्तमुपैति हन्त शतधा भोग्यं च नानाविधं
भोग्यं भोक्तरि लीयते यदि ततो भोक्तुः स्फुटत्वं भवेत् ।
इत्यन्तर्विमृशन्स्वभावभरितावस्थामयो भैरवः
स्थेयांसं भवदिच्छया विगलिताशेषाभिलाषं नरः ॥ १ ॥

उपायैर्बहुभिः स्वल्पं फलं कुत्र न दृश्यते ।
स्वल्पोऽप्युपायो भूयिष्ठफलस्तु पथि शांकरे ॥ २ ॥

सर्वाणि विद्यास्थानानि परामृश्य मुहुर्मुहुः ।
उत्पन्नाहंकृतिर्व्यासः कदाचिदिदमब्रवीत् ॥ ३ ॥

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न देवः केशवात्परः ॥ ४ ॥

इत्युक्त्वा वचनं व्यासः परं संतोषमाययौ ।
ततो नन्दिक्रोधवशाद्व्यासः स्तब्धभुजोऽभवत् ॥ ५ ॥

तच्छ्रुत्वा वचनं तस्य केशवो दर्शनं ददौ ।
उवाच वचनं हृष्टरोमाञ्चिततनूरुहः ॥ ६ ॥

कर्ताहं सर्वलोकस्य मम कर्ता महेश्वरः ।
तस्य देवाधिदेवस्य कर्ता कोऽपि न विद्यते ॥ ७ ॥

इत्येवं हरिवाक्येन व्यासो भक्तिपरायणः ।
उवाच परमप्रीतः शिवसंस्तवकारणम् ॥ ८ ॥
हरस्य पूजितं लिङ्गं यथा सर्वैः सुरासुरैः ।
ईशेन पूजितं कस्य वदन्तु प्रतिवादिनः ॥ ९ ॥
प्रत्यक्षेण प्रमाणेन लोकदृष्टेन हेतुना ।
शिष्टचीर्णेन मार्गेण श्रद्धा कस्य न जायते ॥ १० ॥
अद्यापि भारते वर्षे देवदेवस्य शूलिनः ।
रेतः पिबन्ति मोक्षार्थं गत्वा केदारपर्वतम् ॥ ११ ॥
देवदेवस्य यल्लिङ्गं तत्सुरैरपि पूजितम् ।
प्रभासे सोमराजेन महेन्द्रे वासवेन च ॥ १२ ॥
वाराणस्यां यमादित्यैः सुवर्णाख्ये च विष्णुना ।
पितामहेन महता पुष्करे पूजितः प्रभुः ॥ १३ ॥
शालंकायनपुत्रेण नन्दिना तुहिनाचले ।
आगोपालाङ्गना बालाः स्वेच्छया तेऽपि मोचिताः ॥ १४ ॥
गोकर्णे तु महातीर्थे रावणेन महात्मना ।
त्रैलोक्यं निर्जितं येन शंभोर्लिङ्गार्चनेन तु ॥ १५ ॥

यस्यांस्ति शक्तिरथ कश्चिदपि ब्रवीतु
स्तब्धां करोतु परमाङ्गुलिकां परो मे ।
कः पूजितो भगवता शशिशेखरेण
नाराधितो जगति भूतपतिः सुरैर्वा ॥ १६ ॥

किं वा न दृष्टं हि पितामहेन सुरासुरैर्वा मधुसूदनेन ।
क्षीरोदमन्थोत्थितकालकूटः कण्ठे कृतः केन हरं विहाय ॥ १७ ॥
एकेन दग्धुं त्रिपुरं शरेण कामोऽपि लालाटनिरीक्षणेन ।
भिन्नोऽन्धकः शूलधरेण येन कस्तेन साकं कुरुते विरोधम् ॥ १८ ॥
जलौघकल्लोलतरङ्गभङ्गा गङ्गा धृता केन जटाग्रभागे ।
पादाम्बुजाङ्गुष्ठनिपीडनेन पपात लङ्काधिपतिर्विसंज्ञः ॥ १९ ॥

सुरासुराणामपि यत्समक्षं विध्वंसितो दक्षमखः क्षणेन ।
दक्षेण लब्धं च फलं मखस्य यस्य प्रसादात्प्रणतेन पश्चात् ॥ २० ॥
सर्वज्ञपूजार्हमिवोत्तमाङ्गं संपूज्यते लिङ्गवरं हरस्य ।
अनेन पर्याप्तमतीव चित्रं प्रभुर्यदेवेच्छति तत्करोति ॥ २१ ॥
ब्रह्मात्र सिद्धो हरिरत्र लिङ्गे सुरासुराश्चापि तदर्चयन्ति ।
तथापि मूढा न विचारयन्ति को वाधिकोऽप्यस्ति समो हरेण ॥ २२ ॥
भगवन्तमुमाकान्तमाराधितवतः सुखम् ।
बहुनात्र किमुक्तेन वाक्प्रपञ्चेन भारत ॥ २३ ॥
न वज्राङ्को न चक्राङ्कः पद्माङ्कश्च न दृश्यते ।
लिङ्गाङ्कश्च भङ्गाङ्कश्च तस्मान्माहेश्वरं जगत् ॥ २४ ॥
इत्युक्तवति विश्वेशे प्रतिज्ञास्तोत्रमुत्तमम् ।
ऋषौ दयार्द्रचेतेन नन्दिना दर्शनं ददौ ॥ २५ ॥
न वज्रचक्राङ्कसरोरुहाङ्कं लिङ्गार्चितं पश्य जगद्भगाङ्कम् ।
हस्तप्रबद्धेन हि कङ्कणेन पश्यन्ति मूढाः किल नन्दिरुद्रम् ॥ २६ ॥
नन्दिरुद्रः परामृष्टमूर्धानं नमतो मुनेः ।
अथोवाच हसन्दत्तज्योत्स्नया स्नपयन्निव ॥ २७ ॥
महार्चनमयैर्वाक्यैस्तव प्रीतोऽस्मि संप्रति ।
अभ्यर्थयस्व तत्किंचिद्ददामि तदसंशयम् ॥ २८ ॥
इत्याकर्ण्य गिरं तस्य पाराशर्यो महामुनिः ।
स्पृशन्पादद्वयं मूर्ध्ना सप्रमोदमभाषत ॥ २९ ॥
अनास्थाभिनिवेशो मे भगवन्नभवच्चिरम् ।
नामापि न यदज्ञापि हन्त विश्वात्मनः प्रभो ॥ ३० ॥
इदानीं त्वत्प्रसादेन सर्वं प्राप्तं मया प्रभो ।
अन्यन्नाभ्यर्थ्यमस्तीति स्वात्मा किमपि तृप्यति ॥ ३१ ॥
अधिगम्य चतुर्वेदीं नेदीयानपि नेक्षितः ।
मया स्वात्मा शिवः स्वामिन्नन्यैस्तत्कथमीक्षते ॥ ३२ ॥

यावन्न शांकरं नाम प्रविष्टं श्रुतिमण्डलीम् ।
तावत्कथं देहवतां मोहरात्रिर्निवर्तते ॥ ३३ ॥
स्वल्पायुधः कालवशाद्धविष्यन्ति नराः प्रभो ।
तेषां ज्ञानविहीनानां भगवन्ब्रूहि का गतिः ॥ ३४ ॥
पराशरात्मजस्येति वाणीमाकर्ण्य तत्क्षणात् ।
उवाच करुणाराशिर्नन्दिरुद्रो मनोरमम् ॥ ३५ ॥
साधु साधु त्वया पृष्टं सावधानो भवाधुना ।
विश्वात्मनोपदिष्टं मे सर्वं वक्ष्यामि तच्च ते ॥ ३६ ॥
इदानीं पापबहुलः कलिकालः प्रवर्तते ।
तस्मिन्नुद्धरणायेशः कुलज्ञानमुपादिशत् ॥ ३७ ॥
कुलज्ञानस्य माहात्म्यं वक्तुं शक्नोति को मुने ।
सत्यमत्र विमुह्यन्ति विद्या विद्येश्वरा अपि ॥ ३८ ॥
तदत्र के वयं नाम प्रभोरिच्छैव कुत्रचित् ।
प्रवर्तयति दिव्यं या कुलज्ञानमनुत्तमम् ॥ ३९ ॥
लोभलौल्यमदक्रोधकाममोहजुगुप्सिते ।
हृदये कुलविज्ञानं न कदाचित्प्ररोहति ॥ ४० ॥
किमन्यत्प्राप्यते जातु कुलज्ञानरसायनम् ।
देवतासंनिधानेन द्वित्रैरेव न पञ्चषैः ॥ ४१ ॥
पारम्पर्यप्रवाहेण तेभ्यो येनैव गम्यते ।
तैरप्यनुष्ठानबलात्सुबलाः सर्वसंपदः ॥ ४२ ॥
तेषामालोकनान्मुक्तिः श्रवणात्स्मरणात्तथा ।
चराचरपरित्राता विश्वात्मा तेषु तिष्ठति ॥ ४३ ॥
ये पुनर्नाममात्रेण कुलज्ञानस्य गर्विताः ।
रागद्वेषादिविवशास्तेषां पापीयसी गतिः ॥ ४४ ॥
गतानुगतिकैरन्यैरात्मंभरिभिराश्रिताः ।
विघ्नः कुलज्ञानमिति प्रलापो नरकावहः[1] ॥ ४५ ॥

---

१. एतावत्पर्यन्तमेवास्माभिरयं ग्रन्थः समुपलब्धः. अतः परं कियानवशिष्ट इति न ज्ञायते.